इति प्राप्तेऽभिधीयते—

भावन्तु बादरायणोऽस्ति हि ॥ ३२ ॥

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान् बादरायणो मन्यते। अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवः। इदानीं ×वस्वादीनामपि सतां कल्पान्तरेपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति। अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते [1]"असौ वा आदित्यो देवमधु" इत्यारभ्य [2]"अथ तत ऊर्ध्व उदेत्य" इत्यतः प्रागादित्यवस्वादिकार्य्यविशेषावस्थं ब्रह्मोपास्यमुपदि-

* श्रुतप्रकाशिका *

॥ भावन्तु बादरायणोऽस्ति हि ॥ अक्षरार्थमाह ( आदित्येत्यादिना ) अर्थित्वसामर्थ्याभावं परिहरति ( अस्ति हीति ) स्वावस्थब्रह्मोपासनशब्देन कर्मकर्तृविरोधः परिहृतः। वस्वादित्वस्य प्राप्तत्वान्नार्थित्वसम्भव इत्यत्राह ( इदानीमिति ) उपासनस्य ब्रह्मपर्यन्तत्वे फलस्य ब्रह्मप्राप्तिपर्यन्तत्वे च प्रतिपाद्ये सति हि कर्मकर्तृविरोधाभावः प्राप्तफलत्वाभावश्च , तत्कथमित्यत्राह ( अत्र हीति ) आदित्यादिनामतद्रूपविशिष्टजीवशरीरकं ब्रह्म कार्यावस्थम् , तदुपासनं विहितमित्याह ( असौ वा इत्यादिना ) इदानीमादित्यादिनामरूपभाजोऽपि सृष्टेः पूर्वमादित्यादि नामरूपरहितजीवमात्रस्यान्तर्यामिब्रह्मकारणावस्थम् , तदुपासनं विधीयत इत्याह ( अथ तत ऊर्द्ध्व उदेत्येत्यादिनेति ) ब्रह्मोपासनं विहितञ्चेत् कथं तद्विरुद्ध-

❀ भावप्रकाशिका ❀

भाष्ये— स्वावस्थब्रह्मोपासनेनेति। स्वोपजीव्यरोहितादिपञ्चामृतावच्छिन्नब्रह्मोपासनसम्भवेनत्यर्थः । न तु वसव उपजीवन्तीत्यत्र वसुशब्दस्यैव वस्ववस्थब्रह्मपरत्वमिति मन्तव्यम् , तथार्थकल्पेन प्रमाणाभावात्. अप्राप्तार्थप्राप्त्यर्थं किञ्चि-

× वसूनाम्– पा० | १ छां. ३-१-१ ॥ | २ छां. ३-११-१ ॥

श्यते 'अथ तत ऊर्ध्व उदेत्य' इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मोपास्यमुपदिश्यते। तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति। [1]"न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद' इति कृत्स्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणात् ब्रह्मप्राप्तिपर्य्यन्तवस्वादित्वफलस्य श्रवणाच्च वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते; अत एवंविधमुपासनमादित्यवस्वादीनामपि सम्भवति। एवञ्च ब्रह्मण एवोपास्यत्वात् [2]' तं देवा ज्योतिषां ज्योतिः' इत्यप्युपपद्यते। तदाह–

* श्रुतप्रकाशिका *

फलश्रवणमित्यत्राह ( तदेवमिति ) उदाहृतवाक्ये कार्यकारणावस्थादित्यस्यैवोपासनं वस्वादित्वमात्रफलप्राप्तिश्च प्रतीयते, न त्वादित्यादिशरीरकब्रह्मोपासनं तत्प्राप्तिश्चेत्यत्राह ( न ह वा इति ) ब्रह्मोपनिषदं वेद– ब्रह्मविद्यां वेद, ब्रह्मोपासनं करोतीत्यर्थः। ओदनपाकं पचतीतिवत्। उपसंहरति ( अत एवमिति ) अब्रह्मोपासनपरत्वेन यैर्व्याख्यातं तन्मतादस्य प्रामाणिकत्वं दर्शयति ( तदाह वृत्तिकार इति)॥ परेऽन्ये च मध्वादिष्वसम्भवादित्यादिसूत्रत्रयं तदुपर्यपीत्यादिभिः

ꣷ भावप्रकाशिका ꣷ

दाश्रयणरूपस्योपजीवनस्य वस्ववस्थब्रह्मण्यसम्भवाच्च वसूनामेवैकोभूत्वेत्यत्रैकस्मिन् ब्रह्मणि बहुत्वसापेक्षनिर्द्धारणस्य वा उपासितुर्ब्रह्मभावापत्तेर्वा असम्भवाच्च; अत एवोत्तरत्र वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनमिति भाष्यमिति द्रष्टव्यम्। ( अब्रह्मोपासनपरत्वेन यैर्व्याख्यातमिति ) 'न ह वा असा उदेति

१ छां. ३-११-३। | २ बृ. ६-४-१६॥

* श्रुतप्रकाशिका *

सूत्रैरेकाधिकरणं मन्वाना एवं व्याचक्षते; ब्रह्मव्यतिरिक्तविषयेषु मध्वादिविद्याविशेषेषु अर्थित्वाद्यसम्भवात् सर्वासु विद्यास्वनधिकारं जैमिनिर्मन्यते. कथं क्वचिदनधिकारादन्यत्राप्यनधिकारः । न हि राजसूयानधिकारिणो ब्राह्मणस्य बृहस्पतिसवनाधिकार इति शङ्कायाम् आदित्यादिज्योतिषि मण्डलाद्याकारत्वादचेतने सवित्रादिशब्दप्रयोगसद्भावादग्न्यादीनां चाचेतनत्वात् मन्त्रार्थवादयोरन्यपरत्वेन विग्रहादिमत्त्वाभावेन च अर्थित्वसामर्थ्याभावान्नाधिकारः, इति सूत्रद्वयं व्याख्याय भावन्त्विति तृतीयसूत्रेण मन्त्रार्थवादयोरपि प्रतीयमानार्थे प्रामाण्योपपादनमुखेन अर्थित्वादिसद्भावाद्विद्याधिकारोऽस्तीत्युच्यत इति । तदयुक्तम्; वृत्तिकारानभिमतत्वात् अध्याहारसापेक्षत्वात् अपेक्षितार्थपरीक्षणायोगात्कृतकरत्वप्रसङ्गादधिकरणान्तरवैरूप्याच्च । तत्र वृत्तिकारानभिमतिर्भाष्ये कण्ठोक्त्या दर्शिता, तत्र हेतुरितरहेतुजातम्, असम्भवान्मध्वादिष्वनधिकारं मन्यत इति अनध्याहारेण योजनासम्भवेऽपि मध्वादिष्वसम्भवात्कुत्रानधिकार इत्यपेक्षायां सर्वासु विद्यास्वप्यनधिकार इत्यध्याहारेण योजनाऽनुपपन्ना । 'सकृद्दिवा हैवास्य भवति य एतामेवं ब्रह्मोपनिषदं वेद'' इति ब्रह्मविद्यात्वं तदनुगुणफलं चावगम्यते, वस्वादीनामुपास्यत्वं च प्रतीयते, कथमिदं घटते इति व्युत्पन्नशब्दस्य संशयो भवति, तस्मादियमब्रह्मविद्या वा ब्रह्मविद्या वेति निरूपणमपेक्षितम्, तस्यानिरूपितत्वात् बुभुत्सितापरीक्षणं स्यात् । तदुपर्यपीति सूत्रेणैव मन्त्रार्थवादयोर्विग्रहादावप्रामाण्यस्य परिहृतत्वेन ज्योतिषीत्यादिसूत्रद्वयस्यान्यपरत्वशङ्कापरिहारपरत्वेन व्याख्यानस्य कृतकरत्वं च स्यात्, सम्भवादित्युक्तस्यार्थित्वादिसम्भवरूपस्य हेतोरसम्भवव्युदासाधीनात्मलाभत्वादाद्यसूत्रेण परिहृतत्वमवगम्यते । अनन्तरमेव युगपदनेकत्र सन्निधिविरोधादिपरिहारश्च विग्रहादिसिद्धिनिबन्धनत्वादन्यपरत्वस्य परिहृतत्वमवगमयति । यद्याद्यसूत्रेणासम्भवशङ्कापरिहारौ न विवक्षितौ तर्हि तच्छङ्कापरिहारपरेण ज्योतिषीत्यादिसूत्रद्वयेनाद्यसूत्रानन्तरेण भवितव्यम्, स्वपक्षसाधकोपन्यासानन्तरमेव तदौस्थ्यशङ्कापरिहारस्या-

* भावप्रकाशिका *

न निम्रोचति' इति ब्रह्मप्राप्तिकथनं वस्वादिभावद्वारा क्रममुक्तिपरम्, ब्रह्मोपनिषच्छब्दोपि वेदोपनिषत्पर इति व्याख्यानं क्लिष्टार्थकत्वादनादरणीयमित्यर्थः ।

**वृत्तिकारः [1]"अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वात्" इति ॥ ३२ ॥**

* श्रुतप्रकाशिका *

धिकरणान्तरेष्वपि दृश्यमानत्वात्, यथा 'ईक्षतेर्नाशब्दम्' 'गौणश्चेन्नात्मशब्दात्' यथा 'ज्योतिश्चरणाभिधानात्' 'छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमा'दिति, 'आनुमानिकमप्येकेषा'मिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च 'सूक्ष्मन्तु तदर्हत्वात्' इति च; ततो भिन्नाधिकरणत्वं युक्तम्। अधिकरणभेदमभ्युपगम्य वसुसमुदायस्योपास्यत्वम् एकैकवसोरुपासकत्वं रुद्रादिष्वप्येवं समुदायप्रत्येकभेदादुपास्योपासकभावः, उपास्यत्वं च वस्वादिभोग्यादित्यांशमात्रस्य, न तु ब्रह्मणः, फलं च वस्वादित्वमात्रमिति कैश्चिदुक्तम् । तदपवर्गरूपफलब्रह्मोपनिषत्त्वश्रवणविरुद्धत्वात् वृत्तिकारस्यानभिमतमित्यनादरणीयम्। ननु 'तदुपर्यपि' 'मध्वादिष्वसम्भवा'दित्यधिकरणद्वयेन किं प्रयोजनम्? देवानां देवताविशेषाणां च अर्थित्वसामर्थ्यसम्भवनिर्णयान्न मनुष्याणां प्रयोजनम्,

छ भावप्रकाशिका छ

( उपास्यत्वं च वस्वादिभोग्यादित्यांशमात्रस्येति ) नच वसुसमुदायस्योपास्यत्वमिति पूर्वग्रन्थविरोध इति वाच्यम्; भोक्तृत्वेन वस्वादिसमुदायस्योपास्यत्वं भोग्यत्वेनादित्यांशस्योपास्यत्वमिति विरोधाभावात् । (तथानुसन्धानमेव प्रयोजनमितीति) ननु यद्विद्याप्रकरणे देवोपास्यत्वदेवफलप्रदत्वादिकं न श्रुतम्, न तत्र तस्यानुसन्धेयत्वम्. यत्र तु श्रुतं तत्र देवताविग्रहादिप्रसाधनाभावेपि देवतोपास्यत्वं सम्भवत्येवेति देवोपास्यत्वानुसन्धाने इदमधिकरणद्वयं कथमुपयुज्यतामिति चेत्, सत्यम्; अनारोपितदेवोपास्यत्वानुसन्धानार्थमिदं निरूपणमिति द्रष्टव्यम्। इदमप्युपलक्षणं देवतानामसिद्धौ मधुविद्यादीनां तत्तद्देवताफलप्राप्तिः फलं न भवेत्। वरुणग्रहनिर्मोकादिवत् बाधितस्य श्रुतत्वेपि विधेयक्रियाफलत्वायोगात्, किन्त्वन्यदेव फलं कल्प्यं स्यात्। अन्तरादित्यविद्यादिषु आदित्यादिदेवताद्यन्तर्वर्त्तित्वेन ब्रह्मोपासनं न सिद्ध्येत्। ज्योतिर्मण्डलाद्यन्तर्वर्तित्वेनैव तदुपासनं सिध्येत्. उपकोसलविद्यायां पञ्चाग्निविद्यायां च अर्चिराद्यभिमानिदेवताविशेषा-

[1] बोधायनवृत्तिः ॥

## शुगस्य तदनादरश्रवणात्तदाद्रवणा-
## त्सूच्यते हि ॥ ३३ ॥

९ अधिकरणम्

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति न वेति विचार्य्यते; किं युक्तम् ? अस्तीति । कुतः ?

* श्रुतप्रकाशिका *

तेन विनाप्यमीषामुपासनोपपत्तेः । न च देवानां किमपि प्रयोजनम् , तेषां स्वकीयपटुतरदेहादिमत्त्वे अर्थित्वसद्भावे चाधिकरणन्यायनिरपेक्षनिर्णयकत्वादिति । उच्यते ; परं ब्रह्म सामान्येन देवानामप्युपास्यं फलप्रदञ्च देवताविशेषाणामप्युपासनविशेषैरुपास्यं फलविशेषप्रदञ्चेत्येवंविधैश्वर्यविशिष्टत्वेन मनुष्यैरुपासकैर्ब्रह्मणोऽनुसन्धेयत्वात्तथानुसन्धानमेव प्रयोजनमिति ॥ ७ ॥ ७ ॥ ७ ॥

॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ मनुष्यव्यतिरिक्तवस्वादिदेवताविशेषाणामर्थित्वसामर्थ्यसम्भवादधिकारोऽस्तीत्युक्तम् । अथार्थित्वसामर्थ्ययोः प्रयोजकत्वे मनुष्यविशेषाणां शूद्राणामप्यधिकारः स्यादिति शङ्कया सङ्गतिरित्याह (ब्रह्मविद्यायामिति) किं ब्रह्मविद्यायां शूद्रस्याधिकारोऽस्ति, न? इति विचारः। तदर्थं तस्य तदुपसंहारसामर्थ्यमस्ति नेति । किं ब्रह्मविषयमनोवृत्तिरूपा ब्रह्म-

७ भावप्रकाशिका ७

मार्गपर्वत्वेन न चिन्तनीयास्स्युः, अर्चिरादीन्यचेतनान्येव तथा चिन्तनीयानि स्युः । तथा 'तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेति भक्षयन्त्येवमेनांस्तत्र भक्षयन्ति यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्ति एकस्मिन्नेव पशावादीयमाने अप्रियं भवति किमु किमु बहुषु तस्मादेषां न प्रियं वदेत मनुष्या विद्युः' इत्यादिश्रुतिषु कर्मदेवभावं प्राप्तानां तमप्राप्तानां च मनुष्याणां यावज्जीवमाजानदेवभृत्यभावोक्त्या वैराग्यं न सिध्येत् । एतादृशस्याभिमतस्य सिद्धिः प्रयोजनं देवतासद्भावप्रधानस्य । "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत" इत्यादिमन्त्रार्थवादवैराग्यसिद्धिश्च फलमित्यपि द्रष्टव्यम् ॥

( सङ्गतिरित्याहेति ) सङ्गतिरित्यभिप्रयन्नाहेत्यर्थः । ( तदुपसंहारेति ) उप-

**अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य, शूद्रस्यापि तत्स-म्भवात्। यद्यप्यग्निविद्यासाध्येषु कर्म्मस्वनग्निविद्यत्वा-**

* श्रुतप्रकाशिका *

विद्याऽनधीतवेदस्यापि सम्भवति, नेति । किं वेदादेव ब्रह्मावगतिः, उत इतिहासपुराणाभ्यामपि सम्भवतीति । किं तयोर्वेदोपबृंहणं कुर्वतोरेव ब्रह्मावगतिहेतुत्वम्, उत स्वातन्त्र्येणेति । किं जानश्रुतेः शूद्रेत्यामन्त्रणमितिहासपुराणयोर्निरपेक्षब्रह्मावबोधकत्वमुपोद्बलयति, नेति। किं तत्र शूद्रशब्दो रूढ्या जातिपरः? उत यौगिकतया शोकवत्परः? इति। यदा रूढः तदा शूद्रशब्दस्य इतिहासपुराणयोर्नैरपेक्ष्योत्तम्भकतया तयोः स्वातन्त्र्येण ब्रह्मावगतिहेतुत्वात् ब्रह्मविषयस्मृतिसन्ततिरनधीतवेदस्यापि सम्भवतीति सामर्थ्यलाभाच्छूद्रस्याप्यधिकारस्सम्भवततीति पूर्वः पक्षः। यदा शूद्रशब्दो यौगिकस्तदा शूद्रेत्यामन्त्रणस्य इतिहासपुराणयोर्ब्रह्मावबोधननैरपेक्ष्यानवगमकतया स्वातन्त्र्येण ब्रह्मावबोधकत्वाभावाद्वेदादेव ब्रह्मावगतिरित्यनधीतवेदस्य तदसम्भवेन सामर्थ्याभावान्न ब्रह्मोपासनाधिकार इति राद्धान्तः। ननु कर्मकाण्डापशूद्राधिकरणे शूद्रस्य वैदिकसर्वकर्मस्वनधिकार उक्तः, तत्कथमत्र तत्सम्भव इत्यत्राह (यद्यपीति) विद्या—वेदविद्या, अध्ययनम्।

* भावप्रकाशिका *

संहारः— अनुष्ठानम्। (नैरपेक्ष्योत्तम्भकतयेति) ननु शूद्रेत्यामन्त्रणपूर्वकमितिहासपुराणश्रवणादर्शनेन कथं तस्य नैरपेक्ष्योत्तम्भकत्वम्? अतः शूद्रेत्यामन्त्र्य ब्रह्मविद्योपदेशात् शूद्रेत्यामन्त्रणं शूद्रस्य ब्रह्मविद्याधिकारे साक्षादेव लिङ्गमित्येव सुवचमिति चेत्. सत्यम्; मार्गान्तरस्य मार्गान्तरादूषकत्वात्तथोक्तमिति द्रष्टव्यम्। (वेदादेव ब्रह्मावगतिरिति) ब्रह्मविद्यानुष्ठानोपयुक्तब्रह्मावगतिरित्यर्थः। एवमुत्तरत्रापि इतिहासपुराणादिना ब्रह्मावगतिमात्रस्य सिद्धान्तिनापि प्रत्याख्यातुमशक्यत्वादिति द्रष्टव्यम्। विद्याशब्दं व्याचष्टे (विद्या—वेदविद्येति) अत्राध्ययनमिति क्वचित्पाठो दृश्यते स तु लेखकस्खलनकृतः। अध्ययनजन्यस्य कर्मानुष्ठानौपयिकाङ्गकलापादिज्ञानस्य वा वेदस्य वा विद्याशब्देन ग्रहणार्हतया अध्ययनस्य विद्याशब्देन ग्रहणानर्हत्वादिति द्रष्टव्यम्। यद्वा विद्याभावादित्यस्य अध्ययनसंस्कृतविद्याराहित्यद्योतनायाध्ययनपदमुपात्तम्। अग्नि-

च्छूद्रस्यानधिकारः , तथापि मनोवृत्तिमात्रत्वाद्ब्रह्मोपासनस्य तत्राधिकारोऽस्त्येव . शास्त्रीयक्रियापेक्षित्वेऽप्युपासनस्य तत्तद्वर्णाश्रमोचितक्रियाया एव अपेक्षितत्वाच्छूद्रस्यापि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति । [1]"तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः"

* श्रुतप्रकाशिका *

अग्निः— आहितः । परिहरति ( तथापीति ) ननु विद्यायाः कर्माङ्गकत्वं वक्ष्यते तत्कथं साङ्गब्रह्मविद्यायां सामर्थ्यमित्यत्राह ( शास्त्रीयेति ) ननु " तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः " इत्यत्र यज्ञग्रहणस्योपलक्षणार्थत्वाद्विद्यायामप्यनधिकारस्सिध्यति, न ह्यसावर्थः श्रुत्यैकसमधिगम्यः, येन यावद्वचनता स्यात् परिसंख्या वा, किन्तु न्यायसिद्धः । न्यायश्च अग्निविद्यासाध्येषु अनग्निविद्यस्याधिकारानुपपत्तिरूपः कर्मोपासनसाधारणः, अतोऽनधिकार इत्यत्राह ( तस्माच्छूद्र इति )

७ भावप्रकाशिका ७

शब्दं व्याचष्टे ( अग्निः— आहित इति ) आधानसंस्कृताहवनीयादिरित्यर्थः । अत्र क्रमस्याविवक्षितत्वादग्निविद्याशब्दयोर्व्युत्क्रमेण व्याख्यानं न दोष इति द्रष्टव्यम् । ( ननु तस्माच्छूद्र इति ) ननु कथमस्याश्शङ्काया उत्थानं प्रागेव साक्षात् परम्परया वा ब्रह्मोपासने अग्निविद्यासाध्यत्वस्य निरस्तत्वादिति चेत् . अत्र केचित्—'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इतिवाक्यस्य शूद्रे अग्निविद्यासाध्ययज्ञमात्रानधिकारप्रदर्शकत्वे तस्यापशूद्राधिकरणन्यायसिद्धत्वेन वाक्यवैफल्यप्रसङ्गात् । यज्ञेऽनवक्लृप्त इतिवाक्यं कर्मविद्यासाधारण्येन वैदिककर्ममात्रे शूद्रस्याधिकारनिषेधपरं किं न स्यात् ? इत्याशङ्क्य प्राप्तार्थप्रतिपादकस्य वाक्यस्य वैफल्यप्रसङ्गेन तस्य लक्षणया अप्राप्तार्थप्रतिपादकत्वेऽभ्युपगम्यमानेऽनुवादमात्रोच्छेदप्रसङ्गात् । 'ये पुरोदञ्चो दर्भाः' इतिवाक्यस्याग्रवन्त्युगग्राणीति स्मृतिप्राप्तानुवादित्ववत् 'शूद्रो यज्ञेऽनवक्लृप्तः' इतिवाक्यस्याप्यपशूद्राधिकरणन्यायप्राप्तार्थानुवादित्वमेव वक्तव्यमित्यभिप्रयन्नाह— तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इत्यत्रेति । एवं भाष्यग्रन्थावतारिकामाहुः । ( याव-

१ यजु—का— ७-१-१-१ ॥

इत्यप्यग्निविद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धोऽनूद्यते। नन्वनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपतदुपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं सम्भवति? उच्यते; अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापीतिहासपुराणश्रवणेनापि ब्रह्मस्वरूपतदुपासनज्ञानं सम्भवति। अस्ति च शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा [1]"श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः"

* श्रुतप्रकाशिका *

सत्यमसावनुवादः, नैतावता ब्रह्मविद्यानधिकारः, अग्निविद्यासाध्यकर्म्मविषयत्वान्न्यायस्य। यज्ञादिकर्मणामेव अग्निविद्यासाध्यत्वात् ब्रह्मविद्यायास्तन्निरपेक्षत्वाच्चेत्यर्थः। अत्रार्थाद्धेन्तत्वरं चोक्तं भवति, यज्ञाधिकारो नास्तीत्यनेन उपासनाधिकारोऽनुमतो भवतीत्यभिप्रायेण यज्ञादिकर्मानधिकार एवेत्युक्तम्। (न्यायसिद्धोऽनूद्यत इति) कर्मकाण्डापशूद्राधिकरणन्यायसिद्ध इत्यर्थः। माभूदग्नि[विद्या]साध्ययज्ञापेक्षा ब्रह्मविद्यायाः, तथाप्यध्ययनसाध्यवेदजन्यज्ञानापेक्षास्तीति चोदयति (नन्विति) (श्रावयेदिति) प्रयोज्याभावे प्रयोजकासिद्धेः प्रयोज्योपादानमर्थसिद्धमिति भावः। न च "अन्नाद्यकामं याजयेत्" इतिवत् प्रयोज्यव्यापारविधिः, अधिकारविशेषाश्रवणात्; एतदभिप्रायेण इतिहास-

छ भावप्रकाशिका छ

द्वचनता स्यादिति) श्रुत्यैकसमधिगम्योऽस्यार्थो यथाश्रुति प्रतिपत्तव्यः। अयन्तु न्यायसिद्धोऽर्थः, ततश्च मूलभूतन्यायस्य यावद्विषयकत्वं तावद्विषयकत्वं मूलेनापि वाक्यस्य वक्तव्यमिति भावः। (परिसङ्ख्या वेति) यज्ञ एवानक्लृप्त इत्येवं परिसङ्ख्या वा नेत्यर्थः। (उपासनाधिकारोऽनुमतो भवतीति) अप्रतिषिद्धमनुमतमितिन्यायादिति भावः। ननु श्रावयेदिति ब्राह्मणस्य श्रावणानुज्ञायां सत्यामपि शूद्रस्य श्रवणानुज्ञाया अदर्शनात्कथमेतदित्यत आह (प्रयोज्याभाव इति) (प्रयोज्योपादानमर्थसिद्धमिति) श्रावणविधिना सर्वे वर्णाः शृणुयुरिति श्रवणविधिराक्षि-

1 भारते-शान्त-मोक्ष.॥

* श्रुतप्रकाशिका *

पुराणश्रवणानुज्ञेत्युक्तम् । यदा चैवं सिद्धं श्रवणं तदा सामर्थ्याद्विचारोऽपि सिद्धः, इतिहासपुराणयोस्संशयविपर्ययग्रस्तत्वे सति सम्यङ्निश्चयानुपपत्तेः, अतो निरपवादश्शूद्रस्याप्यधिकारो ब्रह्मविद्यायाम् । न च वाच्यं यज्ञादिकर्मणामपीतिहासपुराणेषूपदिश्यमानत्वात्तत्रापि शूद्राधिकारप्रसङ्ग इति । कर्मणामितिहासपुराणेषु सामान्यतः कीर्तनेपि विशेषोपदेशाभावाद्वैदिकेषु विशेषोपदेशेषु शूद्रस्यानधिकारस्थितेरिति । यदि ब्रूयात् नेदमितिहासपुराणविषयं श्रवणानुज्ञानमर्थज्ञानावधिकम्, किन्तु ''श्मशानवच्छूद्रपतितौ'' इति प्रतिषिद्धस्य समीपपाठस्य प्रतिप्रसवमात्रमिति । तन्न; ''य इदं शृणुयान्नित्यम्'' 'इत्युपक्रम्य 'शूद्रस्सुखमवाप्नुयात्' इति श्रवणफलनिर्देशात् । श्रवणकीर्तने हि यथायोग्यमन्वीयेते '' शूद्रयोनावहं जातो

* भावप्रकाशिका *

1 प्यत इति भावः । ( प्रयोज्यव्यापारविधिरिति ) 'यथा अन्नाद्यकामं याजयेत्' इत्यत्र याजनं न विधीयते, रागप्राप्तत्वात्; किन्तु यजनमेव । एवं श्रावयेदित्यत्रापि श्रावणस्य रागप्राप्तत्वात् श्रवण एव विधिः, अतो न श्रवणस्यार्थसिद्धत्वमिति शङ्कार्थः । ( अधिकारविशेषाश्रवणादिति ) यद्यपि चतुरो वर्णानिति वर्णरूपाधिकारिविशेषेण श्रवणमस्ति, तथापि अन्नाद्यकामं याजयेदित्यत्र याजनस्य रागप्राप्ततया विधानासम्भवेन यजनविधिपरत्वेन श्रावणस्य 'न चास्योपदिशेद्धर्मम्' इत्यादिना प्रतिषिद्धस्य 'श्रावयेच्चतुरो वर्णान्' इत्यस्य प्रतिप्रसवरूपत्वसम्भवे तत्परित्यागेन श्रवणविधिमात्रपरत्वस्यान्याय्यत्वादिति भावः । ( एतदभिप्रायेणेति ) श्रावणविध्याक्षिप्तश्रवणविधिविषयत्वाभिप्रायेणेत्यर्थः । नन्वस्तु श्रवणम्, अथाप्युपासनोपयुक्तनिश्चयरूपज्ञानस्य विचारमन्तरेणेतिहासपुराणश्रवणमात्रेणासिद्धेः शूद्रस्य विचारप्रयोजकाभावात् कथं सामर्थ्यमित्याशङ्क्येतिहासपुराणश्रवणस्य दृष्टार्थत्वेनानुष्ठानौपयिकज्ञानार्थतया तस्य तद्विचारमन्तरेणासिद्धेः त्रैवर्णिकानां वेदान्तविचारवच्छूद्रस्येतिहासविचारस्सिध्यतीत्यभिप्रयन्नाह ( यदा चैवमिति ) शङ्कते ( यदि ब्रूयादिति ) तदा किमुत्तरमिति चेदित्यध्याहृत्य योजना द्रष्टव्या । ( श्रवणफलनिर्देशादिति ) अविहितस्य श्रवणस्य फलश्रवणासम्भवात् श्रवणे विधिरभ्युपगम्य इति भावः । तर्हि शूद्रस्य कीर्तनमपि स्यादिति शङ्कां वारयति ( श्रवणकीर्तने हीति ) ननु फलनिर्देशान्य-

इत्यादौ । दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः । तथोपनिषत्स्वपि संवर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते– शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्कः शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति [१]"आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः" इत्यादिना । अतः शूद्रस्याप्यधिकारः सम्भवति ॥

इति प्राप्ते उच्यते– न शूद्रस्याधिकारः सम्भवति, सामर्थ्याभावात् ; नहि ब्रह्मस्वरूपतदुपासनप्रकारम-

* श्रुतप्रकाशिका *

नातोऽन्यद्वक्तुमुत्सहे" इत्युक्तम् । हेत्वन्तरमाह ( दृश्यन्ते चेति ) कर्मकाण्डेऽपशूद्राधिकरणेऽनधिकारो निर्णीतश्चेत्किमत्र चिन्तनीयमिति शङ्कायां ब्रह्मोपासनेऽपशूद्राधिकरणन्यायप्रवृत्तौ तत्रापरिहृतामधिकयुक्तिमाह ( तथोपनिषत्स्वपि संवर्गेति ) ॥

राद्धान्तमारभते ( इतिप्राप्त इति ) संवर्गविद्यावाक्यगतशूद्रशब्दनिर्वाह एव सौत्रः । अन्यत्पूर्वपक्षहेतुजातं सूत्रकाराभिप्रेतं स्वयमुपन्यस्तं प्रथमं व्युदस्य पश्चात्सूत्रमवतारयिष्यन् प्रथमं पूर्वपक्षहेतून् प्रतिक्षिपति ( न शूद्रस्येत्यादिना ) सामर्थ्याभावमुपपादयति ( नहीति ) अर्थित्वं ह्यस्तीत्यत्राह ( अस-

ಌ भावप्रकाशिका ಌ

थानुपपत्त्या अस्तु श्रवणस्य विधेयत्वम्, नैतावतार्थज्ञानफलकत्वसिद्धिः, नामसहस्रमात्रश्रवणफलनिर्देशतयाप्युपपत्तेरितिचेन्न ; श्रवणस्य फलनिर्देशान्यथानुपपत्त्या विधेयत्वसिद्धौ श्रवणस्य ज्ञानरूपदृष्टार्थत्वे सम्भवति पापक्षयरूपादृष्टार्थत्वकल्पनाया अन्याय्यत्वादर्थज्ञानपर्यन्तत्वमिति भावः । ( अनधिकारो निर्णीतश्चेदिति ) अध्ययनगृहीतवेदजन्यज्ञानस्यैव वैदिककर्मानुष्ठानोपयुक्तत्वं नेतरस्येति पूर्वतन्त्रापशूद्राधिकरण एव निर्णीतत्वादित्यर्थः । ( अपशूद्राधिकरणन्यायप्रवृत्ताविति) युक्तिमाहेत्यन्वयः । (तत्रापरिहृतामिति) पूर्वतन्त्रापशूद्राधिकरणे अपरिहृतामित्यर्थः । निर्वाह एव सौत्र इत्यस्यानन्तरं तस्मादिति शेषः पूरणीयः ।

१ छां. ४-२-५ ॥

# जानतस्तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्योपासनोपसंहारसामर्थ्यसम्भवः, असमर्थस्य चार्थित्वसद्भावेऽप्यधिकारो न सम्भवति; असामर्थ्यं च वेदाध्ययनाभावात्; यथैव हि त्रैवर्णिकविषयाध्ययनविधि-

* श्रुतप्रकाशिका *

मर्थस्य चेति ) उपासनोपायश्रवणधारणादिक्षमत्वलक्षणं सामर्थ्यं तस्यापि लोकसिद्धमित्यत्राह ( असामर्थ्यञ्चेति ) अलौकिकसामर्थ्याभावादित्यर्थः । ब्रह्मोपासनविधिना शूद्रस्याप्यधिकारः कल्प्यः, यथा रथकारादीनां विधिबलेन तत्तत्कर्माधिकारस्तदपेक्षितमन्त्राध्ययनाधिकारश्च सिध्यतीत्यत्राह ( यथैव हीति )

* भावप्रकाशिका *

( अलौकिकसामर्थ्याभावादिति ) अध्ययनगृहीतस्वाध्यायजन्यज्ञानरूपशास्त्रीयहेत्वभावादित्यर्थः । भाष्ये— यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसम्पाद्यज्ञानलाभेनेति । ननु स्वाध्यायाध्ययनविधौ त्रैवर्णिकोऽधिकारी न श्रूयत इति चेत्. सत्यम्; अध्ययनविधौ त्रैवर्णिकोऽधिकारी न निर्दिष्टः; तथाप्युपनयनविधौ 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्' इति त्रैवर्णिकाधिकारित्वश्रवणात् त्रयाणामेव वर्णानामुपनयनमिति सिद्धम् । ततश्च स्वाध्यायविधिरनिर्दिष्टकर्तृकः कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान् किमर्थं वयमाचार्यसमीपं नीता इति प्रयोजनमपेक्षमाणान् ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वन् तेषामेवाध्ययनं विधत्ते, न शूद्रस्येति . अध्ययनविधेरपि त्रैवर्णिकविषयत्वं युज्यत इति द्रष्टव्यम् । अत्र विधिसिद्धत्वं स्वाध्यायस्य विशेषणम्, न तु तत्सम्पाद्यज्ञानस्य, सिद्धान्ते अध्ययनविधेरक्षरराशिग्रहणमात्रविश्रान्तत्वेनार्थज्ञानफलकत्वाभावात्, नन्वध्ययनविधेरर्थज्ञानपर्यन्तत्वे हि वर्णविशेषादिग्रहणमन्तरेण अविशेषप्रवृत्ता अपि वैदिककर्मविधयः कर्मानुष्ठानार्थमनुष्ठेयार्थज्ञानं नाक्षिपन्ति, यथा क्रतुविधयो याजकानपेक्षमाणाः स्ववर्णोचितद्रव्यार्जनोपाय इति याजने स्वत एव प्रवृत्तान् ब्राह्मणानासाद्य निर्वृण्वन्ति. नत्वध्ययनवत्त्वेपि क्षत्रियवैश्ययोर्याजकत्वमाक्षिपन्ति । ततश्च 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेदिति द्रव्यार्जनोपायनियमविधिबलाद्ब्राह्मणानामेवार्त्विज्यमिति . नियमः,

## सिद्धस्वाध्यायसम्पाद्यज्ञानलाभेन कर्मविधयो ज्ञानतदुपायादीनपरान्न स्वीकुर्वन्ति; तथा ब्रह्मोपासन-

---

* श्रुतप्रकाशिका *

ज्ञानतदुपायादीनित्यादिशब्देन अध्ययनव्रतोपनयनादय उच्यन्ते। अपरान्— अत्रैवर्णिकगतान् ज्ञानतदुपायादीन्नापेक्षन्त इत्यर्थः। विधयः स्ववैयर्थ्यपरिहाराया-

* भावप्रकाशिका *

तथा अध्ययनविधिबलादध्ययनलब्धानुष्ठेयार्थज्ञानवतामेव वैदिककर्मानुष्ठानमिति नियमलाभ इति शक्यते वक्तुम्, अध्ययनविधेरक्षरराशिग्रहणमात्रविश्रान्तत्वे कस्यापि विधिलब्धज्ञानस्याभावात् ज्ञानाक्षेपस्य च सर्वत्र सम्भवात् कथमपशूद्रानधिकारस्स्यादिति चेत्. सत्यम्; अस्मन्मते ज्ञानं न विधिसिद्धमिति; अथापि हेतुसाकाङ्क्षं कर्मानुष्ठानौपयिकं ज्ञानं प्रयोजनान्तरासंयुक्तं प्रयोजनसाकाङ्क्षमध्ययनसंस्कृतं स्वाध्यायमेव हेतुतया स्वीकरोति, न तद्व्यतिरिक्तं ज्ञानोपायान्तरम्; ततश्चाध्ययनजन्यज्ञानमेव क्रत्वङ्गमिति पर्यवस्यति. यथा विहाराधिकरणे असंयुक्तोत्पन्नानामाधाननिष्पाद्याहवनीयादीनां प्रयोजनसाकाङ्क्षाणां लौकिकेष्वपि पचनप्रकाशनेषु विनियोगोऽभ्युपगन्तव्य इति पूर्वपक्षः प्रवर्तितः। तेन न्यायेनाध्ययनसंस्कृतस्वाध्यायस्य प्रयोजनसाकाङ्क्षस्य हेतुसाकाङ्क्षे कर्मौपयिकज्ञाने विनियोग इति सिध्यति, ततश्चाधीतवेदानामेव त्रैवर्णिकानां कर्मस्वधिकार इति सिद्धौ न सिद्धान्तेऽनुपपत्तिः। (अध्ययनव्रतोपनयनादय उच्यन्त इति) अध्ययनाङ्गं व्रतमध्ययनव्रतम्, अध्ययनस्योपायशब्देनोपात्तत्वादिति द्रष्टव्यम्। यद्वा उपायशब्दो वेदपरः, आदिशब्देनाध्ययनं गृह्यत इत्यभिप्रेत्यैतदुक्तमिति द्रष्टव्यम्। अत्र चोपनयनपदं लेखकप्रमादादागतम्. ब्राह्मणादिवर्णमात्रविषयतया श्रुतस्योत्पन्नस्योपनयनस्य शूद्रे आक्षेपाप्रसक्तेः। अपशूद्राधिकरणे हि द्वेधा पूर्वपक्षो वर्णितः। अनारभ्याधीतमप्यध्ययनं क्रत्वनुष्ठानौपयिकज्ञानोपयोगित्वात्क्रत्वङ्गम्, क्रतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाः चतुर्णामध्ययनं प्रयुञ्जते, तत्र च त्रयाणामुपनयनसंस्कारोऽध्ययनाङ्गतया विधीयते. चतुर्थस्तु संस्कारविध्यभावादनुपनीत एव स्वयमेवोपगम्याधीत्य विद्यां लभताम्, अथवा अनारभ्याधीतमध्ययनं पुरुषार्थमेव, न क्रत्वङ्गत्वम्, अतस्तदभावेपि क्रतोर्वैगुण्याभावादनधीतवेद एव शूद्रः

विधयोऽपि ; अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वाच्छूद्रस्य ब्रह्मोपासनसाम-

* श्रुतप्रकाशिका *

नुष्ठातृसापेक्षास्सन्तोऽनुष्ठानस्य ज्ञानपूर्वकतया ज्ञानतद्धेतुभूताध्ययनव्रतोपनयनादीनपेक्षन्ते, तत्रानन्यार्थं स्वयं क्लेशसाध्यतया प्रयोजनसाकाङ्क्षं सन्निहितत्रैवर्णिकगतज्ञानं क्लृप्तत्वात् कर्मविधिभिस्सम्बध्यते, तेन कर्मविधयोऽत्रैवर्णिकगतज्ञानादिनिरपेक्षत्वात्तदधिकारं न कल्पयन्ति ; एवं ब्रह्मोपासनविधयोऽपि त्रैवर्णिकगताध्ययनसिद्धानन्यार्थसाकाङ्क्षज्ञानतो लब्धानुष्ठानतयाऽन्यथासिद्धत्वान्न शूद्राधिकारं कल्पयन्ति, अनन्यथासिद्धं हि कल्पकम् । किञ्च अध्ययनस्यापि प्रयोजकतया कल्पनागौरवं स्यात् । "रथकारोऽग्नीनादधीत" इति विधिरध्ययनसिद्धज्ञानत्रैवर्णिकैरनिर्वृत्तानुष्ठानतया अनन्यथासिद्धत्वादधिकारं कल्पयतीति वैषम्यम् । किञ्च रथकारादीनां 'रथकारोऽग्नीनादधीत' इति विधिवाक्येनैवाधिकारित्वेन विशेषतः श्रुतत्वात्तदपेक्षितमन्त्रभागाध्ययनाधिकारमात्रं कल्प्यम्, इह तु विशेषतः शूद्राद्युद्देशेनोपासनविधानाभावादुपासनाधिकारस्तदौपयिकाध्ययनाधिकारश्च कल्प्य इति गौरवं स्यात्, अतोऽनधिकार इति । संवर्गविद्यायां शूद्रशब्दश्च नोपासनाधिकारज्ञापकः, रथकारादिशब्दवद्विधिवाक्यगतत्वाभावात्. तथा सति ह्यधिकारः कण्ठोक्तः स्यात् . शूद्रशब्दो ह्यर्थवादगतः ; नन्वर्थवादस्यापि स्वार्थे प्रामाण्यमुक्तम् । सत्यम् ; तत्तु बाधकाभावे सति भवति, वैदिकविधीनामध्ययनसिद्धस्वाध्यायजन्यज्ञानसापेक्षत्वं बाधकम्. अध्ययनस्यापि प्रयोजकत्वे गौरवं स्यादित्युक्तम् । वक्ष्यमाणो रूढिप्रतिकूललिङ्गसद्भावोऽवयवशक्त्यनुकूललिङ्गसद्भावश्च बाधकः । रूढिप्राबल्यमर्थाविरोधेऽनुकूललिङ्गसद्भावे च भवति, न त्वर्थविरोधे, अत एव हि गङ्गायां घोष इत्यत्र गङ्गापदस्य लक्षणा। 'रथकारोऽग्नीनादधीत' इत्यत्रापि

* भावप्रकाशिका *

पुस्तकनिरीक्षणादिना विद्यां लब्ध्वाधिक्रियतामिति, ततश्च पक्षद्वयेपि शूद्रे ब्राह्मणादिसंयुक्तोपनयनाद्यप्रसक्तेरिति ध्येयम् । ( नापेक्षन्त इत्यर्थ इति ) शूद्रे ज्ञानं तदुपायादींश्च नाक्षिपन्तीत्यर्थ इत्यर्थः । ( अध्ययनस्यापि प्रयोजकतयेति ) कर्मविधीनामेव शूद्रगताध्ययनप्रयोजकत्वकल्पनायां गौरवमित्यर्थः । ( सौधन्व-

र्थ्यासम्भवः। इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एवोपायभावमनुभवतः, न स्वातन्त्र्येण शूद्रस्येतिहासपुराणश्रवणानुज्ञानं, पापक्षयादिफलार्थम्, नोपास-

* श्रुतप्रकाशिका *

"सौधन्वान ऋभवः सूरचक्षसः" इति सौधन्वत्वमनुकूललिङ्गं दृश्यते, ब्राह्मणादेश्च शिल्पनिषेधोऽवगम्यते, अतोऽर्थविरोधाच्छूद्रशब्दस्य रूढिर्दुर्बला, अतोऽनधिकारः। अयञ्चार्थः 'शुगस्ये'तिसूत्राभिप्रेत इह प्रतिपत्तिसौकर्यायोक्तः। ननूक्तमितिहासपुराणद्वारा शूद्रस्यापि ब्रह्मज्ञानं सम्भवतीत्यत्राह (इतिहासेति) उपबृंहणीयवेदज्ञानानधिकरादुपबृंहणमात्रेणोपासनोपयोगिज्ञानपौष्कल्यं न सम्भवति, न हि व्याख्येयानधिकारिणो व्याख्यानमात्रेण पुष्कलज्ञानसम्भव इति दृष्टसामर्थ्यवैकल्यम्, "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति वेदार्थविशदीकारहेतुतयैव तदवगमविधानादङ्गतया विहितस्य स्वतन्त्रतयोपादाने तज्जन्यज्ञानस्य पुस्तकपाठादिलब्धवेदार्थज्ञानस्येव शास्त्रविरोधाददृष्टसामर्थ्यवैकल्यञ्च,

* भावप्रकाशिका *

त्वमनुकूललिङ्गमिति) 'ऋभवो नेमिं नमन्ति' इत्यादिमन्त्रलिङ्गान्नेमिनिर्माणचतुरस्य ऋभुशब्दवाच्यत्वावगमात् 'सौधन्वान ऋभवः' इतिमन्त्रे तत्समानाधिकरणतया सौधन्वशब्दस्य श्रवणात् 'पत्न्यां तु जातो वैश्यानां सुधन्वाचार्य एव च' इत्याचार्यऋभुशब्दापरपर्यायसौधन्वशब्दितजातिविशेषस्य ग्रहणमिति भावः। नन्वस्यार्थस्य शुगस्येति सूत्राभिप्रेतत्वे तद्व्याख्यानसमय एव वाच्य इत्याशङ्कयाह (इह प्रतिपत्तीति) (नहि व्याख्येयानधिकारिण इति) नन्वितिहासपुराणादिकं वेदवाक्यप्रतीकग्रहणपूर्वकमस्य पदस्यायमर्थ इत्येवं व्याख्यानं न भवति, येन वेदसापेक्षता स्यात्, अतोऽनधीतवेदस्यापीतिहासपुराणादिना स्पष्टार्थावगतौ नानुपपत्तिः, अत एवाङ्गतया विहितस्य स्वतन्त्रतयेत्याद्युत्तरयुक्तिरनुपपन्ना, शूद्रश्रावणविध्यनुरोधेन स्वतन्त्रतयोपादानस्याप्यङ्गीकर्तव्यत्वात्, शूद्रश्रावणस्य दृष्टार्थत्वसम्भवे सति अदृष्टार्थकल्पनाया अन्याय्यतयानुष्ठेयोपासनानुष्ठानाद्यर्थत्वस्यैव युक्तत्वादिति चेत्. सत्यम्; 'नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः' इत्यादिषु पापक्षयफलकत्वस्यैव स्पष्टमाम्नानेन तस्यैव फलत्वात्. अत एवोक्तं 'पुण्य-

नार्थम् । विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषात् ज्ञानवन्तः प्रारब्धकर्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम् । यत्तु संवर्गविद्यायां शुश्रूषोः शूद्रेतिसम्बो-

* श्रुतप्रकाशिका *

अतस्तदविरोधस्य न्याय्यत्वाच्छ्रावणविध्यवैयर्थ्याच्च शूद्रस्य श्रवणानुज्ञानं पुण्यकथावगतिद्वारेण पापक्षयफलार्थम्, न तूपासनार्थमित्यर्थः। यद्येवं वेदवाक्यार्थज्ञानमुपासनाङ्गम्, कथं तर्हि विदुरादीनामुपासनसम्भव इत्यत्राह (विदुरादयस्त्विति) तेषामप्युपासने प्रथमप्रवृत्तिर्न शूद्रजन्मनि , अपि तु पूर्वजन्मसिद्धैव, पाश्चात्त्ये तु जन्मनि प्राक्तनज्ञानप्रमोषाभावादवर्जनीयं तदनुवृत्तिमात्रमेवेत्यर्थः । विदुरादीनामपि इतिहासपुराणश्रवणात् ज्ञानसिद्धिरिति यदि तैरुच्यते तदयुक्तम् ; "धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे सम्प्राप्ताः संसिद्धिं श्रमणी यथा" इति शौनकवचनविरोधात्। एवमर्थसिद्धः सूत्रकाराभिप्रेतो हेत्वन्तरपरिहार उक्तः । अथ प्रधानयुक्तिपरिहारपरं सूत्रमवतारयितुमाह ( यत्त्विति ) शोचितृत्वं

❀ भावप्रकाशिका ❀

कथावगतिद्वारेण पापक्षयफलार्थत्वमितीति द्रष्टव्यम् । ( तदविरोधस्येति ) वेदार्थविशदीकरणहेतुतयैव तदधिगमविधायकशास्त्राविरोधस्येत्यर्थः । ( श्रावणविध्यवैयर्थ्याच्चेति ) शूद्राणामितिहासपुराणश्रवणस्य निष्फलत्वे श्रवणविधेर्वैयर्थ्यप्रसङ्गादित्यर्थः । ( शौनकवचनविरोधादिति ) ननु वचनविरोधाद्विदुरादीनां तथास्तु नाम, तथा पूर्वजन्मानुष्ठितकर्मभिर्विशुद्धचित्तानामुत्पन्नब्रह्मविविदिषाणां प्रारब्धवशाच्छूद्रजन्मप्राप्तानामितिहासपुराणावगतब्रह्मस्वरूपतदुपासनप्रकाराणां कुतो न ब्रह्मविद्यायामनधिकारः ? न चोक्तरीत्या यज्ञादिकर्मण्यप्यधिकारस्स्यादिति शङ्क्यम्, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति यज्ञादौ विशेषनिषेधदर्शनादुपासने तादृशनिषेधादर्शनात् । नारदस्य प्राचीनजन्मनि यतिभिरुपदिष्टाच्युतोपासनायां शूद्रोचितसंस्कारपूर्वकं शैवपाशुपतपाञ्चरात्राद्युपदिष्टासु प्रणवरहिताष्टाक्षरपञ्चाक्षरमन्त्रकरणकविष्णुशिवोपासनास्वधिकारो न निवार्यः । नचैतदधिकरणविरोधः, शूद्रस्येतिहासादिमूलाधिकारसत्त्वेपि वेदमूलसंवर्गविद्याद्यधिकारानिवारणार्थत्वादस्याधिकरणस्य. अत एव वेदश्रवणादिप्रतिषेधसूत्रकृताप्युपन्यस्त इति

धनं शूद्रस्याधिकारं सूचयतीति, तन्नेत्याह—शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि। शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणात्तदैव ब्रह्मविदो रैक्वस्य सकाशं प्रत्याद्रवणाच्छुगस्य सञ्जातेति हि सूच्यते, अतस्स शूद्रेत्यामन्त्र्यते, न चतुर्थवर्णत्वेन। शोचतीति हि शूद्रः, [1]"शुचेर्दश्च" इति रप्रत्यये धातोश्च दीर्घे चकारस्य च दकारे शूद्र इति

* श्रुतप्रकाशिका *

शूद्रशब्दार्थः, तत्र शोककारणं शोककार्यञ्च हेतुत्वेनाह (शुश्रूषोरित्यादिना) अनादरवाक्यश्रवणं शोककारणम्, आद्रवणं तत्कार्यम्। शूद्रशब्दस्य शोचितृत्ववाचकत्वं कथमित्यत्राह (शुचेर्दश्चेतीति) रप्रत्ययः प्रकरणसिद्धश्चकाराकृष्टः "अमितम्योर्दीर्घश्च" इति सूत्रे दीर्घश्चेत्यंशोऽनुवर्तत इति भावः। परैर्निरुक्त-

* भावप्रकाशिका *

चेदुच्यते, विशेषविहितेषु शैवाद्यागमनिर्दिष्टेषूपासनेषु न शूद्राद्यधिकारं प्रतिक्षिपामः, अपितु सामान्यतः श्रुतेषु ब्रह्मोपासनेषु यज्ञादिष्विव नाधिकार इत्येव साधयामः, नच तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति वचनात् यज्ञानधिकारेपि उपासने कुतो नाधिकार इति शङ्क्यम्, तस्य वचनस्यापशूद्राधिकरणन्यायसिद्धार्थानुवादित्वात् न्यायस्य च कर्मब्रह्मोपासनसाधारण्यात्। किञ्च "नास्याधिकारो धर्मे नाधर्मात् प्रतिषेधनम्" इति विशिष्य 'विहितेतरेषु धर्मेषु शूद्रस्यानधिकार' इति मनुसरणादिति द्रष्टव्यम्। अतश्शूद्रस्य न ब्रह्मविद्याधिकारः। (शोककारणं शोककार्यं च हेतुत्वेनाहेति) कार्यकारणयोर्द्वयोरपि लिङ्गविधया ज्ञापकत्वसम्भवेन हेतुत्वसम्भवात् सूत्रे ज्ञापकहेतौ पञ्चमी, ततश्चानादरश्रवणाद्रवणरूपलिङ्गाभ्यां कारणकार्यरूपाभ्यां ज्ञाप्यमानेत्यर्थः। अनादरश्रवणजन्या आद्रवणहेतुभूता शुक् शूद्रेत्यामन्त्रणेन सूच्यत इति सूत्रार्थ इतिभावः। भाष्ये— शुचेर्दश्चेति। अस्य सूत्रस्य धातुवृत्तौ शूद्रशब्दव्युत्पादनावसरे उदाहृतत्वात् प्रक्षिप्तत्वं वदन्तो निरा-

१ उणादिषु॥

भवति; अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेन सूच्यते; न जातियोगः। जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव। तस्य धार्म्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्म-

* श्रुतप्रकाशिका *

प्रक्रियया आद्रवणमप्यन्तर्भाव्य शूद्रशब्दनिर्वाहः कृतः, मुख्यनिर्वाहे सम्भवति सोऽनुपपन्न इति भावः। पाणिनीयनिर्वाहो मुख्यः, तदनन्तरमौणादिकः, ततो नैरुक्तः, तत्रौणादिकनिर्वाहस्य सम्भावितत्वात् स एवात्र कृतः। अनादरवाक्यश्रवणस्येवाद्रवणस्यापि शूद्रशब्दवाच्यत्वं न सूत्रविवक्षितम्, उपपादकतयोपादानस्य द्वयोरपि तुल्यत्वात्; शुच एव ह्युपपाद्यत्वं प्रतीयते, प्रथमान्तनिर्देशात्। श्रवणाद्रवणशब्दौ हि पञ्चम्यन्तौ, तस्माच्छोक एव शूद्रशब्दप्रवृत्तिनिमित्तम्। अनादरवाक्यश्रवणादीनां वैशद्यार्थमुपन्यस्यति (जानश्रुतिः किलेति) भल्लाक्षः—

७ भावप्रकाशिका ७

कृता इति वेदितव्यम्। (आद्रवणमप्यन्तर्भाव्येति) शुचा द्रवतीति शूद्रशब्दव्युत्पत्तिः परैरादृतेति भावः। ननु हंसोक्तानादरश्रवणं जानश्रुतेः कथं शोकहेतुः? महात्मनां हि येन केनापि कृता निन्दा शोकाय न भवति, प्रत्युत तोषायैव; स्मरन्ति च मन्वादयः— "अवमानात्तपोवृद्धिस्सम्मानाच्च तपःक्षयः। अमृतस्यैव काङ्क्षेतावमानस्य सर्वतः" इत्यादि। प्रत्युत हंसे हितप्रवर्तकत्वं जानतस्तोष एव युक्त इति चेत्, सत्यम्; अथाप्येतावन्तं कालमीदृशीं विद्यां नाधिगमम्, अत एव पितृस्थानीयेन हंसेन निन्दितोऽस्मीति शोको भवत्येव, अतस्तेनाद्रवणमप्युपपद्यत एव; इतरथा पित्रादिकृतनिन्दायाश्शोकहेतुत्वे तन्निन्दाया अकार्यकरत्वं स्यादित्यपि द्रष्टव्यम्। (वैशद्यार्थमुपन्यस्यतीति) एवं हि श्रुतिः— जानश्रुतिर्हि पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसधान्मापयाञ्चक्रे सर्वत एव मेऽन्नमत्स्यन्तीति। अथ ह हंसा निशायामतिपेतुस्तद्धैवं हंसो हँसमभ्युवाद भो भोऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीदिति। तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थेति यो नु कथं सयुग्वा रैक्व इति। यथा कृताय विजितायाधरेयास्सं

जिज्ञासामुत्पिपादयिषतोर्हंसरूपेण निशायामस्याविदूरे गच्छतोरन्यतर इतरमुवाच [1]"भो भोयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीत्' इति। एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्य परो हंसः प्रत्युवाच [2]"कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थ' इति। कं सन्तमेनं जानश्रुतिं + सयुग्वानं रैक्कं ब्रह्मज्ञमिव गुणश्रेष्ठमेतदात्थ; स ब्रह्मज्ञो रैक्क एव लोके गुणवत्तरः, महता धर्मेण संयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणः, यद्गुणजनितं तेजो रैक्कतेज इव मां दहेदित्यर्थः। एवमुक्तेन परेण कोऽसौ रैक्क इति पृष्टः

* श्रुतप्रकाशिका *

हंसः। समं दिवा— स्वर्गेण समम्, स्वर्गेपि तत्तेजः प्रसृतमित्यर्थः। यद्वा दिवसेन सममित्यर्थः, निशायामित्युक्तत्वात्। मा प्रसाङ्क्षीः—मा प्रसक्तस्स्याः। मा प्रधाक्षीत्— त्वां मादहेदित्यर्थः। (परो हंस इति) श्रुतौ परशब्दो हंसवाचीति भावः। हंसान्तरवाक्यस्यानादरगर्भतां व्यनक्ति (कं सन्तमिति) सयुग्वानमित्यस्यार्थमाह (गुणश्रेष्ठमिति) यद्वा, युग्वा- शकटम्, तद्वन्तमित्यर्थः। गुणश्रेष्ठ-

ꣽ भावप्रकाशिका ꣽ

यन्त्येवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजास्साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति। यदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारेह सयुग्वानमिव रैक्कमात्थेति यो नु कथं सयुग्वा रैक्क इति। स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय तँ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छेति। सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तँ हाभ्युवाद त्वं नु भगवस्सयुग्वा रैक्क इत्यहं ह्यरा ह इति प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥

[1] छा. ४-१-२ ॥ [2] छा ४-१-३ ॥ + सयुग्वानम्- इति च पा.

लोके यत्किञ्चित्साध्वनुष्ठितं कर्म्म, यच्च सर्वचेतनगतं विज्ञानं तदुभयं यदीयज्ञानकर्म्मान्तर्भूतम्, स रैक्व इत्याह । तदेतद्धंसवाक्यं ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं जानश्रुतिरुपश्रुत्य तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेष्य तस्मिन् विदित्वा आगते स्वयमपि रैक्वमुपसद्य गवां षट्छतं निष्कमश्वतरीरथञ्च रैक्वायोपहृत्य रैक्वं प्रार्थयामास [1]"अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से" इति त्वदुपास्यां परां देवतां ममानुशाधीत्यर्थः । स च रैक्वः स्वयोगमहिमविदितलोकत्रयो जानश्रुतेर्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां

* श्रुतप्रकाशिका *

गिति प्रकरणसिद्धार्थोक्तिः । उपास्स इति मध्यमपुरुषनिर्देशाभिप्रायं व्यञ्जयन्नाह (त्वदुपास्यामिति) यदुपासनात्तवेदृशी प्रशस्तिर्जाता तं मे ब्रूहीत्य-

* भावप्रकाशिका *

तदुह जानश्रुतिः पौत्रायणष्षट्छतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तं हाभ्युवाद । रैक्वेमानि षट्छतानि गवामयं निष्कोयमश्वतरीरथो अनुम एतां भगवो देवतां शाधि यां देवतामुपास्स इति । त मुह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदुह पुनरेव जानश्रुतिः पौत्रायणस्सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे । तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोयमश्वतरीरथः इयं च जाया अयं ग्रामो यस्मिन्नास्से अन्वेव मा भगवश्शाधीति । तस्या ह मुखमुपोद्गृह्णन्नुवाच आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्व पर्णानाम महावृक्षेषु यत्रास्मा उवास तस्मै होवाच' । जनश्रुतस्यापत्यं जानश्रुतिः, पुत्रस्य पुत्रः पौत्रः, तस्यापत्यं पौत्रायणः । श्रद्धादेयः

१ छा. ४-१-२

तदनन्तरमेव ब्रह्मजिज्ञासयोद्योगं च विदित्वाऽस्य ब्रह्मविद्यायोग्यतामभिज्ञाय चिरकालसेवां विना द्रव्यप्रदानेन शुश्रूषमाणस्यास्य यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन् तस्य शोकाविशिष्टतामुपदेशयोग्यताख्यापिकां शूद्रशब्देनामन्त्रणेन ज्ञापयन्निदमाह "अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" इति । सह गोभिरयं रथस्तवैवास्तु, नैतावता मह्यं दत्तेन ब्रह्मजिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः। स च जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यां च प्रदायोपससाद । स रैक्कः पुनरपि तस्य योग्यतामेव ख्या-

* श्रुतप्रकाशिका *

भिप्राय इत्यर्थः । (चिरकालेति) चिरकालसेवा यावच्छक्तिप्रदानं वा ब्रह्मविद्या-

❀ भावप्रकाशिका ❀

श्रद्धापुरस्सरं देयमस्य श्रद्धादेयः। बह्वस्य गेहेऽन्नं पक्तव्यमस्तीति बहुपाक्यः। सर्वतः सर्वासु दिक्षु । अन्नपानादिपूर्णानि अतिथ्यभ्यागतानां वासस्थानानि निर्मितवान्, सर्वत एत्यातिथयः मेऽन्नं भोक्ष्यन्त इत्यभिप्रायेणेत्यर्थः । भल्लाक्ष भल्लाक्षेत्यनेन विपरीतलक्षणया मन्दलोचनेति सम्भ्रमेण द्विवारमुक्तिः, यथा कृताय विजितायेति । कृतनामधेयो यः द्यूतशास्त्रप्रसिद्धश्चतुरङ्कः, तत्र विजिताय जितवते अधरे अयाः त्रिद्व्येकाङ्काः, त्रेताद्वापरकलिनामानः यथा संयन्ति अन्तर्भवन्ति. चतुरङ्के कृतनामके अये त्रिद्व्येकाङ्कानां तत्र सत्त्वेनान्तर्भावादित्यर्थः। यस्तद्वेद यत्स वेदेति । सः रैक्कः यद्वेद्यं वेद तदन्योपि यो वेद तमप्यभिसमेतीत्यनुषङ्गेण योजना । सह सञ्जिहान एव- तल्पं त्यजन्नेवेत्यर्थः । यत्रारे ब्राह्मणस्यान्वेषणेति। अरे ब्राह्मणस्य ब्रह्मविदः यत्रारण्ये नदीपुलिनादौ विविक्ते. अन्वेषणा

१ छा. ४-२-३ ॥

पयन् शूद्रशब्देनामन्त्र्याह [1]"आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः" इति। इमानि धनानि शक्त्यनुगुणान्याजहर्थ; अनेनैव द्वारेण चिरसेवया विनापि मां त्वदभिलषितं ब्रह्मोपदेशरूपवाक्यमालापयिष्यसीत्युक्त्वा तस्मा उपदिदेश । अतः शूद्रशब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य सूचितः न चतुर्थवर्णत्वम् ॥ ३३ ॥

* श्रुतप्रकाशिका *

प्रतिष्ठाहेतुरित्यर्थः । तमनुगृह्णन्, न तु रागादित्यर्थः । ( आजहर्थेति ) आजहार भवानिति भवच्छब्दाध्याहारेण छान्दसव्यत्ययेन वा श्रुतियोजनेत्यभिप्रायः। यद्यपि दशाश्वमेधानाजहारेत्यादिष्वाङ्पूर्वस्य हरतेरर्थान्तरदर्शनेन नानार्थत्वसम्भवाद्धातूनाम्, प्रतिगृहीतवानसीत्युत्तमपुरुषतया व्याख्यातुं शक्यते, तथापि "अग्नये समिधमाहार्षम्' 'अथामेध्ये नो मध्वाजहार" इति दानार्थतया वैदिकप्रयोगप्राचुर्यदर्शनात् 'अनेनैव मुखेनालापयिष्यथाः' इत्यालापनहेतुतया प्रतिसन्धीयमानस्याहरणस्य स्वरसत आलापनसमानकर्तृकताप्रतीतेश्च मध्यमपुरुषत्वेन

छ भावप्रकाशिका छ

मार्गणं भवति। तत्रैनं रैक्वमृच्छ- मृगयस्वेत्यर्थः । पामानं कषमाणमिति। पामानम् कण्डूयमानमित्यर्थः। निष्कम्— हारम् - अश्वतरीरथम्— अश्वतरीभ्यां युक्तं रथम्, तस्मिन् काले गृहीत्वा रैक्वसमीपं गतवानित्यर्थः । अह हारेत्वा शूद्रेति । अहेति निपातः । हारसहित इत्वा रथः हारेत्वा । गोभिस्सह तवैवास्तु— किमनेन मम सन्तोषः, कलत्रहीनस्य मम एतद्धनरक्षणे वा का शक्तिः? किं तव वाल्पधनदानेन विद्या प्रतिष्ठिता भवेदिति भावः। तस्या ह मुखमुपोद्गृह्णन्नुवाचेति। तस्याः जायार्थमानीताया राज्ञो दुहितुः मुखं द्वारतां विद्याया दाने तीर्थं जानन्नुक्तवानित्यर्थः । 'ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः विद्यया वापि विद्यां यः प्राह तानि तीर्थानि षण्मम' इति विद्याया वचनात्। आजहारेमाश्शूद्रानेनैव मुखे-

[1] छा. ४-२-५ ॥

## क्षत्रियत्वगतेश्च ॥ ३४ ॥

[1]'बहुदायी' इति दानपतित्वेन [1]'बहुपाक्यः' इत्यादिना [1]'सर्वत एवमेतदन्नमत्स्यन्ति' इत्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीतेः [2]'सह सञ्जिहान एव क्षत्तारमुवाच" इति क्षत्तृप्रेषणाद्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ॥ ३४ ॥

---

* श्रुतप्रकाशिका *

व्याख्यातम् ॥ क्षत्रियत्वगतेश्च ॥ शूद्रशब्दस्य यौगिकार्थानुकूलहेतुरुक्तः । अथ रूढिसिद्धार्थविरुद्धहेतुरुच्यते । सञ्जिहानः—आसनमुज्झन्, उत्तिष्ठन्नेवेत्यर्थः ॥ उत्तर-

* भावप्रकाशिका *

नालापयिष्यथा इति । इमा दक्षिणा आजहर्थ अनेनैव मुखेन विद्याग्रहणोपायेन वाचयिष्यसीत्यर्थः । ते हैते रैक्व पर्णानाम महावृक्षेषु यत्रास्मा उवासेति । ते हैते ग्रामाः रैक्व पर्णानामविख्याताः महावृक्षेषु देशेषु यत्र येषु ग्रामेषु उवास उषितवान् रैक्वः तान् ग्रामान् रैक्वाय ददौ, तदनन्तरं तस्मै विद्यामुपदिदेशेत्यर्थः ॥

ननु महाभारते सूतात्मजमात्मानं मन्यमानस्य कर्णस्य दानपतित्वराज्याधिपतित्वादीनां श्रवणात् । अवेष्टिनये वार्तिके 'राज्यमविशेषेण चत्वारो वर्णाः कुर्वाणा दृश्यन्ते' इत्युक्तेः दानपतित्वं शूद्रस्यापि सम्भवति । न च "शक्तेनापि च शूद्रेण न कार्यो धनसञ्चयः । शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते" इति निर्धनत्वश्रवणात् कथमस्य दानपतित्वमिति वाच्यम्; व्यासस्मृतौ शूद्रप्रकरणे— 'राज्ञा वासमनुज्ञातः कामं कुर्वीत धार्मिकः । पापीयान् हि धनं लब्ध्वा वशे कुर्याद्गरीयसः' इति धार्मिकशूद्रस्य धर्मार्थं धनार्जनस्यानुज्ञातत्वादिति चेन्न; बहुदायित्वादीनां कदाचिच्छूद्रे सम्भवेऽपि क्षत्त्रप्रेषणस्य रैक्वाध्युषितग्रामाणां तस्मै दानस्य च क्षत्रियधर्मराज्याधिपत्यसाध्यस्य तत्रासम्भवात् । राज्यपालनं हि क्षत्रियस्य वृत्तिः, आपद्वृत्तित्वेनापि ब्राह्मणस्य सम्भवात् 'अजीवंस्तु

---

१ छा. ४-१-१ ॥ | २ छा. ४-१-५ ॥

तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता; उपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह—

उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्र कीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणास्य क्षत्रियत्वं गम्यते। कथम्? [1]"अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादिना [2]" ब्रह्मचारिन्नेदमुपास्महे" इत्यन्तेन कापेयाभिप्रतारिणोर्भि-

* श्रुतप्रकाशिका *

सूत्रमवतारयति ( तदेवमिति ) ॥ उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ( कथमिति ) चैत्ररथः क्षत्रियश्चेज्जानश्रुतिरपि क्षत्रियः स्यादिति नहि नियम इत्यर्थः । उत्तरमाह ( अथ हेति ) परिविष्यमाणौ—सूदेन भोज्यमानौ । ब्रह्मचारिणो भिक्षणं कापेयाभिप्रतारिणोस्त्रैवर्णिकत्वलिङ्गमित्यर्थसिद्धम् । एकत्र ब्राह्मणक्षत्रिय-

७ भावप्रकाशिका ७

यथोक्तेन ब्राह्मणः स्वेन कर्मणा । जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥ यो मोहादधमो भूत्वा जीवेदुत्कृष्टकर्मणा । तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्'' इत्यादिस्मरणात्, राज्याधिपत्यस्याशास्त्रीयत्वादिति पुराणादिषु दर्शितस्य क्षत्रियाणामपि राज्यपरिपालनस्याशास्त्रीयतयाप्युपपत्तेः । प्रकृते शास्त्रनिषिद्धराज्याधिपत्यग्रहणासम्भवे निषिद्धग्रहणस्यान्याय्यत्वात् जानश्रुत्यधिष्ठितराज्ये रैकस्य वासप्रतिपादनाच्च तस्य क्षत्रियत्वमभ्युपगन्तव्यम्, 'न शूद्रराज्ये निवसेन्न पाषण्डजनैर्वृते' इति शूद्रराज्यस्य निषिद्धत्वादपि द्रष्टव्यम् ॥ ( त्रैवर्णिकत्वलिङ्गमित्यर्थसिद्धमिति ) 'सार्ववर्णिकभैक्षचरणमभिशस्तपतितवर्जम्' इति गौतमस्मरणस्य

१ छा. ४-३-५ ॥ | २ छा. ४-३-७ ॥

क्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासम्बन्धित्वं प्रतीयते । तेषु चाभिप्रतारी क्षत्रियः, इतरौ ब्राह्मणौ; अतोऽस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते, न शूद्रस्य; अतोऽस्यां विद्यायामन्विताद्रैक्काद्ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तम्; न चतुर्थवर्णत्वम् । नन्वस्मिन् प्रकरणेऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम्; तत्कथमस्याभिप्रतारिणश्चैत्ररथत्वम्? कथं वा क्षत्रियत्वम्? तत्राह– लिङ्गादिति । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम्' इत्यभिप्रतारिणः कापेय-

* श्रुतप्रकाशिका *

जातिद्वयसम्बन्धितयाऽवगतायामन्यत्रापि ब्राह्मणसम्बन्धितया निर्णीतायां तत्सम्बन्धिपुरुषान्तरविषयसन्देहे सति अग्र्यप्रायन्यायात्तस्य पुरुषस्य ब्राह्मणक्षत्रिययोरन्यतरत्वं परिशेषेण क्षत्रियत्वं च निश्चीयत इत्यर्थः । सौत्रं लिङ्गादितिपदं व्याख्यातुं चोद्यमुखेनाकाङ्क्षां दर्शयति ( नन्विति ) अभिप्रतारिणश्चैत्ररथत्वं तस्य क्षत्रियत्वं च नावगतमित्यर्थः । किमत्र लिङ्गं विवक्षितमित्यत्राह ( अथ हेति ) कापेयसाहचर्यात्– कापेयसहपाठादित्यर्थः । कापेयसहपाठबलेन कापेयसम्बन्धस्सिद्धः, तेन तत्पुरोहितकस्य चैत्ररथत्वं सिद्धम्. तेन क्षत्रियत्वमवगतमित्यर्थः ॥

७ भावप्रकाशिका ७

त्रैवर्णिकालाभविषयतया व्याख्यातत्वान्नानुपपत्तिरिति द्रष्टव्यम् । ( जातिद्वयसम्बन्धितयावगतायामिति ) विद्यायामिति शेषः । ( कापेयसहपाठादित्यर्थ इति ) सहपाठावगतपरस्परसाहचर्यादित्यर्थः । ( तत्पुरोहितकस्य चैत्ररथत्वं सिद्धमिति ) ननु 'एते न वै चित्ररथं कापेया अयाजयन् तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत' इति द्विरात्रप्रकरणगतार्थवादे कापेययाज्यस्य चित्ररथत्वावगमात् अभिप्रतारिणोपि चित्ररथत्वमेव स्यात्, न चैत्ररथ-

साहचर्य्याल्लिङ्गादस्याभिप्रतारिणः कापेयसम्बन्धः प्रतीयते; अन्यत्र च [1]"एतेन वै चैत्ररथं कापेया अयाजयन्" इति कापेयसम्बन्धिनश्चैत्ररथत्वं श्रूयते ; तथा चैत्ररथस्य क्षत्रियत्वं [2]'तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत' इति ; अतोऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥ ३५ ॥

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम् । इदानीं न्यायसिद्धः शूद्रस्यानधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याह—

* श्रुतप्रकाशिका *

उत्तरसूत्रसङ्गतिमाह (तदेवमिति) शूद्रशब्दस्य रूढिसिद्धार्थविरोधिलिङ्गं यौगिकार्थानुगुणलिङ्गं चेत्युभयविधं लिङ्गमपि शूद्रानधिकारज्ञापकमित्यर्थः ( इदानी-

⁂ भावप्रकाशिका ⁂

त्वमिति चेन्न; अभिप्रतारिलक्षणसंज्ञान्तरावरुद्धस्य चित्ररथलक्षणसंज्ञान्तरावरोधासम्भवात्समानान्वयानां समानान्वययाज्यत्वस्योचिततया कापेययाज्यत्वस्य चित्ररथवंश्यत्वेन नानुपपत्तिः । नन्वभिप्रतारिणः कापेययाज्यत्वे सिद्धे तस्य चित्ररथवंश्यत्वसिद्धिः, चित्ररथवंश्यत्वे च क्षत्रियत्वनिर्धारणम्, क्षत्रियत्वे निर्धारिते साहचर्याज्जानश्रुतेरपि क्षत्रियत्वनिश्चय इति प्रणाडी न सम्भवति. अभिप्रतारिणः कापेयसाहचर्यमात्रेण कापेययाज्यत्वस्यैवासिद्धेः । नहि कापेयाभिप्रतारिणोरेकत्र भोजनं याज्ययाजकभावाधीनम्, नानादेशागतानां परस्परसम्बन्धशून्यानामेकत्र भोजनदर्शनात्. यौनमौखसम्बन्धान्तरसद्भावाच्च. अस्तु वाऽभिप्रतारिणः कापेययाज्यत्वम्, नैतावता तस्य चैत्ररथत्वसिद्धिः, कापेयानां चैत्ररथयाजकत्ववत्पुरुषान्तरयाजकत्वस्यापि सम्भवात्. अस्तु वाऽभिप्रतारिणः क्षत्रियत्वम्. तथापि तत्समभिव्याहारमात्रेण शूद्रेत्यामन्त्रणस्य जानश्रुतेः क्षत्रियत्वे प्रमाणाभावादिति चेत्. अवि-

१ ताण्ड्य- २-१२-५ ॥ | २ शतपथ. ११-५-३-१३ ॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

ब्रह्मविद्योपदेशेषूपनयनसंस्कारः परामृश्यते [१]"उप त्वा नेष्ये" [२]'तं होपनिन्ये" इत्यादिषु । शूद्रस्य चोपनयनादिसंस्काराभावोऽभिलप्यते [३]"न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" [४]"चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति' इत्यादिषु ॥ ३६ ॥

* श्रुतप्रकाशिका *

मिति ) अयमनधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याहेत्यर्थः ॥ संस्कारपरामर्शात्तदभावाभिलापाच ॥ संस्कारः परामृश्यताम् , ततः किमित्यत्राह ( शूद्रस्येति ) न शूद्रे पातकं किञ्चित्– सन्ध्यावन्दनाद्यभावनिमित्तं पापं नास्तीत्यर्थः । चतुर्थो वर्ण

७ भावप्रकाशिका ७

दितपूर्वस्य हस्तिनो निकटे पुरुषे दृश्यमाने तस्मिंश्च राज्ञो हस्तिपकोऽयमिति प्रत्यभिज्ञायमाने सति अयमस्य हस्तिपकस्य शिक्षणीयो हस्ती, राजकीयश्चेति बुद्धिरौत्सर्गिकी जायते; एवमिहापि अभिप्रतारिसन्निधौ कापेये श्रूयमाणे तस्मिंश्च श्रुत्यन्तरबलात् चित्ररथयाजकत्वेन प्रत्यभिज्ञायमाने कापेययाज्योऽयमभिप्रतारी चित्ररथवंश्यश्चेति बुद्धिर्जायमाना न निवारयितुं शक्यते. सा च बाधकाभावात् प्रमाणमवतिष्ठत इत्यौत्सर्गिकन्यायमवलम्ब्योच्यते, एवञ्च ब्राह्मणद्वितीयस्याभिप्रतारिणः चैत्ररथत्वेन क्षत्रियत्वनिश्चये तत्समभिव्याहाराद्ब्राह्मणस्य रैक्वस्य द्वितीयो जानश्रुतिरपि क्षत्रिय इति निर्धारणं युक्तमेव, अनन्यथासिद्धक्षत्तृप्रेरणादिलिङ्गसाहचर्यादिति द्रष्टव्यम् ॥ भाष्ये— न च संस्कारमर्हतीति । ननु तत्रैव मानवे धर्मशास्त्रे 'धर्मेप्सवस्तु धर्मज्ञास्सतां वृत्तिमनुव्रताः । मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च" इति तदनन्तरश्लोके धार्मिकशूद्राणां मन्त्रवर्जसंस्काराणामभ्यनुज्ञानं कृतम् । न चामन्त्रसंस्कारो न विद्योपयोगीति वाच्यम्; स्त्रीणां मैत्रेयीप्रभृतीनां तदभावप्रसङ्गादिति चेन्न; संस्कारान्तरसत्त्वेपि 'शूद्रश्चतुर्थो वर्ण

१ छां. ४-४-५ ॥
२ आपस्त-श्रौत ॥
३ मनु. १०-१२६ ॥
४ गौत. १०-अ. ९-सू. ॥

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

"नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर" इति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात् ॥ ३८ ॥

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि प्रतिषिध्यन्ते "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्मा-

* श्रुतप्रकाशिका *

एकजातिः, न तु द्विजातिरित्यर्थः ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ तच्छब्दस्य पूर्वसूत्रप्रकृतसंस्कारवाचितायामेतत्सूत्रविषयवाक्यानुगुण्याभावात्तच्छब्दः परमप्रकृतपरामर्शीत्याह ( शूद्रत्वाभावेति ) ॥ श्रवणाध्ययनार्थप्रतिषेधात् ॥ अर्थशब्देन तदनुष्ठानं विवक्षितम् । पद्यु— जङ्गमम् । समीपोच्चारणप्रतिषेधादेव श्रवणाध्य-

ॐ भावप्रकाशिका ॐ

एकजातिः' इत्युपनयनसंस्कारस्य निषेधादुपनयनसत्त्वे जन्मद्वयप्रसङ्गेन द्विजत्वप्रसङ्गात् । नन्वध्ययनाङ्गमुपनयनं प्रस्तुत्यैव तद्द्वितीयं जन्मेत्युच्यते, न तु ब्रह्मविद्याङ्गं प्रस्तुत्येतिचेन्न; 'त्वं हि नः पिता योऽस्माकं विद्यायाः परं पारं तारयसि' इति वैदिकलिङ्गेन ब्रह्मविद्याङ्गोपनयनस्यापि जन्मान्तरत्वात् । नन्वेवं द्विजातीनां ब्रह्मविद्याङ्गोपनयनेन जन्मान्तरोपपत्तौ त्रिजन्मत्वप्रसङ्ग इति चेन्न; इष्टापत्तेः । "मातुरग्रेऽधि जननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजस्य विधिचोदितम्" इति मनुना यज्ञदीक्षाया अपि जन्मान्तरत्वाभिधानात् । "अनृतात् सत्यमुपैमि मानुषाद्दैवमुपैमि दक्षिणं पूर्वमाङ्क्ते सव्यं हि मनुष्या आञ्जते" इति मन्त्रार्थवादलिङ्गैराधानपूर्वकयज्ञदीक्षायां मनुष्यतोत्तीर्णदेवजन्मत्वसूचनाच्च । ननु केकयराजाजातशत्रुप्रभृतेरुपनयनाभावेपि विद्योपदेष्टृत्वं दृश्यते, यथा 'ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच । बालाकिस्समित्पाणिः प्रतिचक्रामोपायानीति तँ होवाचाजातशत्रुः प्रतिलोम रूपमेव स्यात् । क्षत्रियो ब्राह्मणमुपनयेत् । एवं ह वै व त्वा ज्ञापयिष्यामीति । ततश्चोपनयनाभावेपि उपदेश-

च्छूद्रसमीपे नाध्येतव्यम्" 'तस्माच्छूद्रो बहुपशुरयज्ञीयः" इति । बहुपशुः पशुसदृश इत्यर्थः । अनुप-

* श्रुतप्रकाशिका *

यनप्रतिषेधोऽर्थसिद्धः । अर्थानुष्ठानप्रतिषेधं दर्शयति ( तस्माच्छूद्र इति ) ननु तत एवर्थानुष्ठाननिषेधोऽपि सिद्धः । सत्यम् , साक्षादेव त्वसौ श्रूयते, तत्र किं प्रणाड्युपजीवनेनेति, पृथगुच्यते पशुबाहुल्यवत्त्वं यज्ञाद्यर्हत्वौपयिकम् , कथमनेनायज्ञीयत्वसिद्धिरित्याशङ्काव्यावृत्त्यर्थं बहुपशुशब्दं व्याचष्टे ( पशुसदृश इत्यर्थ इति)

७ भावप्रकाशिका ७

दर्शनाच्छूद्रेपि तथात्वमस्त्वितिचेन्न; तत्राब्राह्मणानां ब्राह्मणोपनयनस्यायुक्ततया बाधकबलात्तथाभावेपि अन्यत्रोपनयनस्यावश्यकत्वादिति भावः ॥ भाष्ये— शूद्रत्वाभावनिर्द्धारण इति । ननु 'नैतदब्राह्मणो विवमुक्तर्हति समिधं सोम्याहर उप त्वा नेष्ये' इति अब्राह्मणत्वाभावनिर्द्धारणस्यैव दर्शनेन शूद्रत्वाभावनिर्धारणादयुक्तमिदम् । किञ्च एतल्लिङ्गवशादब्राह्मणानां क्षत्रियादीनामपि अधिकारो न स्यात्. किञ्चेदमुपनयनं न ब्रह्मविद्याङ्गम् , अपित्वध्ययनाङ्गम् । सत्यकामस्य पूर्वमकृताध्ययनत्वात्. एवमुपाख्यायते 'सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किं गोत्रोऽहमस्मीति । सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसीति बह्वहं चरन्ती परिचारिणी यौवने त्वामालभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि सत्यकाम एव जाबालो ब्रवीथा इति । सह हारिद्रुमतं गौतमेत्योवाच ब्रह्मचर्यं भगवतिविवित्स्याम्युपेयां भगवन्तमिति । तं हो वाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मीति अपृच्छं मातरं सा मा प्रत्यब्रवीत् बह्वहं चरन्ती परिचारिणी यौवने त्वामालभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोहं सत्यकामो जाबालोस्मि भो इति । तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर उपत्वा नेष्ये न सत्यादगा इति तमुपनीय" इत्यादि । तत अस्यामाख्यायिकायामुक्तं गोत्रापरिज्ञानमकृताध्ययनाङ्गोपनयनस्य बालस्य सम्भवति । ननूपनीतस्याधीतसाङ्गस्वाध्यायस्य ब्रह्मविद्याधिजिगिमिषया गुरुमुपासीदतः ततश्च कथमेतदुच्यत इति चेदुच्यते ; नैतदब्राह्मणो विवक्तुमर्हतीत्यत्रा-

शृण्वतोऽध्ययनतदर्थज्ञानतदर्थानुष्ठानानि न सम्भवन्ति; अतस्तान्यपि प्रतिषिद्धान्येव ॥ ३८ ॥

स्मृतेश्च ॥ ३९ ॥

स्मर्यते च श्रवणादिनिषेधः । [1]"अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" इति, [2]"न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्" इति च ; अतः शूद्रस्यानधिकार इति सिद्धम् ॥

* श्रुतप्रकाशिका *

ईषदसमाप्तपशुत्व इति वक्तव्ये सदृशशब्दग्रहणम् ईषदसमाप्तेः सादृश्यपर्यवसानज्ञापनार्थम् "विभाषा सुपो बहुच् पुरस्तात्तु" इति पाणिनीयसूत्रेण ईषदसमाप्त्यर्थे बहुच्प्रत्ययस्तस्य पुरस्तात् प्रयोगश्च विहितः । अध्ययनादिनिषेधोऽर्थसिद्धोपीत्याह (अनुपशृण्वत इति) "शूद्रो नाधीयीत" इति वाक्यमप्यनुसन्धेयम् ; अनेन यज्ञे विशेषनिषेधादन्यत्र वैदिके कर्मणि शूद्रस्याधिकारशङ्का च निरस्ता भवति ॥ स्मृतेश्च ॥ (अथ हेत्यादि) अध्ययनादौ प्रायश्चित्तस्मरण-

७ भावप्रकाशिका ७

ब्राह्मणपदस्य शूद्रपरत्वमेव वक्तव्यम्. सत्यवचनं हि शूद्रे असम्भावितम्. "अनृतं चातिवादश्च पैशुन्यमतिलोभता । विकृतिश्चाभिमानश्च जन्मतश्शूद्रमाविशत्" इति स्मृतिवशात् शूद्रे ईदृशसत्यवचनमसम्भावितमिति हि गौतमस्याभिसन्धिर्युज्यते, नान्यथा । किञ्च त्रैवर्णिकानामुपनयनस्य श्रुतिसिद्धतया क्षत्रियत्वाद्यभावनिर्धारणस्योपनयनाप्रयोजकत्वात्साधारण्येप्यब्राह्मणशब्दश्शूद्रमात्रपर एव प्रकृते उचितः । यच्चोक्तमध्ययनाङ्गमेवेदमुपनयनमिति । तन्न; उत्तरत्र षोडशकलब्रह्मविद्योपदेशस्यापि दर्शनादुभयार्थमेवेदमुपनयनम्; तादृशे चोपनयने प्रवर्तमानो गौतमः शूद्रत्वाभावं निश्चित्यैव प्रववृत इति दर्शनादुभयविधेप्युपनयने शूद्रत्वाभावो-

१ गौत-ध. २-१२-३ ॥ | २ मनु. ४-८० ॥

ये तु– निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः, अन्यत्सर्वं मिथ्याभूतम्, बन्धश्चापारमार्थिकः, स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः, तन्निवृत्तिरेव मोक्ष इति वदन्ति; तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते; अनुपनीतस्य अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि यस्मात्कस्मादपि निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थोऽन्यत्सर्वं तस्मिन् परिकल्पितं मिथ्याभूतमिति वाक्याद्वस्तुयाथात्म्यज्ञानोत्पत्तेस्तावतैव बन्धनिवृत्तेश्च । न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या, न वाक्यान्तरेणेति नियन्तुं शक्यम्; ज्ञानस्यापुरुषतन्त्रत्वात्, सत्यां

---

* श्रुतप्रकाशिका *

मुपदेशनिषेधसरणं चानधिकारज्ञापकत्वात्तदुभयमपि स्मृतिशब्दविवक्षितमिति भावः। 'रथकारोऽग्नीनादधीत' इत्यादिषु "रूढिर्योगमपहरति" इतिन्यायेन रूढार्थः स्वीकृतः, तदपवादोऽर्थविरोधः, अनुकूललिङ्गसद्भावे विरोधिलिङ्गाभावे च रूढेः प्राबल्यम्, विरोधिलिङ्गसद्भावस्तदपवाद इत्युक्तं भवति । 'रथकारोऽग्नीनादधीत' इत्यत्रापि सौधन्वान ऋभव इत्यनुकूललिङ्गं ह्युपलभ्यत इति । अस्मिन्नधिकरणे परेषामनवकाशं दर्शयति ( ये त्वित्यादिना ) ( अनुपनीतस्येति ) नहि नायं सर्पो रज्जुरेषेतिवाक्यात् भ्रमनिवृत्तेरुपनयनादिसंस्कारापेक्षेति भावः । तत्त्वमस्यादिव्यतिरिक्तवाक्येन ज्ञानं नोत्पद्यत इत्यत्राह ( न चेति ) अपुरुषतन्त्रत्वे हेतुमाह ( सत्यामिति ) व्यतिरिक्तवाक्येनोत्पन्न-

ॐ भावप्रकाशिका ॐ

ऽपेक्षित इत्येवावसीयते, यदि ब्रह्मविद्याङ्गोपनयने शूद्रत्वाभावो नापेक्षितः, अपि त्वध्ययनाङ्गोपनयन एवेत्युच्यते, तर्हि ब्रह्मविद्याङ्गमुपनयनं सत्यकामस्य जातिमपरीक्ष्यैव कुर्यात्, अतोऽवसीयते द्विविधेप्युपनयने शूद्रत्वाभावोऽपेक्षित इति ॥ ( स्मृतिशब्दविवक्षितमिति ) श्रवणाध्ययनार्थप्रतिषेधस्मृतित्वेन विवक्षितमित्यर्थः ।

सामग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः । न च वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने सति बन्धनिवृत्तिर्भवतीति शक्यं वक्तुम्; येन केनापि वस्तुयाथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः, पौरुषेयादपि निर्विशेषचिन्मात्रं ब्रह्म परमार्थोऽन्यत्सर्वं मिथ्याभूतमितिवाक्यात् ज्ञानोत्पत्तेस्तावतैव भ्रमनिवृत्तेश्च । यथा पौरुषेयादप्याप्तवाक्याच्छुक्तिकारजतादिभ्रान्तिर्ब्राह्मणस्य शूद्रादेरपि निवर्त्तते, तद्वदेव शूद्रस्यापि वेदवित्सम्प्रदायागतवाक्याद्वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति; "न चास्योपदिशेद्धर्मम्" इत्यादिना वेदविदश्शूद्रादिभ्यो न वदन्तीति च न शक्यं वक्तुम्, तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि वर्त्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्रकिङ्करत्वाभावात्,

* श्रुतप्रकाशिका *

मपि ज्ञानं न निवर्त्तकं भवतीत्यत्राह (न च वेदवाक्यादिति) येन केनापीति सामान्येनार्थशरीरोक्तिः । पक्षमाह (पौरुषेयादपीति) भ्रमनिवृत्तेः— भ्रमनिवृत्तेर्न्याय्यत्वादित्यर्थः । सपक्षमाह (यथेति) ततः किमित्यपेक्षायां दृष्टान्तोक्तमर्थं पक्षेऽतिदिशति (तद्वदिति) शङ्कान्तरमुक्त्वा परिहरति (न चेत्यादिना) वेदशिरसि— वेदान्ते निष्ठत्वात् । यद्वा वेदस्यापि शिरसि निहितचरणत्वादिति यावत् । निषेधशास्त्रकिङ्करत्वाभावादित्यनेन "दग्धाखिलाधिकारत्वाद्ब्रह्मज्ञानाग्निना मुनिः । वर्त्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः" इति नैष्कर्म्यसिद्धि-

ॐ भावप्रकाशिका ॐ

ततश्च श्रवणाध्ययनप्रायश्चित्तस्मृतिवचनस्य कथं निषेधस्मृतिवचनत्वमिति न शङ्कनीयमिति भावः । भाष्ये— विपरीतवासनायां निवृत्तायां ज्ञानमुत्पत्स्यत इति ।

अतिक्रान्तनिषेधैर्वा कैश्चिदुक्ताद्वाक्याच्छूद्रादेर्ज्ञानमुत्पद्यत एव। न च वाच्यं शुक्तिकादौ रजतादिभ्रमनिवृत्तिवत्पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्त्तेत इति; तत्त्वमस्यादिवाक्यश्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः। निदिध्यासनेन द्वैतवासनायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्त्तकज्ञानमुत्पादयतीति चेत् पौरुषेयमपि वाक्यं शूद्रादेस्तथैवेति न कश्चिद्विशेषः। निदिध्यासनं हि नाम ब्रह्मात्मभावाभिधायि वाक्यं यदर्थप्रतिपादनयोग्यं तदर्थभावना; सैव विपरीतवासनां निवर्त्तयतीति दृष्टार्थत्वं निदिध्यासनविधेर्ब्रूषे, वेदानुवचनादीन्यपि विविदिषोत्पत्तावेवोपयुज्यन्त इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यान्निदिध्यासनादि-

* श्रुतप्रकाशिका *

ग्रन्थः स्मार्यते। मुखान्तरेण ज्ञानोदयसम्भवमाह (अतिक्रान्तेति) प्रत्यक्षविरोधमाशङ्क्य परिहरति (नचेत्यादिना) शूद्रस्य निदिध्यासनेऽनधिकारान्न वाक्यार्थज्ञानोत्पत्त्या बन्धनिवृत्तिरित्यत्राह (निदिध्यासनं हीति) न निदिध्यासनमदृष्टद्वारा किञ्चित्करोति, निवर्त्यसत्यत्वप्रसङ्गात्। अदृष्टद्वारा किञ्चित्करत्वे सति हि यज्ञादाविव शूद्रानधिकारः, न च तदस्ति, अतो नायं सर्प इतिवाक्येन सर्पमिथ्यात्ववासनायामिव शूद्रादेरपि निदिध्यासनेऽधिकारो न निषेद्धुं शक्यत इति भावः। शूद्रस्य यज्ञादिकर्मानधिकारात्तत्सापेक्षं वाक्यार्थज्ञानं न जायत इत्यत्राह (वेदानुवचनादीन्यपीति) शूद्रस्यापि जन्मान्तरानुष्ठितयज्ञादिकर्मणस्स-

❁ भावप्रकाशिका ❁

ननु मनुष्याणां बहूनि ब्रह्मविद्योत्पत्तिप्रतिबन्धकानि दुरितानि, तत्र

भिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते ; तेनै-वापारमार्थिको बन्धो निवर्त्तिष्यते ; अथवा तर्कानुगृहीतात्प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुन्यज्ञानसाक्षित्वम्, तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्य एवम्भूतपरिशुद्धप्रत्यग्वस्तुन्यनवरतभावनया विपरीतवासनां निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्याभूतविचित्रैश्वर्यविचित्रसृष्ट्याद्यलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किञ्चित्प्रयोजनमिह दृश्यत इति शूद्रा-

---

* श्रुतप्रकाशिका *

ज्ञातविविदिषस्य शूद्रजन्मनि निदिध्यासनमाप्तवाक्यावगताद्वैतविषयं कर्त्तुं शक्यमिति भावः । मुखान्तरेण ज्ञानसम्भवमाह ( अथवेति ) ( तर्कानुगृहीतादिति) त्वदुक्तानां प्रमाणानुपपत्तिप्रमेयानुपपत्त्यादीनां तर्काणामवगमो हि न श्रुत्यपेक्ष

७ भावप्रकाशिका ७

यानि विविदिषोत्पत्तिप्रतिबन्धकानि तानि च वेदानुवचनयज्ञदानाद्यपूर्वनिवर्तनीयानि । यानि चोत्पन्नविविदिषस्यापि श्रवणादिसाधनसम्पत्तिविघटकानि तानि च संन्यासापूर्वनिवर्तनीयानि, यानि च सम्पन्नश्रवणस्यापि असम्भावना विपरीतभावनाबाहुल्यापादनमुखेनाविद्यानिवर्तकब्रह्मसाक्षात्कारोत्पत्तिप्रतिबन्धकानि तानि च वेदान्तश्रवणादिनियमसम्पाद्यदृष्टनिवर्त्त्यानि, ततश्च कथं शूद्रादीनां श्रवणनियमसम्पाद्यादृष्टविधुराणामधिकार इति चेन्न; नियमादृष्टवैगुण्यमात्रेण दृष्टफलानिष्पत्तेः क्वाप्यदर्शनात् उपनयनाङ्गकाध्ययननियमादृष्टवैगुण्येपि दृष्टफलस्याक्षरराशिग्रहणस्यार्थज्ञानस्य वा अनुत्पत्तेरदर्शनात्, इयांस्तु विशेषः, नियमस्य क्रत्वर्थे नियमादृष्टवैगुण्ये क्रतोर्वैगुण्यं भवति, यथाऽवघातनियमादृष्टवैगुण्ये क्रतोर्वैगुण्यम्, पुरुषार्थत्वे तु नियमोल्लङ्घने पुरुषः प्रत्यवैति, यथा द्रव्यार्जनोपायनियमवैगुण्ये, ततश्च श्रवणनियमस्य च क्रत्वर्थत्वाप्रसक्तेस्तद्वैगुण्ये पुरुषः

दीनामेव ब्रह्मविद्यायामधिकारस्सुशोभनः । अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेरुपनिषच्च तपस्विनी दत्तजलाञ्जलिस्स्यात् । नच वाच्यं नैसर्गिकलोकव्यवहारे भ्राम्यतोऽस्य केनचिदयं लौकिकव्यवहारो भ्रमः, परमार्थस्त्वेवमिति समर्पिते सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति ; यतो भवभयभीतानां साङ्ख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति, बुभुत्सायां च जातायां प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्यां नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सत्, अन्यत्सर्वं तस्मिन्नध्यस्त-

---

* श्रुतप्रकाशिका *

इति भावः । ( सुशोभन इति ) इतःपूर्वमविद्यमानमीश्वरेशितव्यादिभेदज्ञानं जनयद्वेदवाक्यं हित्वा केवलाद्वैतज्ञानजनकतर्कावलम्बिनामेव ब्रह्मविद्याधिकारः सुलभ इत्यर्थः । श्रुतिवैयर्थ्यमनुपपत्त्यन्तरमाह ( अनेनैवेति ) 'अप्राप्ते हि शास्त्रमर्थवत्' अतः प्राप्तार्थत्वात् भेदज्ञानजनकत्वाच्च ब्राह्मणादेरपि श्रुतिरनादरणीयेत्यर्थः । तपस्विनी— शोचनीया, देशकालव्रताद्यनेकनियमवतीति भावः । ( नचेति ) नैसर्गिकशब्दोऽनादित्वपरः, प्रसञ्जकत्वेन श्रुतिरपेक्षितेति शङ्काग्रन्थार्थः । दूषयति ( यत इति ) साङ्ख्यहैरण्यगर्भनैयायिकवैशेषिकबौद्धार्हतादिभिरेव प्रत्यक्षानु-

* भावप्रकाशिका *

प्रत्यवैतीति एतावद्वक्तव्यम् । ततश्च यस्तूत्पन्नब्रह्मविविदिषः शूद्रो वाऽन्यो वा प्रत्यवायमभ्युपेत्योत्पन्नमपि प्रत्यवायं ब्रह्मज्ञानेन निर्धक्ष्यामीति बुध्या लौकिकभाषाप्रबन्धादिषु प्रवृत्तः तस्य नियमादृष्टमन्तरेणापि ज्ञानोत्पत्तेर्दुर्निवारत्वात् । उत्पन्ने च ज्ञाने अविद्यानिवृत्तेः दुर्निवारत्वाच्च परेषां मतमसमञ्जसमिति पश्यामः । भाष्ये— प्रत्यक्षानुमानवृत्तेति । वृत्तम् बोधनमित्यर्थः । ( साङ्ख्यहैरण्यगर्भेति ) साङ्ख्यादिभिर्नैसर्गिकव्यवहारविरुद्धकर्तृकत्वादिविरुद्धा-

मिति सुविवेचम् । एवम्भूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यं विशेषान्तरं च नाभ्युपगम्यते, अध्यस्तातद्रूपनिवर्त्तिनी हि श्रुतिरपि त्वन्मते । नच सत आत्मन आनन्दरूपताज्ञानायोपनिषदास्थेया, चिद्रूपताया एव सकलेतरातद्रूपव्यावृत्ताया आनन्दरूपत्वात् । यस्य तु मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपम्, तच्च परब्रह्मभूतपरमपुरुषप्रीणनं, तच्च शास्त्रैकसमधिगम्यम्, उपासनशास्त्रं चोपनयनादिसंस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति; एवंरूपोपासनप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्मजनिताज्ञानं नाशयन् बन्धान्मोचयतीति पक्षः, तस्य यथोक्तया नीत्या शूद्रादेरनधिकार उपपद्यते ॥ ७ ॥ ७ ॥ ७ ॥

---

* श्रुतप्रकाशिका *

मानादिमुखेन वस्तुनिरूपणं प्रसक्तम्, अतो न श्रुत्यपेक्षेत्यर्थः । ( सुविवेचमिति ) त्वयैव हि युक्तय उपन्यस्ता इति भावः । तर्कागोचरविशेषान्तरसिद्ध्यर्थं श्रुत्यपेक्षेत्यत्राह ( एवम्भूतइति ) श्रुतेस्तात्त्विकविशेषानवबोधकत्वमुपपादयति ( अध्यस्तेति ) आनन्दत्वज्ञानाय तदपेक्षेत्यत्राह ( न चेति ) असुखव्यावृत्तिर्ह्यानन्दत्वम्, तत्सकलेतरव्यावृत्तिसाधकयुक्त्यैव सिध्यतीत्यर्थः । स्वपक्षे सर्वमुपपन्नमित्याह ( यस्य त्विति ) ॥ ॥ ७ ॥ ॥ ७ ॥

७ भावप्रकाशिका ७

त्मस्वरूपप्रत्यायने सति साधकबाधकप्रमाणस्वरूपशोधनेच्छया प्रत्यक्षानुमानप्रकारबुभुत्सा भवत्येवेति न प्रसञ्जनार्थं वेदान्तापेक्षेति भावः ॥ ७ ॥ ७ ॥

तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परिसमाप्य प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह—

कम्पनात् ॥ ४० ॥

६ अधिकरणशेषः

[1]"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि

* श्रुतप्रकाशिका *

(तद्देवमिति) देवादीनामधिकारनिरूपणं प्रसक्तम्, इतराधिकरणद्वयमनुप्रसक्तम्। (परब्रह्मभावोत्तम्भनमिति) "ईशानो भूतभव्यस्य" इत्यवगतस्य नियमनस्य जगत्सर्वमेजतीति सर्वविषयत्वतत्कार्यकम्पनज्ञापनादुत्तम्भनम्, ईशानशब्दस्य अक्षरसनिर्वाहे चिकीर्षितेऽपि तस्य विरोधीत्यर्थः। नन्वधिकारनिरूपकं 'तदुपर्यपी'त्याद्यधिकरणत्रयं तृतीयस्य चतुर्थे पादे निवेश्यम्। सत्यम्, तथापि सङ्गत्यतिशयात् समन्वयाध्याये निवेशितम्, मनुष्याधिकारत्वप्रसङ्गेन तावत् सङ्गतिः स्थिता। कार्यभूतदेवादीनां प्रामाणिकत्वसमर्थनं ब्रह्मणः परमकारणत्वोपयोगि, कार्यकारणावस्थादित्यादिचेतनान्तर्यामिण उपास्यत्वं मधुविद्यायामुक्तम्, अपशूद्राधिकरणे च संवर्गविद्यायाः परमात्मविषयत्वं ज्ञापितम्; अतः कारणानुबन्धिनो निरूपणस्य समन्वयलक्षणसङ्गतत्वात्तत्राप्यस्मिन् पादे मनुष्याधिकारप्रस्तावाच्चाधिकरणत्रयं निवेशितमिति ॥ कम्पनात् ॥ इदं सूत्रं "प्राण

* भावप्रकाशिका *

(परमकारणत्वोपयोगीति) समाननामरूपत्वाच्चावृत्तावप्यविरोध इतिसूत्रे चतुर्मुखाद्युत्पादकत्वेन परमात्मनः परमकारणत्वस्य आविष्करणादितिभावः। (मधुविद्यायामुक्तमिति) 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता' इत्यादिभागस्य कारणावस्थजीवान्तर्यामिपरत्वस्य तत्र प्रतिपादनादिति भावः। (परमात्मविषयत्वं ज्ञापितमिति) यद्यपि 'वायुर्वा व संवर्गः यदा वाग्निरुद्वासयति वायुमेवाप्येति' इत्यादिना अग्न्याद्यप्ययाधारत्वस्य परमात्मलिङ्गत्वात्संवर्गविद्यायाः परमात्मपरत्वं सिद्धवत्कृत्यैव पूर्वोत्तरपक्षयोः प्रवृत्तिर्दृष्टा, नतु तदधिकरणे तद्विद्यायाः परमात्मपर-

[1] कठ-२-४-१२ ॥

तिष्ठति' [1]'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्यनयोर्वाक्ययोर्मध्ये [2]'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ।

* श्रुतप्रकाशिका *

एजति'' इतिवाक्यविषयमधिकरणान्तरं ये वर्णयन्ति तान् प्रतिक्षिपति ( अनयोर्वाक्ययोर्मध्य इति ) परमात्मपरत्वेनोपपादितवाक्यद्वयमध्यगतत्वादस्य वाक्यस्य, अस्मिन्नेव मन्त्रे "य एतद्विदुरमृतास्ते भवन्ति" इत्यमृतत्वप्राप्तिहेतुत्वावगमात् प्राणशब्दस्य परमात्मवाचकत्वस्यानेकाधिकरणन्यायसिद्धत्वाच्च पूर्वपक्षानुदय इति भावः । प्राणः कम्पनादित्यश्रवणात् सूत्रास्वारस्यं च । ननु प्रकरणात् प्राणशब्दश्रुतिर्बलीयसी. धूमतेजोजलमरुत्सन्निपातरूपमेघात्मना परिणतस्य वायो-

* भावप्रकाशिका *

त्वसमर्थनं दृष्टम् , तथापि यथाकथञ्चित्तस्मिन्नप्यधिकरणे कारणत्वानुबन्धिविचाररूपत्वमस्तीति सङ्गत्यतिशयोऽस्तीति भावः । ( तत्रापीति ) समन्वयाध्यायेपीत्यर्थः ॥

( परमात्मपरत्वेनोपपादितेति ) ननु 'यदिदं किञ्च' इतिवाक्ये परमात्मपरत्वस्य निश्चितपरमात्मप्रतिपादकभावाङ्गुष्ठवाक्यद्वयमध्यगतत्वोपपाद्यत्वे सिद्धान्ते कम्पनस्याङ्गुष्ठवाक्यपरमात्मपरत्वोत्तम्भकत्वं न स्यात्, तन्निर्वाह्यस्य तन्निर्वाहकत्वायोगादिति चेन्न, पृथगधिकरणवादिपरीत्या दूषणदाने दोषायोगात् । यद्वा एतदक्षरसादाह ( अस्मिन्नेव मन्त्र इति ) ( पूर्वपक्षानुदय इति भाव इति ) इदमप्यत्रानुसन्धेयम्; 'कम्पनात्' इत्यस्य 'शब्दादेव प्रमितः' इत्यधिकरणशेषतया तदुत्तम्भकहेतूपन्यासरूपत्वे ''नित्यो नित्यानां चेतनश्चेतनानाम्' 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' इत्यादिसम्प्रतिपन्नपरमात्मपरभाववाक्यार्थस्यैवोत्तम्भकतया सूत्रणसम्भवे किमनेन विप्रतिपत्तिशङ्कास्पदप्राणवज्रश्रुतिघटितवाक्यार्थीभूतकम्पनोपन्यासेनेति न वाच्यम्; सर्वथा पूर्वपक्षानुत्थित्या पृथगधिकरणत्वशङ्काया असम्भवेन 'शब्दादेव प्रमित' इत्यधिकरणशेषत्वस्यैव वक्तव्यतया कम्पनशब्दस्य विनिगमनाविरहेन ज्योतिर्दर्शनव्यतिरिक्तप्राकरणिकधर्मोपलक्षकत्वसम्भवेन कम्पनादितिसूत्रेऽनुपपत्त्यभावादिति । ( प्राणः कम्पनादित्यश्रवणादिति )

१ कठ. २ ६-१७ । | २ कठ- २-६-३-२० ॥

भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" इति कृत्स्नस्य जगतोऽग्निसूर्यादीनाञ्चास्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्स-

* श्रुतप्रकाशिका *

रशनिरूपेण विवर्त्तनाद्वज्रशब्दश्रुतिश्च तत्साधिका, वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यत इति ह्यर्थः । अमृतत्वहेतुता चोपपद्यते, "वायुरेव व्यष्टिर्वायुः समष्टिरपपुनर्मृत्युञ्जयति य एवं वेद" इति श्रुतेः, अतोऽधिकरणान्तरं कार्यमिति । उच्यते ; पूर्वापरपर्यालोचनेन परमात्मपरतया निर्णीतेषु प्रकरणेषु मुख्यप्राणलिङ्गे तद्वाचकशब्दे सत्यपि परमात्मन एव प्रतिपाद्यत्वं 'प्राणस्तथाऽनुगमात्' इत्यत्र निर्णीतम् । अचेतनरूपप्रधानस्यापि मोक्षहेतुत्वानुपपत्तिः "तन्निष्ठस्य मोक्षोपदेशात्" इत्यत्रोक्ता, तत्कथं तत्कार्यैकदेशप्राणज्ञानस्य मोक्षहेतुत्वशङ्कोदयः ? वायोरशनिकारणत्वेपि प्राणशब्दस्य वायुमात्रवाचित्वाभावात्तन्मुख्यार्थस्य मुख्यप्राणस्याशनिकारणत्वाभावाच्च वज्रशब्देन न पञ्चवृत्तिप्राणशङ्का भवति । उद्यतशब्दोऽप्यशनिशङ्काविरोधी, अशनिर्हि निपतति, आयुधमेव ह्युद्यतं भवति, यथा 'तेनेन्द्रो वज्रमुदयच्छत्" इति ; अतोऽधिकरणान्तरत्वमयुक्तम् । नन्वेवं परमात्मपरत्वनिश्चयात्त्वत्पक्षेऽपि सूत्रवैयर्थ्यमिति चेन्न ; उक्तहेतूत्तम्भनरूपप्रयोजनस्य दर्शितत्वात् । सूत्रे चशब्दाभावोऽनन्तरपूर्वाधिकरणशेषत्वभ्रमानुदयार्थः, न त्वधिकरणान्तरत्वात् । प्राण इति सप्तम्यन्तपदसामर्थ्यात्स्थितानामित्यध्याहारः । कुतो निस्सृतमित्यपेक्षायां प्रकृतस्यैवापादानत्वमाह ( तत इति ) कुत एजतीत्यपेक्षायां प्रकृतस्यैव भयनिमित्तत्वमाह ( तस्मादिति )

* भावप्रकाशिका *

एतेन कम्पनादित्यस्य व्यवहितप्रमिताधिकरणशेषत्वे आकाशोऽर्थान्तरत्वादिव्यपदेशादित्यस्यापि उक्तरीत्या दहराधिकरणशेषत्वं किं न स्यादिति वाचाटवचसोपि नावकाश इति द्रष्टव्यम् । ( वायुनिमित्तमेवेति ) वायोरेवाशनिरूपेण परिणामेन तस्यैव महाभयहेतूद्यतवज्ररूपत्वसम्भवादित्यर्थः । ( वज्रशब्देन न पञ्चवृत्तिप्राणशङ्का भवतीति ) यद्यपि प्राणश्रुतिबलादाध्यात्मिकः पञ्चवृत्तिर्वायुरभिधीयते,

ज्ञातमहाभयनिमित्तमेजनं कम्पनं श्रूयते । तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः । "भयादस्याग्निस्तपति" इत्यनेनैकार्थ्यात् । "महद्भयं वज्रमुद्यतम्" इति पञ्च-

---

* श्रुतप्रकाशिका *

भयम्—आगाम्यनिष्टापत्तिज्ञानरूपं दुःखम् । एजनम्— तत्कार्यम् । श्रुतिसूत्रयोरभिन्नार्थत्वं ज्ञापयति ( एजनं कम्पनमिति ) "एजृ कम्पने" इति हि धातुः । प्रत्यवायभयात् स्वस्वकार्येषु प्रवृत्तिः कम्पनम्, तथेहाप्यवगम्यते 'भयादस्याग्निस्तपति" इति तपनं ह्यग्न्यादित्ययोः कार्यम् । धावतिशब्द इन्द्रादीनां स्वस्वव्यापारपरः । भयं विवृण्वन् वाक्यार्थं योजयति ( तच्छासनेति ) ( महतो भयादिति ) भयशब्दो न भयानकपरः, लक्षणाप्रसङ्गादिति भावः । ( वज्रादिवोद्यतादिति ) वज्रशब्द आयुधपरः, न त्वशनिपरः, उद्यतशब्दविशेषितत्वादिति भावः । वज्रादिवेति इवशब्देन श्रुतिवाक्ये वज्रशब्द उपचाराद्वज्रतुल्ये वर्तते, अध्याहारादपि गौणवृत्तेरुचितत्वादिति वज्रशब्दस्य तत्तुल्यार्थत्वं फलतो दर्शितम् । कथं हेतुत्वावगम इत्यत्राह ( भयादस्येति ) कथं प्रथमायाः पञ्चम्यर्थत्वमित्यत आह ( महद्भयं वज्रमुद्यतमितीति ) न वज्रं भयदृष्टान्तः, दृष्टान्तदा-

* भावप्रकाशिका *

वज्रश्रुतिबलाच्चाशन्याकारेण परिणतो बाह्यवायुरभिधीयते, प्राणमात्रस्य वज्रोद्यमनहेतुत्वासम्भवात्, अत उभयोश्चिन्तनं संवर्गविद्यावत्क्रियत इत्येव तेषां पूर्वपक्षः, तथैव स्पष्टं कल्पान्तराभिधानात् । वाचस्पतिनापि 'प्राणवज्रश्रुतिबलाद्वाक्यं प्रकरणं च भङ्क्त्वा आध्यात्मिकप्राणो बाह्यवायुश्चात्र प्रतिपाद्यते' इत्यभिधानाच्च । तथापि तद्भाष्ये पूर्वपक्षे वायुरेव प्रतिपत्तव्य इत्युपसंहारदर्शनादेकविषयत्वप्रतीतेस्तथाभिप्रायसम्भवमभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । ( लक्षणाप्रसङ्गादिति भाव इति ) न च बिभेत्यस्मादिति व्युत्पत्तिसम्भवान्न लक्षणेति वक्तव्यम् । भयशब्देन भयहेतुप्रतीतेरसति बाधकेऽनुदयेन तत्प्रतीतेर्लक्षणैकशरणत्वादिति भावः । (अध्याहारादपीति) इवशब्दाध्याहारादपीत्यर्थः । अत एव पूर्वतन्त्रे प्रयुक्तिलक्षणे 'प्राचीमाहरती'त्यत्र प्राचीशब्दस्य दिग्वचनत्वे मुख्यत्वसत्त्वेपि आहर्त-

* श्रुतप्रकाशिका *

ष्टान्तिकवैघम्यात् । भयमव्यवधानेन कम्पनहेतुः, वज्रन्तु भयद्वारा तद्धेतुः, अतो वज्रं भयहेतुदृष्टान्तः । उद्यताद्वज्रादिव परमपुरुषात् सञ्जातेन भयेन कृत्स्नं जगत् कम्पत इत्यर्थः । तस्मात्सञ्जातमहाभयनिमित्तमेजनमिति पूर्वग्रन्थैकार्थ्यात्; एवं तर्हि प्रथमान्तपदसामानाधिकरण्यस्वारस्यभङ्गः इवशब्दाध्याहारश्च स्यात्, तदुभयानादरेणार्थवर्णनं किंनिबन्धनमित्यत्राह— भयादस्येति । अनन्तरवाक्ये भयादस्येति भयतद्धेतुवाचिपदयोर्वैयधिकरण्यदर्शनात् भयपदस्य पञ्चम्यन्तत्वदर्शनात् पूर्वापरवाक्ययोरैकार्थ्यस्य न्याय्यत्वाद्दृष्टान्तदार्ष्टान्तिकसामञ्जस्याच्चेत्यर्थः । ननु भयशब्देन भयानकलक्षणा न्याय्या, गङ्गापदादिषु प्रकृत्यंशेन प्रकृत्यन्तरार्थलक्षणाया दृष्टत्वात् । प्रथमाया हेत्वर्थलक्षणा त्वयुक्ता, विभक्तीनां विभक्त्यन्तरार्थे लक्षणाया अदर्शनात्; तच्चानुशासनविरोधात् । पाशाधिकरणेपि हि बहुत्वाविवक्षामात्रम्, न तु विभक्त्यन्तरार्थलक्षणा ; अतो भयानकं वज्रमिव ब्रह्म यत्तस्मात्कृत्स्नं जगत्कम्पत इत्येव हि योजना युक्ता ; अत आह— महद्भयं वज्रमुद्यतमितीति । 'सुपां सुलुक्' इत्यादिसूत्रेण सर्वविभक्तिषु प्रथमायाः विहितत्वात् इयं प्रथमा पञ्चम्यर्थवाचिनीत्यर्थः । वचनव्यत्ययो वा । अयमभिप्रायः, योजनाद्वयेऽपि इवशब्दाध्याहारो वज्रशब्दस्यामुख्यत्वं वाऽवश्यम्भवेत् । प्रथमान्तयोजनायां प्रथयाविभक्तिस्वारस्यं सामाना-

* भावप्रकाशिका *

न्यत्वासम्भवेन प्रतिशब्दाध्याहारबलात्प्राचीशब्दः प्रागग्रलक्षक इत्याश्रितमिति भावः । ( कथं हेतुत्वावगम इति ) भयमिति श्रूयमाणे भयादित्यर्थः । पूर्वमवतारितस्य भाष्यस्य भयादस्येत्यादिभाष्यद्वयस्याभिप्रेतामाशङ्कान्तरनिवृत्तिमप्याह ( एवं तर्हीति ) अथवात्र यद्वेत्यध्याहारः । ( प्रथमान्तपदसामानाधिकरण्यस्वारस्यभङ्ग इति ) प्रथमान्तपदत्वभङ्गः भयशब्दस्य वज्रपदसामानाधिकरण्यस्वारस्यभङ्गश्चेत्यर्थः । ( इवशब्दाध्याहारश्च स्यादिति ) लक्षणा च स्यादित्यर्थः । अध्याहारस्य पूर्वमेव निरस्तत्वात् । यद्यपि वज्रशब्दस्य लक्षणा सर्वपक्षसाधारणी, तथापि पूर्वदूषणे तात्पर्यम् । ( प्रथमाया विहितत्वादिति ) यद्यपि 'सुपां सुलुक्' इति सूत्रे स्वादेश एव विहितः, तथापि प्रथमैकदेशवचनस्य प्रत्यभिज्ञायमानतया तस्यैव विधानमभिप्रेत्य प्रथमाया विहितत्वोक्तिः । यद्वा 'सुपां सुपो भवन्ति' इति

म्यर्थे प्रथमा। अयञ्च परस्य ब्रह्मणः स्वभावः [1]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [2]"भीषास्माद्वातः पवते । भीषोदेति सूर्य्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः" इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः ॥ ४० ॥

इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

ज्योतिर्दर्शनात् ॥ ४१ ॥

तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्म-

---

* श्रुतप्रकाशिका *.

धिकरण्यस्वारस्यञ्चाभग्नं स्यात्, भयशब्दस्य तद्धेतुलक्षणाश्रयणं यत्तच्छब्दाध्याहारः पदैकवाक्यतायां सम्भवन्त्यां तत्प्रहाणेन वाक्यैकवाक्यभावाङ्गीकार इति त्रयो दोषाः । योजनान्तरे प्रथमायाः पञ्चम्यर्थताश्रयणास्वारस्यं सामानाधिकरण्यभङ्गश्च द्वौ दोषौ, भयपदप्रातिपदिकमुख्यत्वं यत्तच्छब्दानध्याहारः पदैकवाक्यता भयादस्येत्यनन्तरवाक्यैकरूप्यञ्चेति चत्वारो गुणाः, अतो दोषभूयस्त्वगुणलाघवयुक्तनिर्वाहादपि दोषलाघवगुणभूयस्त्वयुक्तनिर्वाहो वरमिति । कृत्स्नजगद्भयावहत्वलक्षणस्य प्रशासनस्य परमात्मधर्मत्वं श्रुत्यन्तरप्रसिद्ध्योपपादयति ( अयञ्चेति ) ॥ ज्योतिर्दर्शनात् ॥ एतत्प्रकरणहेतुत्वमेव युक्तमिति दर्शयति ( वाक्ययोर्मध्य इति ) 'न तत्र सूर्य्यः' इत्यादिमन्त्रे पूर्वार्द्धस्यार्थमाह

७ भावप्रकाशिका ७

तत्सूत्रवार्तिकेन सर्वासामपि विभक्तीनां स्थाने सर्वासामपि विभक्तीनां विधानात् प्रथमाया अपि सर्वविभक्तिस्थाने विहितत्वमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । 'सुपां सुपो भवन्ती'त्यादीनां 'व्यत्ययो बहुल'मिति सूत्रप्रपञ्चतया तेनैव सूत्रेण तत्सिद्धिमभिप्रेत्याह ( वचनव्यत्ययो वेति ) व्यत्ययो बहुलमितिसूत्रे विहितविभक्तिव्यत्ययो वेत्यर्थः । 'सक्तून् जुहोति' इत्यादौ विभक्तिव्यत्ययदर्शनाद्दर्शनं न दोष इति भावः ॥ ( एतत्प्रकरणहेतुत्वमेवेति ) अङ्गुष्ठप्रमितवाक्यद्वयमध्यगतस्यास्य

---

[1] बृ ५-८-९ । | [2] तै-आ. ८-१ ॥

* श्रुतप्रकाशिका *

ष्टान्तिकवैघय्यात् । भयमव्यवधानेन कम्पनहेतुः, वज्रन्तु भयद्वारा तद्धेतुः, अतो वज्रं भयहेतुदृष्टान्तः । उद्यताद्वज्रादिव परमपुरुषात् सञ्जातेन भयेन कृत्स्नं जगत् कम्पत इत्यर्थः । तस्मात्सञ्जातमहाभयनिमित्तमेजनमिति पूर्वग्रन्थैकार्थ्यात्; एवं तर्हि प्रथमान्तपदसामानाधिकरण्यस्वारस्यभङ्गः इवशब्दाध्याहारश्च स्यात्, तदुभयानादरेणार्थवर्णनं किंनिबन्धनमित्यत्राह— भयादस्येति । अनन्तरवाक्ये भयादस्येति भयतद्धेतुवाचिपदयोर्वैयधिकरण्यदर्शनात् भयपदस्य पञ्चम्यन्तत्वदर्शनात् पूर्वापरवाक्ययोरैकार्थ्यस्य न्याय्यत्वाद्दृष्टान्तदार्ष्टान्तिकसामञ्जस्याच्चेत्यर्थः । ननु भयशब्देन भयानकलक्षणा न्याय्या, गङ्गापदादिषु प्रकृत्यंशेन प्रकृत्यन्तरार्थलक्षणाया दृष्टत्वात् । प्रथमाया हेत्वर्थलक्षणा त्वयुक्ता, विभक्तीनां विभक्त्यन्तरार्थे लक्षणाया अदर्शनात्; तच्चानुशासनविरोधात् । पाशाधिकरणेपि हि बहुत्वाविवक्षामात्रम्, न तु विभक्त्यन्तरार्थलक्षणा ; अतो भयानकं वज्रमिव ब्रह्म यत्तस्मात्कृत्स्नं जगत्कम्पत इत्येव हि योजना युक्ता ; अत आह— महद्भयं वज्रमुद्यतमितीति । 'सुपां सुलुक्' इत्यादिसूत्रेण सर्वविभक्तिषु प्रथमायाः विहितत्वात् इयं प्रथमा पञ्चम्यर्थवाचिनीत्यर्थः । वचनव्यत्ययो वा । अयमभिप्रायः, योजनाद्वयेऽपि इवशब्दाध्याहारो वज्रशब्दस्यामुख्यत्वं वाऽवश्यम्भवेत् । प्रथमान्तयोजनायां प्रथयाविभक्तिस्वारस्यं सामाना-

* भावप्रकाशिका *

न्यत्वासम्भवेन प्रतिशब्दाध्याहारबलात्प्राचीशब्दः प्रागग्रलक्षक इत्याश्रितमिति भावः । ( कथं हेतुत्वावगम इति ) भयमिति श्रूयमाणे भयादित्यर्थः । पूर्वमवतारितस्य भाष्यस्य भयादस्येत्यादिभाष्यद्वयस्याभिप्रेतामाशङ्कान्तरनिवृत्तिमप्याह ( एवं तर्हीति ) अथवात्र यद्वेत्यध्याहारः । ( प्रथमान्तपदसामानाधिकरण्यस्वारस्यभङ्ग इति ) प्रथमान्तपदत्वभङ्गः भयशब्दस्य वज्रपदसामानाधिकरण्यस्वारस्यभङ्गश्चेत्यर्थः । ( इवशब्दाध्याहारश्च स्यादिति ) लक्षणा च स्यादित्यर्थः । अध्याहारस्य पूर्वमेव निरस्तत्वात् । यद्यपि वज्रशब्दस्य लक्षणा सर्वपक्षसाधारणी, तथापि पूर्वदूषणे तात्पर्यम् । ( प्रथमाया विहितत्वादिति ) यद्यपि 'सुपां सुलुक्' इति सूत्रे स्वादेश एव विहितः, तथापि प्रथमैकदेशवचनस्य प्रत्यभिज्ञायमानतया तस्यैव विधानमभिप्रेत्य प्रथमाया विहितत्वोक्तिः । यद्वा 'सुपां सुपो भवन्ति' इति

म्यर्थे प्रथमा। अयञ्च परस्य ब्रह्मणः स्वभावः [1]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [2]"भीषास्माद्वातः पवते । भीषोदेति सूर्य्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः" इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः ॥ ४० ॥

इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

ज्योतिर्दर्शनात् ॥ ४१ ॥

तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्म-

---

* श्रुतप्रकाशिका *.

धिकरण्यस्वारस्यञ्चाभग्नं स्यात्, भयशब्दस्य तद्धेतुलक्षणाश्रयणं यत्तच्छब्दाध्याहारः पदैकवाक्यतायां सम्भवन्त्यां तत्प्रहाणेन वाक्यैकवाक्यभावाङ्गीकार इति त्रयो दोषाः । योजनान्तरे प्रथमायाः पञ्चम्यर्थताश्रयणास्वारस्यं सामानाधिकरण्यभङ्गश्च द्वौ दोषौ, भयपदप्रातिपदिकमुख्यत्वं यत्तच्छब्दानध्याहारः पदैकवाक्यता भयादस्येत्यनन्तरवाक्यैकरूप्यञ्चेति चत्वारो गुणाः, अतो दोषभूयस्त्वगुणलाघवयुक्तनिर्वाहादपि दोषलाघवगुणभूयस्त्वयुक्तनिर्वाहो वरमिति । कृत्स्नजगद्भयावहत्वलक्षणस्य प्रशासनस्य परमात्मधर्मत्वं श्रुत्यन्तरप्रसिद्ध्योपपादयति ( अयञ्चेति ) ॥ ज्योतिर्दर्शनात् ॥ एतत्प्रकरणहेतुत्वमेव युक्तमिति दर्शयति ( वाक्ययोर्मध्य इति ) 'न तत्र सूर्य्यः' इत्यादिमन्त्रे पूर्वार्द्धस्यार्थमाह

* भावप्रकाशिका *

तत्सूत्रवार्तिकेन सर्वासामपि विभक्तीनां स्थाने सर्वासामपि विभक्तीनां विधानात् प्रथमाया अपि सर्वविभक्तिस्थाने विहितत्वमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । 'सुपां सुपो भवन्ती'त्यादीनां 'व्यत्ययो बहुल'मिति सूत्रप्रपञ्चतया तेनैव सूत्रेण तत्सिद्धिमभिप्रेत्याह ( वचनव्यत्ययो वेति ) व्यत्ययो बहुलमितिसूत्रे विहितविभक्तिव्यत्ययो वेत्यर्थः । 'सक्तून् जुहोति' इत्यादौ विभक्तिव्यत्ययदर्शनाद्दर्शनं न दोष इति भावः ॥ ( एतत्प्रकरणहेतुत्वमेवेति ) अङ्गुष्ठप्रमितवाक्यद्वयमध्यगतस्यास्य

---

१ बृ ५.८.९ । | २ तै-आ. ८-१ ॥

साधारणं सर्वतेजसां छादकं सर्वतेजसां कारण-भूतमनुग्राहकं चाक्षुषप्रमितस्य ज्योतिर्दृश्यते [1] "न तत्र

* श्रुतप्रकाशिका *

( सर्वतेजसां छादकमिति ) उत्तरार्द्धस्य पूर्वपादार्थमाह ( सर्वतेजसां कारण-भूतमिति ) अनुभानम्—पश्चाद्भानम्, तेन कार्यकारणभावस्सिद्धः, पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः । चतुर्थपादार्थमाह ( अनुग्राहकमिति ) 'यस्या-दित्यो भामुपयुज्य भाति' इत्यादिश्रुतिश्चानुग्राहकत्वे प्रमाणं ( ज्योतिर्दृश्यत इति) ज्योतिः—दीप्तिः । 'ज्योतिष्मद्भ्राजमानं महस्वत्' इति प्रयोगात् । ननु कथं कारण-त्वानुग्राहकत्वे सम्भवतः ? तद्धि प्राकृततेजो विजातीयम् । सजातीयतेजो हि तेजसां कारणमनुग्राहकं च दृष्टम्, यथा दीपो दीपान्तरस्य, दीपादिप्रभा च चाक्षुष-प्रभाया इति । उच्यते निमित्ततया कारणत्वोपपत्तिः, उपादानस्यैव हि साजा-त्यापेक्षा ; आहङ्कारिकस्य विजातीयस्यापि चक्षुषस्तेजोद्रव्येणाप्यायनं च दृष्टम् । निमित्तकारणत्वञ्च तेजः कारणभूतवस्त्वनुग्राहकतया भवति । यथा कालस्य निमि-त्तत्वं कारणवस्त्वनुग्राहकतया, यथा च सलिलदहनातपादीनां घटो-त्पत्तौ निमित्तत्वं मृद्द्रव्यसंयोगेन तत्र किञ्चित्करतया भवति, एवमप्राकृततेजो-ऽपि प्राकृततेजस उत्पत्तौ तदुपादानद्रव्यस्यानुग्राहकतया निमित्तं भवतीत्यभ्युप-

* भावप्रकाशिका *

मन्त्रस्य तत्प्रकरणभङ्गेन प्राकृततेजोधातुपरत्वशङ्का न युक्तेति दर्शयतीत्यर्थः । 'ज्योतिष्मद्भ्राजमानं महस्वत्' इति । न चात्रापि ज्योतिश्शब्दस्य तेजःपरत्व-सम्भवात् दीप्तिपरत्वं सम्प्रतिपन्नमिति वाच्यम्, महस्वदित्यनेन पुनरुक्तिप्रसङ्गादिति भावः । ( आप्यायनं च दृष्टमिति ) अनुग्रहश्च दृष्ट इत्यर्थः । ननु प्राकृततेजसो-ऽनुग्राहकत्वातिरेकेण निमित्तत्वस्याभावात्. निमित्तत्वानुग्राहकत्वे तृतीयतुरीय-पादप्रतिपाद्ये इत्युक्तिः कथमित्याशङ्क्य सत्यमनुग्राहकत्वपर्यवसितं निमित्तत्वम्, तथापि तेज उत्पत्तौ तत्कारणानुग्राहकत्वलक्षणनिमित्तत्वं तृतीयपादार्थः, उत्प-न्नस्य तेजसस्स्वकार्यारम्भसामर्थ्योपादकत्वलक्षणमनुग्राहकं तुरीयपादार्थ इत्यभिप्र-यन्नाह ( निमित्तकारणत्वञ्चेत्यादि ) ( तस्मिन् भासमान इति ) अनन्तगुणवि-

1 कठ. २-५-१५ ॥

* श्रुतप्रकाशिका *

गन्तव्यम्, प्रमाणबलात्। उत्पन्नस्यापि तेजसः स्वकार्यकारणसामर्थ्यस्य तत्सम्बन्धापेक्षत्वात्तदनुग्राहकम्, यथा चाक्षुषरश्मेश्चन्द्रातपादिः, यथा शुष्ककण्ठस्य वाग्व्यवहारे पानीयास्वादनम्, यथा मनसो धारणग्रहणस्मरणादिपाटवे सम्यगाहारः। उक्तलक्षणकारणत्वानुग्राहकत्वाभिप्रायेण भगवता पराशरेण मूर्त्तब्रह्मशब्दवाच्यदिव्यविग्रहविशिष्टत्वमुक्त्वा "ततो जगज्जगत्तस्मिन् स जगच्चाखिलं मुने इत्युच्यते ; स जगदिति सामानाधिकरण्यं धारकत्वनिबन्धनम् । अस्य वाक्यस्य परोक्तार्थोऽनुपपन्नः । तथाहि ; सूर्यादिभिरप्रकाश्यत्वं न पूर्वार्धस्यार्थः, भातिशब्दस्य ज्ञानवाचित्वाभावात्. स हि दीप्त्यर्थः, "भा दीप्तौ" इति हि धातुः। किञ्च यदि भासयितृत्वं निषिध्यते तदा ब्रह्मविषयज्ञानहेतुत्वनिषेध इति च वक्तुं शक्यते, इह च भानमेव निषिध्यते, न भासयितृत्वम्। यदि णिजर्थान्तर्भावनमिष्टं तदा तत्रेति सप्तमी न घटते, कर्मत्वस्यैव प्राप्तत्वात्; अतोर्थाऽन्तरानुपपत्तेः "दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता। यदि भास्सदृशी सा स्यात् भासस्तस्य महात्मनः" इति स्मृत्यानुगुण्याच्च तदीयदीप्तिसाक्षात्कारसम्भवे तेजोऽन्तराणामभिभूतत्वमेवात्र प्रतिपाद्यम्। तृतीयपादे चाधिष्ठानस्फुरणाधीनमध्यस्थस्फुरणमुच्यत इति चायुक्तम्, तमितिपुँल्लिङ्गान्तस्य तच्छब्दस्य चिदचिद्व्यावर्तकानन्तगुणविशिष्टपरमपुरुषपरत्वात्तस्मिन्भासमानेऽध्यासानुपपत्तेरध्यस्तवस्तुस्फुरणायोगात्सर्वज्ञत्वादिगुणको निर्दोषः परमपुरुषो हि मण्डके प्रकृतः, कठवल्ल्याञ्चाकर्मवश्योऽनन्तमहिमा सर्वनियन्ता सर्वाधारो विष्णुशब्दवाच्यस्सर्वस्मात्परस्स एव पुरुषः प्रकृतः, श्वेताश्वतरे च सहस्रशीर्षत्वसहस्राक्षत्वादिमान् स्वाभाविकपरज्ञानशक्त्यादिगुणकः सत्त्वप्रवर्त्तको महापुरुषः प्रकृतः। सर्वज्ञत्वादयश्च गुणाः समस्तचिदचिद्व्यावर्त्तकाः, तैर्विशिष्ट एव तच्छब्देन परामृश्यते, न वस्तुमात्रम्; तच्छब्दस्य प्रकृतपरामर्शित्वस्वारस्यभङ्गात् पुँल्लिङ्गनिर्देशस्य प्रकृतपुरुषविषयत्वज्ञापकत्वाच्च, अतस्तमेव भान्तमिति तद्दीप्तियोगस्य स्वाभाविकत्वं नित्यत्वमप्रतिहतत्वमितरतेजसां तद्भे-

ɕ भावप्रकाशिका ɕ

शिष्टपरमपुरुषे भासमान एव प्रपञ्चाध्यास इत्यस्याभावेन तत्स्फुरणानुरोध्याध्यस्तप्रपञ्चस्फुरणमित्यस्यानुपपत्तेरित्यर्थः । नहि तन्मतेपि विशिष्टभानानुविधानभानं प्रपञ्चस्याभ्युपगतम्, अपितु शुद्धस्यैवाधिष्ठानतया तद्भानानुविधानमेवाभ्युपेतमिति

सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति । अयमेव श्लोक आथर्वणे परं ब्रह्माधिकृत्य श्रूयते। परज्योतिष्ट्वञ्च सर्वत्र परस्य

* श्रुतप्रकाशिका *

तुकत्वं चोक्तम्, तमेव भान्तम्– तं भान्तमेवेति ह्यन्वयः । तमेवेत्यन्वये सति व्यवच्छेद्यतेजोऽन्तरासम्भवात्; तथाऽन्वयेपि न विरोधः । यद्यधिष्ठानस्फुरणाधीनमध्यस्तस्फुरणमित्युच्येत तदा 'तस्य भासा सर्वमिदं विभाती'ति पुनरुक्तिश्च स्यात्। तस्य वृत्तिरूपज्ञानेन सर्वं भातीत्यर्थ इति चेन्न ; भाश्शब्दस्य वृत्तिज्ञानवाचित्वाभावात् ; अतो भगवत्तेजसस्सर्वतेजोऽनुग्राहकत्वमेव चतुर्थपादार्थः ; अतः प्रकरणस्थरुक्मवर्णश्रुतिपुरुषशब्दप्रत्यभिज्ञापितादित्यवर्णश्रुतिप्रसिद्धदिव्यविग्रहद्वारकनिरवधिकदीप्तिविशिष्टोऽनेन मन्त्रेण प्रतिपाद्यते । परमात्मपरतया निर्णीतप्रकरणस्थतया प्रत्यभिज्ञायमानत्वाच्चास्य मन्त्रस्य परमात्मसाधकत्वमित्याह (अयमेव श्लोक इति) एवं शब्दतः प्रत्यभिज्ञानं हेतुतयोक्तम्, अर्थतः श्रुत्यन्तरप्रत्यभिज्ञानञ्चास्य मन्त्रस्य परमात्मत्वसाधकत्वोपपादकमित्यभिप्रायेणाह– (परज्योतिष्ट्वञ्चेति) आदिशब्देन "तच्छुभ्रं ज्योतिषां ज्योतिः 'नारायणपरो ज्योतिः' इत्याद्यभिप्रेतम्। एवं स्वपक्षसाधकतया श्रुत्यन्तरस्थवाक्यत्रयोपादानेन अर्थात्परपक्षव्युदासश्च सिद्धः, परैः खल्विदं सूत्रम् ; "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय" इत्यादिवाक्यविषयमधिकरणान्तरं व्याख्यातम्; तत्र च ज्योतिश्शब्दस्यादित्यपरत्वं

❀ भावप्रकाशिका ❀

भावः । ( भान्तमेवेति ह्यन्वय इति ) विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदकतया नित्यस्वाभाविकत्वे सिध्यतः, अप्रतिहतत्वं तु पूर्वार्धेनेतरतेजसां तद्धेतुकत्वतदनुभानश्रुत्येति भावः ( व्यवच्छेद्यतेजोन्तरासम्भवादिति ) अन्यं भान्तं नानुभातीत्येवं व्यवच्छेद्यानुभानयोग्यतेजोन्तराप्रसक्तेरित्यर्थः । ( प्रकरणस्थरुक्मवर्णश्रुतीति ) मुण्डके 'न तत्र सूर्यो भाति' इति प्रकरणगतया 'यदा पश्यः पश्यते रुक्मवर्णम्' इति रुक्मवर्णश्रुत्या कठवल्ल्यां 'न तत्र सूर्यो भाति' इति प्रकरणगतेन 'अङ्गुष्ठमात्रः पुरुषः' इत्यादिपुरुषशब्देन प्रत्यभिज्ञाप्यमानया 'वेदाहमेतं

ब्रह्मणः श्रूयते । यथा [1]"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" [2]"तं देवा ज्योतिषां ज्योतिरायु-

* श्रुतप्रकाशिका *

पूर्वपक्षीकृत्य परब्रह्मपरत्वं सिद्धान्तितम् । तदयुक्तम्, पूर्वपक्षानुत्थानात् । ज्योतिश्शब्दश्रुतिर्हि प्रकरणाद्बलीयसी अत उत्थानमिति चेन्न; किं ज्योतिश्श्रुतिरादित्यासाधारण्यात्तत्साधिका, उत साधारण्येऽपि प्रवृत्तिनिमित्तभूतप्रकाशकत्वपौष्कल्याद्वा; न प्रथमः "आपो ज्योतिश्च पञ्चमम्" अग्निर्ज्योतिरहः शुक्लः" "ज्योतींषि शुक्राणि च यानि लोके" 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' इति बह्वर्थसाधारणतया प्रयुज्यमानत्वात् । न द्वितीयः, 'नारायणपरो ज्योतिः' तच्छुभ्रं ज्योतिषां ज्योतिः' 'तं देवा ज्योतिषां ज्योतिः" इति नारायण एव प्रवृत्तिनिमित्तपौष्कल्यदर्शनादित्यभिप्रायेण 'तं देवा ज्योतिषा'मिति वाक्यमुपात्तम् । ज्योतिषां ज्योतिरित्युक्तत्वात् ज्योतिष्ट्वं तत्प्रकर्षश्च ह्यवगम्यते, अतो ज्योतिश्शब्दस्य साधारण्यं भगवत्येव प्रवृत्तिनिमितपौष्कल्यञ्च तेन सिद्धम् । आदित्यासाधारण्याभ्युपगमेऽपि कृतकरत्वज्ञापनाय अथ यदतः पर इति वाक्यमुदाहृतम्, " अथ यदतः परो दिवो ज्योतिर्दीप्यत" इत्येतद्वाक्यविषयेण 'ज्योतिश्चरणाभिधानात्' इत्यधिकरणेन ज्योतिश्शब्दश्रुतेः परिहृतत्वात् । तत्र हि 'पादोऽस्य विश्वाभूतानी'ति प्रकरणम्. स्थितमपि तदनादृत्य ज्योतिश्शब्दस्य तमःप्रतिद्वन्द्विनि प्रसिद्धतया आदित्यविषयत्वं परैरेवोक्तं परिहृतञ्च अतः कृतकरत्वम् । परशब्दविशेषितज्योतिश्शब्दोऽपि नादित्ये रूढः, परत्वस्य निरतिशयस्य तस्मिन्नसम्भवादेव गुणयोगादपि नादित्यप्रतीतिः । उत्थानश्रुतिः क्त्वाश्रुतिश्च पूर्वपक्षहेतुरिति चेन्न; परब्रह्म-

ॐ भावप्रकाशिका ॐ

पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इत्यादित्यवर्णश्रुत्या च सिद्धा या दिव्यविग्रहद्वारकनिरतिशयदीप्तिस्तद्विशिष्ट इत्यर्थः । ( उत्थानश्रुतिरिति ) ब्रह्मणः सर्वगतत्वेन तत्प्राप्तौ शरीरादुत्क्रमणस्यानपेक्षितत्वाद्ब्रह्मसाक्षात्कारानन्तरभाविन्यां ब्रह्मप्राप्तौ उपसम्पद्येति क्त्वाप्रत्ययेन तत्पूर्वभावित्वनिर्देशस्यानुपपन्नत्वाच्च "शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्-

१ छा. ८-१२-२ ॥ | २ बृ. ४-१६ ॥

हीँपासतेऽमृतम्" [१]"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिषु, अतोऽङ्गुष्ठप्रमितः परं ब्रह्म ॥ ७ ॥

* श्रुतप्रकाशिका *

विषयत्व एव तयोरुपपत्तेर्वक्ष्यमाणत्वात् । मास्तु तयोः परब्रह्मविषयत्वसम्भवः, तथापि नारम्भणीयता, "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इति सूत्रेणास्य वाक्यस्य परब्रह्मप्राप्तिप्रतिपादकत्वस्य समर्थितत्वात् । 'यत्तत्परं ज्योतिरुपसम्पत्तव्यं श्रुतं तत्परं ब्रह्म तच्चापहतपाप्मत्वादिधर्मकं तदेव च जीवस्य पारमार्थिकं रूप'मिति हि तैरुक्तम्; 'श्रुतिकृतं विवेकज्ञानं शरीरात्समुत्थानम्, विवेकज्ञानफलं स्वरूपेणाभिनिष्पत्ति'रिति समुत्थानादिश्रुतिनिर्वाहश्च तैस्तत्रैव कृतः, अतः कृतकरत्वम् । इह परब्रह्मोपसम्पत्त्याऽऽविर्भूतस्वरूपविषयत्वसमर्थनमुपजीव्य दहराकाशस्य परमात्मत्वं तत्र समर्थितमिति चेत्तर्हि 'उत्तराच्चे'ति सूत्रानन्तरं 'ज्योतिर्दर्शना'दिति सूत्रं निवेशयितव्यम्, हेतुप्रयोगानन्तरमेव हेत्वसिद्धेः परिहरणीयत्वात् । अपहतपाप्मत्वादिगुणकस्यात्मनो वक्तव्यत्वेन अनुवृत्तिदर्शनेन हि तदसिद्धिरिह परिह्रियते, इदञ्च तत्रैवोक्तम् अपहतपाप्मत्वादिगुणकमात्मानं प्रस्तुत्य 'एतं त्वेव ते भयोऽनुव्याख्यास्यामीति तमाकृष्य तस्य स्वप्नसुषुप्त्याद्युपन्यासक्रमेण परमार्थस्वरूपाविर्भावोपदेशपरमिदं वाक्यमिति तत्र तैरेव प्रतिपादनात्तदप्रतिपादने चास्य वाक्यस्याविर्भूतस्वस्वरूपविषयत्वासिद्धेः, अतः कृतकरत्वमन्यथा

७ भावप्रकाशिका ७

ऽन्या उत्क्रमणे भवन्ति" इत्युपासकानां मूर्धन्यनाड्या शरीरात्समुत्थानस्य 'यावत् क्षिपेन्मनस्तावदादित्यं गच्छेत्' इति तदनन्तरमेवादित्यप्राप्तेश्च वर्णितत्वादिहापि 'शरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य' तिशब्दाभ्यां तदर्थप्रत्यभिज्ञानादादित्यज्योतिषश्च मार्गे प्रथमपर्वभूतार्चिर्ज्योतिरपेक्षया परत्वेन कथञ्चित्परत्वोपपत्तेरादित्यं प्राप्तस्य च ब्रह्मलोकप्राप्त्यनन्तरंभाविक्रममुक्त्यभिप्रायेण 'स्वेन रूपेणाभिनिष्पद्यते' इत्यस्याप्युपपत्तेश्चार्चिरादिमार्गपर्वभूतादित्यप्राप्तिरेव परं ज्योतिरुपसम्पद्येतिवाक्यार्थ इति पूर्वपक्षहेतुरुपन्यस्त इति चेदित्यर्थः । (वक्ष्यमाणत्वादिति) चतुर्थाध्याय इति शेषः (हेतुप्रयोगानन्तरमेवेति) 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति

१ छा. ३-१३-७ ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४२ ॥

१० अधिकरणम्

छान्दोग्ये श्रूयते [1]"आकाशोह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा"इति । तत्र संशयः, किमयमाकाशशब्दनि-

* श्रुतप्रकाशिका *

तत्रैवैतत्सूत्रनिवेशनं वा प्रसजेत् । अपरे त्वाहुः— शरीरादुत्थानस्य स्वेन रूपेणाभिनिष्पत्तेश्च मध्ये श्रूयमाणा परज्योतिःप्राप्तिर्नामादित्यप्राप्तिः अर्चिरादिमार्गप्रत्यभिज्ञानात् ; तत्र ह्यादित्यादिप्राप्तिर्मध्ये श्रूयते, आदित्यस्य परत्वञ्च अर्चिराद्यपेक्षयेति पूर्वपक्षोत्थानमिति तदप्यत एव निरस्तम्, उत्तराच्चेदिति सूत्र एवास्य वाक्यस्य परब्रह्मोपसम्पत्त्याऽऽविर्भूतस्वरूपात्मविषयत्वस्य समर्थितत्वादिति ॥ ७ ॥

॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ पूर्वं दहराकाशस्य परब्रह्मत्वे साध्यमाने "अल्पश्रुतेरिति चेत्तदुक्तम्" इतिसूत्रेणाल्पश्रुतिः परिहृता, अल्पश्रुतिप्रसङ्गेनाङ्गुष्ठप्रमितस्य परत्वं साधितम् तत्प्रसङ्गेनाधिकरणत्रयमुक्तम् । अथ पूर्वप्रकृतदहरविद्याया बुद्धिस्थत्वेन तदनन्तरभूतस्य 'आकाशो ह वै नामे'त्यादिप्रकरणस्य जीवपरत्वमाशङ्क्य परिह्रियत इति सङ्गतिः । मुक्तस्य प्रकृतत्वान्मुक्तात्मपरमात्मविषयसंशयमाह ( किमयमिति ) परैस्तु भूताकाशः पूर्वपक्षितः, तथा च सत्यनारम्भणीयतैव स्यात् 'आकाशस्तल्लिङ्गा'दित्यनेनैव चरितार्थत्वात् । तत्र हि

७ भावप्रकाशिका ७

सूत्रे आविर्भूतस्वरूप आत्मा प्रजापतिवाक्ये अपहतपाप्मत्वादिगुणकतया प्रतिपाद्यते, नतु कर्तृत्वाद्यनर्थाश्रयो जीव इत्युक्ते न प्रजापतिवाक्ये आविर्भूतस्वरूपस्य प्रतिपाद्यता किन्तु 'परं ज्योतिरुपसम्पद्य' इत्यादित्यं प्राप्तस्य बद्धस्यैवेति हेत्वसिद्धौ शङ्कितायां तत्परिहारपरस्य ज्योतिर्दर्शनादितिसूत्रस्य तत्रैव निवेशो युक्त इत्यर्थः । ( अपरे त्वाहुरिति ) तुशब्दोऽप्यर्थः, अपरेप्येवमाहुरित्यर्थः । ततश्च पूर्वोक्तपक्षादस्य पक्षस्य किं वैषम्यमितिशङ्का निरस्ता ॥

( आकाशो ह वै नामेत्यादीति ) आकाशो वै नामरूपयोरित्यपि केचित्पठन्ति. आकाशो ह वै नामरूपयोरित्यपि पाठो दृश्यते, अतः पाठद्वमपि प्रामा-

१ छा. ८-१४-१ ॥

र्दिष्टो मुक्तात्मा, उत परमात्मा' ? इति। किं युक्तम् ? मुक्तात्मेति। कुतः ? "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति मुक्तस्यानन्तर-

* श्रुतप्रकाशिका *

'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्याकाशश्रुत्या भूताकाशपरत्वमाशङ्क्य सर्वभूतकारणत्वज्यायस्त्वपरायणत्वादीनां भूताकाशपरत्वमाशङ्क्य सर्वभूतकारणत्वज्यायस्त्वपरायणत्वादीनां भूताकाशेऽन्वयानर्हत्वात् बहुश आकाशशब्दाभ्यासे सत्यपि तद्बाधेन परमात्मपरत्वं निर्णीतम्। इहापि नामरूपयोर्निर्वोढृत्वब्रह्मशब्दामृतत्वादिभिराकाशस्य ब्रह्मत्वं निश्चीयते इति न वैषम्यम्। दहराकाशस्य तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतेरन्वेष्टव्यस्यैव तत्रत्यं परमात्मलिङ्गम्, न तु दहराकाशस्येति शङ्काविशेषसम्भवाद्दहराधिकरणोत्थानं युक्तम्, इह तु न तथा शङ्का दृश्यते। नन्ववकाशप्रदानद्वारा नामरूपनिर्वहणहेतुत्वमाकाशस्य युज्यते, अतः स्ववाक्ये परमात्मलिङ्गाभावो वैषम्यमिति। उच्यते; किमत्र स्ववाक्ये परमात्मलिङ्गाभावः स्वरसार्थस्वीकारेण वर्ण्यते, उत क्लिष्टार्थकल्पनया ? न प्रथमः, स्वयमप्यन्येन निर्वाह्यनामरूपस्याकाशस्य सर्वनामरूपनिर्वोढृत्वानुपपत्तेः तस्य च परमात्मलिङ्गभूतस्य स्ववाक्यस्थत्वेन 'सर्वाणि ह वा' इत्यादिवाक्यादविशेषात्।

ॐ भावप्रकाशिका ॐ

णिकमेवेति द्रष्टव्यम् ( स्ववाक्ये परमात्मलिङ्गेति ) ननु शाङ्करभाष्ये द्रष्टृत्वादेः ब्रह्मलिङ्गस्याश्रवणादित्येवोच्यते, न स्ववाक्य इति। ततः कथमिदमुच्यते ? स्ववाक्य इतीतिचेन्न; 'ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' इति वाक्ये परमेव ब्रह्म प्रतिपाद्यते। 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यंशे तु आकाशशब्दप्रसिद्ध्या अवकाशद्वारेण नामरूपयोर्निर्वोढा भूताकाशो ब्रह्मप्रतिपत्त्युपायतया प्रतिपाद्यत इति वाचस्पत्यभिमतपूर्वपक्षं हृदि निधाय तत्र च 'आकाशो वै नामरूपयोर्निर्वहिता' इत्येतावदेव स्ववाक्यं तत्र च परमात्मलिङ्गं नास्तीतिवक्तुं स्ववाक्य इत्युक्तमिति द्रष्टव्यम्। ( अन्येन निर्वाह्यनामरूपस्येति ) ननु मुक्तस्याप्यन्यनिर्वा-

१ छा ८-१३-१ ॥

* श्रुतप्रकाशिका *

न द्वितीयः, अवकाशप्रदानद्वारा सर्वभूतोत्पत्तिकारणत्वस्याप्याकाशे सम्भावितया स्ववाक्ये परमात्मासाधारणधर्माभावस्य तत्र चात्राविशेषात् । अपरैस्तु ब्रह्मशब्दस्य मुक्तात्मपरत्वं वदद्भिरेवाकाशशब्दस्य भूताकाशपरत्वम्पूर्वपक्षितम्, तत्राप्याकाशविषयनिरूपणस्य कृतकरत्वं तुल्यम्, अतः परपक्षे पूर्वपक्षानुदय एव अतः परमात्मलिङ्गानां भूताकाशेऽन्वयानर्हतया आकाशशब्दस्य यौगिकार्थे ग्राह्ये सत्यनन्तरपूर्ववाक्ये मुक्तात्मनः प्रकृतत्वान्नामरूपनिर्वोढृत्वादिलिङ्गाच्च मुक्तात्मपरमात्मविषयत्वेन संशयोत्थानं युक्तमित्यभिप्रायेण मुक्तात्मपरमात्मविषयत्वेन संशयं दर्शयति– तत्रेति । किमाकाशशब्दनिर्दिष्टो मुक्तः, उत परमात्मा ? इति संशयः, तदर्थं 'धूत्वा शरीर'मिति मुक्तस्यानन्तरप्रकृतत्वमाकाश– शब्दस्य मुक्तपरतामवगमयति नेति । किं मुक्तस्य नामरूपनिर्वोढृत्वं सम्भवति ; न ? इति । किमत्र नामरूपनिर्वोढृत्वं नामरूपभाक्तया, उत नामरूपव्याकर्तृतया ? इति । किं ते यदन्तरेति निर्देशः कर्तृतया निर्वोढृत्वमुपपादयति, न ? इति । यदा नोपादयति तदा नामरूपभाक्त्वमेव तन्निर्वोढृत्वमिति तस्य जीवेपि बद्धदशायां

* भावप्रकाशिका *

च नामरूपत्वं समानम्, तदपि न साम्प्रतिकीमवस्थामादायोपपादयितुं शक्यते, अपितु भूतपूर्वगत्या. ब्रह्मात्मशब्दयोश्च न स्वारस्यम्, ततश्चाकाशश्रुतिमूलस्य पराभिमतपूर्वपक्षस्य नामरूपत्वनिर्वोढृत्वरूपलिङ्गबलादनुत्थितौ कथं प्रकरणमात्रशरणस्य मुक्तपूर्वपक्षस्योत्थितिरिति चेदुच्यते; न प्रकृतत्वमात्रमवलम्ब्य मुक्तपूर्वपक्षमुत्थापयामः । 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इतिवाक्यप्रतिपाद्ययोः कालभेदेन नामरूपभाक्तद्राहित्ययोर्निर्वहिता 'ते यदन्तरे'त्यत्र प्रत्यभिज्ञा नामरूपयोर्निर्वहिता ते यदन्तरेत्यत्र पूर्वं निरूढनामरूपस्य पश्चात्तद्विमुक्तस्यैव मुक्तस्य प्रतीतेः । 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म' इत्यव्यवहितप्रजापतिवाक्ये आत्मत्वब्रह्मत्वामृतत्वादीनामपि मुक्ते श्रवणेन तेषामेव शब्दानामिह प्रत्यभिज्ञायमानत्वात् आकाशाधिकरणदहराधिकरणयोराकाशशब्दस्य यौगिकत्वसमर्थनेनाकाशत्वस्याप्युपपत्तेर्मुक्तपूर्वपक्षोत्थाने न दोष इति द्रष्टव्यम् । ( मुक्तात्मपरत्वं वदद्भिरेवेति ) 'ते यदन्तरा तद्ब्रह्म' इत्ययमंशो मुक्ता-

प्रकृतत्वात् "ते यदन्तरा" इति च नामरूपविमुक्तस्य तस्याभिधानात्, 'नामरूपयोर्निर्वहिता' इति च स एव पूर्वावस्थयोपलिलक्षयिषितः, स एव हि देवादिरूपाणि नामानि च पूर्वमबिभः, तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिक्यवस्था 'तद्ब्रह्म तदमृतम्' इत्युच्यते । आकाशशब्दश्च तस्मिन्नप्यसङ्कुचितप्रकाशयोगादुपपद्यते । ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोऽयमिति प्रतीयते । तस्य च परमात्मत्वं निर्णी-

* श्रुतप्रकाशिका *

सम्भवेन मुक्तात्मनः प्रकृतत्वमाकाशशब्दस्य मुक्तपरत्वावगमकमित्याकाशो मुक्तात्मेति पूर्वः पक्षः । यदा 'ते यदन्तरे'तिनिर्देशः कर्तृतया नामरूपनिर्वोढृत्वमुपपादयति तदा नामरूपनिर्वोढृत्वं नाम तत्कर्तृत्वरूपमिति तस्य मुक्तात्मन्यसम्भवान्मुक्तात्मनः पूर्वप्रकृतत्वेऽप्यस्मिन्वाक्ये मुक्तात्मनोऽवगत्यनुपपत्तेराकाशशब्दनिर्दिष्टः परमात्मेति राद्धान्तः । (ते यदन्तरेति) उभयोर्मध्यस्थत्वात्तदस्पृष्टत्वं फलितम्, मध्यस्थस्यान्यतरपक्षपाताभावात्; तेन पूर्वोक्तमुक्तप्रत्यभिज्ञानादित्यर्थः । मुक्तस्य नामरूपनिर्वोढृत्वं कथमित्यत्राह (नामरूपेति) नामरूपयोर्निर्वहितेति श्रुत्यनुवादः, न त्वर्थानुवादः । उपलक्षणतयाऽभिमतं निर्वोढृत्वं पूर्वावस्थायामपि नास्तीत्यत्राह (स एव हीति) नामरूपनिर्वोढृत्वं न नामरूपकर्तृत्वम्, अपि तु नामरूपभाक्त्वम्, वहनं हि धात्वर्थः, उपसर्गाणां नानार्थत्वसम्भवान्नितरां वोढृत्वं निर्वोढृशब्दार्थस्स्यादिति पूर्वपक्षिणोऽभिप्रायः । तर्हि कथममृतत्वादिकमित्यत्राह (तस्यैवेति) (साम्प्रतिकीति) नामरूपविमोक्षानन्तरकालभाविन्यवस्था तस्य कालस्य प्रकृतत्वात् साम्प्रतिकीत्युच्यते । राद्धान्ते (व्यपदेशस्तावदिति)

❀ भावप्रकाशिका ❀

परः । 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यंशस्तु भूताकाशपर इति पूर्वपक्षितमित्यर्थः । अनेन वाचस्पतिपक्षापेक्षया वैषम्यमुक्तं भवति । (श्रुत्यनुवाद इति) इतरथा निर्वोढेतिरूपप्रसङ्गादिति भावः । एवमुत्तरत्र सर्वत्रापि द्रष्टव्यम् ।

तम् । मैवम् ; प्रजापतिवाक्यव्यवधानात् । प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितम् , अनन्तरञ्च 'विधूय पापम्' इति स एव मुक्तावस्थः प्रस्तुतः अतोऽत्राकाशो मुक्तात्मा ॥

इति प्राप्त उच्यते— आकाशोऽर्थान्तरत्वादिव्यपदेशादिति । आकाशः परं ब्रह्म; कुतः ? अर्थान्तरत्वादिव्यपदेशात् । अर्थान्तरत्वव्यपदेशस्तावत् "आकाशो ह वै नामरूपयोर्निर्वहिता" इति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति । बद्धावस्थस्त्वयं कर्म्मवशान्नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नु-

---

* श्रुतप्रकाशिका *

प्रदर्श्यत इतिशेषः । यद्वा नामरूपयोर्निर्वहितेतिव्यपदेश इत्यन्वयः । अर्थान्तरत्वशब्दस्तदुपपादकधर्मं लक्षयति । अर्थान्तरत्वमाकाशस्योपपादयतीति ह्युक्तम्, भेदकधर्मव्यपदेशादित्यर्थः । ( नामरूपयोरित्यादि ) नामरूपनिर्वोढृत्वञ्च स्पष्टभेदकधर्मः, अवयवशक्त्या निर्वोढृशब्दस्य वहनमात्रपरत्वादपि "रूढिर्योगमपहरति' इति न्यायात् कर्तृपरत्वं युक्तमिति भावः । नन्वेवं सति 'ते यदन्तरे'ति कथं

* भावप्रकाशिका *

बुद्धिसौकर्यार्थमाह ( राद्धान्त इति ) ( प्रदर्श्यत इति ) प्रतिज्ञामन्तरेणापि प्रदर्शनसम्भवात् वक्ष्यमाणरीत्या एकवाक्यतायां च सम्भवन्त्यां तत्परित्यागस्यानुचितत्वाच्च । पक्षान्तरमाह ( यद्वा नामरूपयोर्निर्वहितेति ) (व्यपदेश इत्यन्वय इति) यद्यप्यस्मिन् पक्षेऽप्यस्ति— भवति— विद्यतीनामन्यतमाध्याहारोऽपेक्षितः, तथापि स न दोषायेति भावः । ननु नामरूपयोर्निर्वोढृत्वव्यपदेशस्य कथमर्थान्तरत्वशब्दितव्यपदेशत्वमित्यत आह ( तदुपपादकधर्मं लक्षयतीति ) अर्थान्तरत्वव्यपदेशादित्यस्य भेदकव्यपदेशादित्यर्थ इति भावः । (कथं मुक्तस्यानन्तरमभिधानमिति) मुक्तस्यैवाभि-

यात्; मुक्तावस्थस्य जगद्व्यापारासम्भवान्न नितरां नामरूपनिर्वोढृत्वम्, ईश्वरस्य तु सकलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम् "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते" इत्यादिषु; अतो निर्वाह्यनामरूपात्प्रत्यगात्मनो नामरूपयोर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म। तदेवोपपादयति "ते यदन्तरा" इति। यस्मादयमाकाशो नामरूपे अन्तरा— ताभ्याम् अस्पृष्टोऽर्थान्तरभूतः, तस्मात्तयोर्निर्वोढाऽपहतपाप्मत्वात्सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थः। आदिशब्देन ब्रह्म-

---

* श्रुतप्रकाशिका *

मुक्तस्यानन्तरमभिधानमित्यत्राह (तदेवोपपादयति ते यदन्तरेतीति) कर्मकृतनामरूपभाक्त्वाभावात्तयोः स्वेच्छया निर्वोढा परमात्मा, न हि कर्मपराधीनचेष्टितस्य बद्धस्य जगद्व्यापारानुगुणसङ्कल्पादिरहितस्य मुक्तस्य च नामरूपनिर्वोढृत्वं सम्भवतीत्यर्थः। निर्वहितेति श्रुतिस्थपदानुकारः। आदिशब्दार्थमाह (आदि-

७ भावप्रकाशिका ७

धानमिति पूर्वपक्षिणोऽभिमानात्तथोक्तिरिति द्रष्टव्यम्। भाष्ये— सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थ इति। 'ननु ते यदन्तरे'ति नामरूपास्पृष्टत्वकथनेन तद्धेतुभूतपाप्मराहित्यस्याक्षेपसम्भवेनापहतपाप्मत्वस्योक्तिसम्भवेपि सत्यसङ्कल्पत्वस्य प्रदर्शनाभावेन कथं ते यदन्तरेत्यनेन तदुपपादनमिति चेन्न; अपहतपाप्मत्वे सत्यसङ्कल्पत्वस्याप्यवश्यम्भावेन तत्प्रदर्शनस्यापि 'सम्भवे ते यदन्तरा' इत्यस्य नामरूपयोर्निर्वहि-

त्वात्मत्वामृतत्वानि गृह्यन्ते । निरुपाधिकबृहत्त्वादयो हि परमात्मन एव सम्भवन्ति, तेनात्राकाशः परमेव ब्रह्म । यत्पुनरुक्तं 'धूत्वा शरीरम्' इति मुक्तोऽनन्तरप्रकृत इति । तन्न; 'ब्रह्मलोकमभिसम्भवानि' इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात् । यद्यप्यभिसम्भवितुर्मुक्तस्याभिसम्भाव्यतया परं ब्रह्म निर्दिष्टम्, तथाप्यभिसम्भवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसम्भवादभिसम्भाव्यं परमेव ब्रह्म तत्र प्रत्येतव्यम् । किञ्च आकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्य-

---

* श्रुतप्रकाशिका *

शब्देनेति ) निरुपाधिकशब्दोऽनवच्छिन्नत्वपरः, उपाधिर्ह्यवच्छेदकः । जीवस्य ज्ञानतो बृहत्त्वम्, तच्च परमात्मप्रसादायत्तम् । (बृहत्त्वादय इति) धर्मा इति शेषः । ( धूत्वेत्यादि ) ब्रह्मैव लोको ब्रह्मलोकः, प्रथमानिर्दिष्टस्याभिसम्भवितुः प्राधान्येन प्राकरणिकत्वस्वारस्येऽपि लिङ्गबलात्प्राकरणिकत्वस्वारस्यभङ्गो युक्त इत्यभिप्रायेणाह ( यद्यपीति ) अवान्तरप्रकरणेन पूर्ववाक्यस्य जीवस्वरूपपरत्वमभ्युपेत्य परिहृतम्, वस्तुतस्तु ब्रह्मलोकश्रुत्यनुगृहीतमहाप्रकरणबलात्पूर्ववाक्यमपि न जीवपरम्, किन्तु तस्य परमप्राप्यभूतपरब्रह्मपरत्वमेवेत्याह ( किञ्चाकाशेति ) प्रजापतिवा-

* भावप्रकाशिका *

तेत्येतदर्थोपपादकत्वमिति द्रष्टव्यम् । ( ज्ञानतो बृहत्त्वमिति ) जीवबृहत्त्वे ज्ञानपरमात्मप्रसादावुपाधी इति भावः । ननु ब्रह्मणोऽभिसम्भाव्यतया निर्देशः कथमप्रधानप्रकृतत्वसूचक इत्याशङ्क्य यद्यपीत्याद्येपभाष्यखण्डस्याभिप्रायमाह ( प्रथमानिर्दिष्टस्याभिसम्भवितुरित्यादिना स्वारस्येपीत्यन्तेन ) ( अवान्तरप्रकरणेनेत्यादि ) धूत्वा शरीरमितिवाक्ये जीवपरौ प्रतिपाद्येते इति निर्विवादम् , तत्र प्रजापतिवाक्यरूपावान्तरप्रकरणबलात्तस्य जीवपरत्वे अन्यार्थश्च परामर्श इति न्यायेन तत्र ब्रह्मपरामर्शः प्रजापतिवाक्यान्तर्गते 'एष सम्प्रसादोऽस्माच्छरीरात्' इति वाक्य इव जीवप्राप्यप्रतिपादनतया जीवार्थस्स्यात्, महाप्रकरणबलात्पर-

भिज्ञानात्, प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयेहोपसंह्रियत इति युक्तम्। आकाशशब्दश्च प्रत्यगात्मनि न क्वचिद्दृष्टचरः, अतोऽत्राकाशः परं ब्रह्म ॥

अथ स्यात् प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव

* श्रुतप्रकाशिका *

क्यस्य व्यवधायकत्वशङ्काव्यावृत्त्यर्थमाह ( प्रजापतिवाक्यस्येति ) हेत्वन्तरमप्याह ( आकाशशब्दश्चेति) ॥ उत्तरसूत्रमवतारयितुं शङ्कामाह— ( अथ स्यादिति ) ननु कथमात्मान्तरमेव नास्तीत्युच्यते ? त्रिपादी ह्यन्ययोगव्यपच्छेदपरा, प्रथमपाद एव चिदचिद्विलक्षणवस्तुसद्भावस्समर्थितः, उच्यते सिद्धिस्तावदुभयविधा साधकप्रमाणसम्भवाधीना, बाधकप्रमाणव्युदासाधीना च, बाधकप्रमाणव्युदासेन साधकसत्तायत्ता सिद्धिः स्थेयसी भवति, तदभावे साधकमात्राधीना सिद्धिरस्थिरा, अस्थिरं चासत्कल्पम्, अत्र प्रथमे पादे साधकसद्भावायत्तसिद्धौ दर्शितायामप्यैक्योपदेशभेदनिषेधरूपबाधकव्युदसनस्य सूत्रकारैरितः पूर्वमकृतत्वात्साधकाधीनसिद्धेरस्थिरप्रायत्वान्नास्तीत्युक्तम्, प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरं दृढप्रमाणसिद्धं न भवतीत्यर्थः, चतुर्थपादेऽपि दृशव्यपदेश उक्ताभिप्रायो वेदितव्यः । यद्वा

ॐ भावप्रकाशिका ॐ

ब्रह्ममहिमप्रतिपादकत्वे दहरविद्यान्तर्गते 'एष सम्प्रसाद' इति वाक्ये जीवपरामर्शस्य ब्रह्ममाहात्म्यप्रतिपादनशेषत्ववत् 'धूत्वा शरीर'मिति वाक्येपि जीवपरामर्शः परब्रह्ममहिमप्रतिपादनार्थस्स्यादिति भावः। भाष्ये— प्राप्यतया उपसंह्रियत इति । ननु 'इतीह प्रजापतिरुवाच' इति पूर्वमेव द्विरुक्त्या प्रकरणसमाप्तेर्दर्शितत्वात्कथं 'ब्रह्मलोकमभिसम्भवामि' इत्युपसंहार इति चेत् . जीवावान्तरप्रकरणस्य समापितत्वेपि दहराकाशमहाप्रकरणस्यासमापितत्वेनास्य मन्त्रस्य तच्छेषत्वादिति भावः। ( सूत्रकारैरितःपूर्वमकृत्वादिति ) "अनुकृतेस्तस्य च' 'अपि स्मर्यते" इति सूत्रयोरपि मुक्तब्रह्मभेदे साधकसद्भावमात्रप्रदर्शनपरत्वेन ऐक्योपदेशादिपरिहारस्य तत्र कृतत्वादिति भावः । यद्यपीहापि साधकप्रमाणमेवोपन्यस्यते ; तथाप्यस्य सूत्रद्वयस्य साधकप्रमाणदार्ढ्यापादनमुखेन ऐक्योपदेशभेदनिषेधश्रुत्यन्यथाकरणपर्यन्तत्वमस्तीति

नास्ति ऐक्योपदेशात्, द्वैतप्रतिषेधाच्च; शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्म परमेश्वर इति च व्यपदिश्यते, अतः प्रकृतान्मुक्तात्मनोऽभिसम्भवितुर्नार्थान्तरमभिसम्भाव्यो ब्रह्मलोकः, अतो नामरूपयोर्निर्वहिताऽऽकाशोऽपि स एव भवितुमर्हतीति अत उत्तरं पठति—

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

व्यपदेशादिति वर्त्तते । सुषुप्त्युत्क्रान्त्योः प्रत्य-

* श्रुतप्रकाशिका *

त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वं प्राचुर्यनिबन्धनमिति नानुपपत्तिः । (ऐक्योपदेशाद् द्वैतप्रतिषेधाच्चेति) मुक्तप्राप्यतयोक्तस्य ब्रह्मलोकशब्दनिर्वाच्यतया बृहदारण्यके प्रत्यभिज्ञायमानस्य "एकधैवानुद्रष्टव्यम्, स वा एष महानज आत्मा योऽयं विज्ञानमयः, नेह नानास्ति किञ्चने"ति जीवेनैक्यप्रतिपादनाद् भेदनिषेधाच्चेत्यर्थः, तत्र हि "एष ब्रह्मलोकः सम्राडिति होवाचे'ति प्रकरणावसाने तस्य परमात्मनो ब्रह्मलोकशब्दनिर्देशोऽवगम्यते, चशब्दः समुच्चये, ऐक्योपदेशभेदनिषेधयोः प्रत्येकं भेदविरोधित्वात्, इतरेतरयोगे वा चशब्दः, ऐक्यस्यामुख्यत्वशङ्कानिवारकत्वात् भेदनिषेधस्य. नामरूपयोर्निर्वहितेति पूर्ववत् यथाश्रुत्यनुवादः, अत एव हि नामरूपयोर्निर्वोढृत्वमिति स्वग्रन्थे निर्दिष्टमापाततोऽर्थान्तरत्वे प्रतीतेऽपि न तत्सिद्धान्तीकर्त्तव्यमिति शङ्काग्रन्थस्यार्थः ॥ सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ सूत्रस्याकाङ्क्षां पूरयति (व्यपदेशादिति वर्त्तत इति) यथा "अथ शब्दानुशासन" मित्यत्र केषां शब्दा-

* भावप्रकाशिका *

भावः । वस्तुतस्तु पूर्वतन्त्रे प्रथमपादे सिद्धस्यैव चोदनाप्रामाण्यस्य श्रुतिलक्षणमानुपूर्व्यमिति पुनः कथनवत्पूर्वसिद्धमुक्तभेददार्ढ्याय पुनः प्रतिपादनोपपत्तेः । (मुक्तप्राप्यतयोक्तस्येति) 'अश्व इव रोमाणि' इति पूर्ववाक्य इति शेषः । परस्परसापेक्षयोरेव ऐक्योपदेशभेदनिषेधयोस्साध्यसाधकत्वं मन्वान आह (इतरेतरयोगेवेति) (स्वग्रन्थे निर्दिष्टमिति) ततश्च यत्र यत्र निर्वहितेति श्रूयते, तस्य

गात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात्प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा अस्त्येव । तथा हि वाजसनेयके [1]"कतम आत्मा योऽयं विज्ञानमयः प्राणेषु" इति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायामकिंचिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति ; तथोत्क्रान्तावपि "प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति' इति । न च स्वपत उत्क्रामतो वाऽस्य किञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ सम्भवतः, न च क्षेत्रज्ञान्तरेण, तस्याऽपि सर्वज्ञत्वासम्भवात् ॥

* श्रुतप्रकाशिका *

नामित्युक्ते समस्तस्याप्यनुशासनपदस्य विभागेनानुषङ्गः तथेहापीति भावः । सूत्रे सुषुप्त्युत्क्रान्त्योरिति सप्तमी । कस्य कस्माद्भेद इत्यत्राह ( प्रत्यगात्मन इति ) अर्थान्तरत्वव्यपदेशरूपहेत्वसिद्धिशङ्कापरिहारपरत्वादस्य सूत्रस्यार्थसिद्धं साध्यनिर्देशं दर्शयति– ( अर्थान्तरभूत इति ) अवान्तरार्थप्रतिज्ञात्वात्सूत्रे कण्ठोक्त्यभाव; प्रधानार्थप्रतिज्ञानस्य हि प्रायेण कण्ठोक्तिरुपलभ्यते, देहस्य प्राज्ञपरिष्वक्तत्वशङ्काव्यावृत्त्यर्थं विज्ञानमयः प्राणेष्विति प्रकृतस्येत्युक्तम्, उत्सर्जन् शरीरमिति शेषः, क्षेत्रज्ञान्तरेण परिष्वङ्गान्वारोहौ आशङ्क्याह ( नचेति )॥ मुक्तावस्थेनात्मनाऽन्वा-

❀ भावप्रकाशिका ❀

सर्वस्यापि श्रुत्यनुवादरूपत्वेन स्वग्रन्थत्वाभावाच्च साधुत्वमिति भावः ॥

ननु 'सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् । एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' इति हि श्रुतिक्रमः । ततश्च कुतस्तत्प-

१ बृ. ६-२-७ ॥

इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह—

पत्यादिशब्देभ्यः ॥ ४४ ॥

अयं परिष्वञ्जकः परमात्मा उत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते "सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः। स न साधुना कर्म्मणा भूयान्नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति। एत-

* श्रुतप्रकाशिका *

रोह इत्यत्राह (इतश्चेति) ॥ पत्यादिशब्देभ्यः ॥ सूत्रे पत्यादिशब्देभ्य इति निर्दिष्टत्वात्तदनुरोधाय श्रौतपाठक्रमानादरेण "सर्वस्याधिपतिरिति वाक्यं प्रथममुदाहृतम्, सूत्रे च तथा निर्देशः किमर्थ इति चेत्. उच्यते; कर्मसम्बन्धप्रतिषेधमुखेन सर्वेश्वरत्वादिगुणानां निरुपाधिकत्वज्ञापकस्य 'स न साधुना कर्मणा भूयानि'त्यादिवाक्यस्य पूर्वं सर्वस्याधिपतिरिति वाक्यम्, पश्चात् 'एष भूताधिपतिरि'ति वाक्यम्. हेयसम्बन्धराहित्यपरवाक्यस्य तत्पूर्वापरवाक्यानां च तन्त्रेण क्रोडीकरणार्थमभ्यास-

छ भावप्रकाशिका छ

रित्यागेन भाष्ये व्युत्क्रमेण श्रुत्युपन्यास इत्याह ( सूत्रे पत्यादिशब्देभ्य इतीति ) ( वाक्यस्य पूर्वमितीति ) 'तस्य परमाम्रेडितम्' इतिनिर्देशेन अवयववाचिपूर्वादिशब्दयोगे षष्ठी भवतीति ज्ञापितत्वात्षष्ठ्यास्साधुत्वं द्रष्टव्यम्। न च 'स न साधुना भूया'नित्यादिवाक्यस्य सर्वस्याधिपतिरितिवाक्यनावयवः, येन पूर्वशब्दस्यावयववाचित्वं स्यादिति शङ्क्यम्। स न साधुना कर्मणा भूयानित्यादिवाक्यस्येति टीकागतस्य शब्दस्य प्रकरणगतवाक्यमात्रपरत्वादिति द्रष्टव्यम्। ( पश्चादेष भूताधिपतिरितिवाक्यमिति ) श्रुतौ पठितमिति शेषः। ( तन्त्रेण क्रोडीकरणार्थमिति ) बहुव्रीहितत्पुरुषाभ्यां पतिशब्दद्वयमध्यवर्तिनां स न साधुनेत्यादिवाक्यानामत्यादरेण क्रोडीकरणार्थमित्यर्थः। ननु वश्यादिशब्देभ्यः इत्युक्तावपि पूर्वोत्तरवाक्यानां क्रोडीकारमात्रं सिध्यतीत्यस्वरसादाह ( अभ्यासरूपेति )

मेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोक-मिच्छन्तः प्रव्रजन्ति' 'स वा एष महानज आत्मा-ऽन्नादो वसुदानः' 'अजरोऽमृतोऽभयो ब्रह्म' इति। एते च पतित्वजगद्विधरणत्वसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित्सम्भवन्ति, अतो मुक्तात्मनो-

* श्रुतप्रकाशिका *

रूपतात्पर्यलिङ्गज्ञापनार्थं च पत्यादिशब्देभ्य इति निर्देशः, अधिपत्यादि-त्यनुक्तिः, पतिं विश्वस्यात्मेश्वरमित्यादिभिरस्य प्रकरणस्य ऐकार्थ्येन विशेष्यस्य परमात्मनो नारायणत्वद्योतनार्था, अत एव ह्ययं परिष्वञ्जकः परमात्मेति भाष्ये निर्देशः, स खलु पतिं विश्वस्येति प्रकरणस्थं "तस्याः शिखायाः मध्ये परमात्मा व्यवस्थित" इति परमात्मशब्दं स्फोरयति, मुमुक्षूपास्यत्वरूपमहागुणवाचिशब्द-त्वात् पत्यादिशब्दैस्सह तमेतमित्यादिवाक्यमुपात्तम्, अन्नादः—अन्नदः, अधिप-त्यादिशब्दोक्तानां धर्माणामुक्तव्यावर्तकत्वं दर्शयति (एते चेति) मुक्तस्य जगद्व्या-पाररहितत्वान्न सम्भवन्तीत्यर्थः। किं जीवमात्रादर्थान्तरत्वे विप्रतिपत्तिः? उत मुक्तादर्थान्तरत्व? इति विकल्पे प्रथमं शिरः पूर्वसूत्रेण प्रत्युक्तम्, अनेन तु द्वितीयं शिर इति विभागः। यद्वा सूत्रद्वयोक्तैर्धर्मैर्मुक्तव्यावृत्तिसिद्धिः कथमित्यत्राह—एतेचेति। एतच्छब्दः सूत्रद्वयोदाहृतगुणपरः, अतः आदिशब्दे परिष्वङ्गा-

* भावप्रकाशिका *

प्रथमश्रुतवश्यादिशब्दं परित्यज्य मध्यश्रुतपतिशब्दमुपादाय पत्यादिशब्देभ्य इति सूत्रेणात्पतिशब्दगतोभ्यासस्सूच्यत इति भावः। (पत्यादिशब्दैस्सहेति) वशी ईशानः भूतपाल इत्यादीनां प्रथमान्तानामेव पत्यादिशब्देन ग्रहणमुचित-मित्यभिप्रेत्येदमुक्तमिति द्रष्टव्यम्। (एते चेत्यादि) भाष्यस्वारस्यानुरोधेन 'सुषु-प्त्युत्क्रान्त्योर्भेदने' तिसूत्रे बद्धजीवातिरेकस्वारस्यानुरोधेन च सूत्रद्वयस्य क्रमेण बद्ध-मुक्तातिरेकप्रतिपादनपरत्वं भाष्यकारस्याभिमतमित्यभिप्रायेणाह (किं जीवमात्रा-दर्थान्तरत्वे विप्रतिपत्तिरित्यादिना) पूर्वसूत्रोक्तपरिष्वङ्गान्वारोहयोरपि मुक्तव्याव-र्तनक्षमत्वात् सूत्रद्वयेनापि मुक्तव्यावृत्तिः प्रतिपाद्यत इत्यभिप्रायेणाह (यद्वा सूत्र-

र्थान्तरभूतो नामरूपयोर्निर्वहिताऽऽकाशः। ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति "सर्वं खल्विदं ब्रह्म तज्जलान्'

* श्रुतप्रकाशिका *

न्वारोहावन्तर्भूतौ. सुषुप्त्युत्क्रान्त्योः परिष्वङ्गस्यान्वारोहणस्य च जगद्व्यापारान्तर्भूतत्वान्मुक्तस्य तद्रहितत्वाच्च तौ च तस्मिन्न सम्भवतः, एते अकर्मसम्पाद्या इति चाभिप्रायः, "स न साधुना कर्मणा भूयानि'ति श्रुतत्वात्, तेन बद्धात्मन्यसम्भवः. मुक्तैश्वर्यस्य जगद्व्यापारवर्जत्वान्मुक्तात्मन्यऽसम्भव इत्यर्थः। एवमनेन सूत्रद्वयेन परमात्मनश्चिदचिद्वैलक्षण्ये प्रमाणदार्ढ्यस्योपपादितत्वादैक्योपदेशभेदनिषेधौ तदनुरोधेन वर्णनीयाविति शङ्काबीजं परिहृतं भवति, एतावदेवैतदधिकरणकृत्यम्, एवं प्रबलतरभेदश्रुत्यनुरोधेन निर्वाहे कर्त्तव्ये सति ऐक्योपदेशभेदनिषेधयोरमुख्यतयाऽपि निर्वाहे प्राप्ते सूत्रकारैरेव श्रुतितोऽर्थतश्च वक्ष्यमाणं श्रुतिसिद्धं मुख्यनिर्वाहं तत्र तत्र प्रसङ्गे पूर्वमपि स्वेनोक्तमिह स्मारयति (ऐक्योपदेशस्त्विति) कार्यकारणैक्यनिबन्धनः, न तु जीवेश्वरैक्यनिबन्धन इत्यर्थः। तत एव कार्यकारणैक्यादेव. ऐक्योपदेशशेषत्वात्, भेदनिषेधश्रुतिश्च कुतर्कसिद्धकार्यकारणभेदप्रतिषेधपरेत्यर्थः, अत्र भेदनिषेधस्य प्रकार्यैक्यनिबन्धनत्वमप्यर्थसिद्धं प्रकारप्रकारिभावस्य जगत्कारणत्वनिर्वाहकत्वात्, तत्रारम्भणाधिकरणे कार्यकारणैकत्वसमर्थनं श्रौतम्, तेनैक्योपदेशस्य मुख्यत्वमार्थम्, सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वम् "अवस्थितेरिति काशकृत्स्न" इति वक्ष्यते, तत्राकृतिनयगोचरतया मुख्यत्वसमर्थनं चिद्विषयमचिद्विषयञ्च "अंशो नानाव्यपदेशात्" "उभय-

७ भावप्रकाशिका ७

द्व्योक्तैरिति) (वर्णनीयाविति शङ्काबीजमिति) वर्णनीयाविति समर्थनेन ऐक्यभेदनिषेधश्रुतिलक्षणशङ्काबीजं परिहृतं भवतीत्यर्थः। (एतावदेवेति) अतो नारम्भणाद्यधिकरणैः पुनरुक्ततेति भावः। (जगत्कारणत्वनिर्वाहकत्वादिति) विशेष्यमात्रस्य ब्रह्मणः प्रपञ्चोपादानत्वाभावेन सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टं प्रति हेतुत्वस्य वक्तव्यत्वादिति भावः। मुख्यत्वनिर्वाहस्य वक्ष्यमाणत्वं दर्शयति (तत्रारम्भणाधिकरण इत्यादिना) (बुद्धान्तादीति) जाग्रदादीत्यर्थः।

इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव समर्थितम् द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥ ७ ॥ ७ ॥ ७ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

प्रथमस्याध्यायस्य तृतीयः पादः ॥

* श्रुतप्रकाशिका *

व्यपदेशादि" त्यधिकरणद्वयेन कृतम्, एवं वक्ष्यमाणो मुख्यनिर्वाह इह स्मारितः। पादद्वयोक्तमर्थमभिप्रेत्याह (इत्यनवद्यमिति)। परैस्तु सुषुप्त्युत्क्रान्त्योरित्यादि सूत्रद्वयं बृहदारण्यके "कतम आत्मा योऽयं विज्ञानमय" इत्यादिप्रकरणविषयमधिकरणान्तरं व्याख्यातम्, तत्र चोपक्रमे 'योऽयं विज्ञानमयः प्राणे'ष्विति शारीरंलिङ्गदर्शनात् उपसंहारे च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणे'ष्विति शारीरापरित्यागान्मध्ये च + सुषुप्त्यादिसांसारिकतत्तदवस्थाप्रतिपादनादत्र संसारिस्वरूपं प्रतिपाद्यमिति पूर्वपक्षं कृत्वा सुषुप्त्युत्क्रान्त्योः प्राज्ञाद्भेदव्यपदेशेन पत्यादिशब्दैश्चासंसारिस्वरूपस्य प्रतिपाद्यमिति सिद्धान्त उक्तः। उपक्रमादिषु शारीरलिङ्गकथनमनुवादरूपं तस्य परेण ब्रह्मणैक्योपदेशार्थं कृतम्. 'योऽयं विज्ञानमयः" "स वा एष महानज आत्मे'ति परमेश्वरेणैकत्वमुपदिश्यते 'अत ऊर्ध्वं विमोक्षायैव ब्रूही'ति पदे पदे प्रश्नात् 'अनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष' इति पदे पदे पुण्येनानन्वागतत्वादिकथनरूपप्रतिवचनाच्चासंसारिस्वरूपप्रतिपादनपरत्वसिद्धिरिति शारीरलिङ्गदर्शनपरिहारश्चोक्तः, एवमधिकरणभेदवर्णनमयुक्तम्, द्वितीयतृतीयपादान्तताधिकरणान्तरसूत्रवैरूप्यात् निरूपणीयाभावाच्च, न ह्यत्र सूत्रद्वये प्रतिज्ञावाक्यं श्रूयते विवक्षिततत्प्रकरणस्थधर्मिवाचकशब्दाभावात्, प्रतिक्षेप्यव्युदासकशब्दाभावाच्च, "ईक्षतेर्नाशब्दम्" "आनन्दमयोऽभ्यासात्" अन्तस्तद्धर्मोपदेशा" दिति हि सूत्रशैली. अतोऽत्र तथाभावाभावादध्याहारः स्यात्, स चानध्याहारेण निर्वाहे सत्यनुपपन्नः, इह च पूर्वप्रकृतसाध्यहेतुसमर्थकत्वेऽध्याहारोऽनपेक्षितः, चतुर्थेऽपि पादेऽधिकरणान्तरारम्भेषु धर्मिवाचिपदाश्रवणं न दोषः, तस्य

७ भावप्रकाशिका ७

( धर्मिवाचिपदाश्रवणं न दोष इति ) जगद्वाचित्वाद्वाक्यान्वयादित्यादिष्विति भावः। ( तस्येति ) चतुर्थपादस्येत्यर्थः। ननु जगद्वाचित्वादित्यादौ व्युद-

+ बुद्धान्तादीति रंगरामानुजीयपाठः ॥

* श्रुतप्रकाशिका *

प्रधानादेः प्रतिपाद्यत्वव्युदसनपरत्वाद्धर्मिवाचिपदनैरपेक्ष्यात् 'आनुमानिकमप्येकेषा'मिति चेन्नेति 'न सङ्ख्योपसङ्ग्रहादपि' इति च व्युदसनप्रतिज्ञा श्रूयते, नेतिपदस्योत्तरत्रानुषङ्गेऽपि न दोषः। प्रधानादिपरत्वव्युदासस्य परमात्मपरत्वोपपादनशेषत्वात् परमात्मपरत्वस्य प्राधान्येन प्रतिपिपादयिषिततया सर्वत्र तद्विवक्षायां प्रतिज्ञावाक्यश्रवणात् क्वचिदध्याहारदर्शनेऽपि गत्यन्तरसद्भावे सति गत्यभाव इव निर्वाहोऽनुपपन्नः, अतः परमात्मपरत्वसमर्थनपराधिकरणवैरूप्यादयुक्तम्. निरूपणीयाभावाच्चाधिकरणान्तरत्वमयुक्तम्, सन्दिग्धे हि न्यायप्रवृत्तिः। यत्रैकस्मिन्वाक्ये प्रकरणे वा परस्परविरुद्धार्थद्वयं प्रधानप्रतिपाद्यतया प्रतीयते तत्र सन्देहे सति न्यायावतारः, इह च तादृशस्संशयविषयो न विद्यते। तथा हि; जाग्रत्स्वप्नाद्यवस्थाप्रतिपादकवाक्यानां जीवविषयत्वं न संशयपदं, न च तदपाकर्तुं शक्यम्; अतस्तन्निरूपणपरत्वमधिकरणस्यायुक्तम् । 'असङ्गो ह्ययं पुरुषः' इत्यादिवाक्यानां शुद्धस्वरूपपरत्वमपि न सन्देहपदम्, निरवधिकानन्दनिरङ्कुशैश्वर्यप्रतिपादकानां "स एको ब्रह्मलोक आनन्दः' 'सर्वस्य वशी सर्वस्येशानः" इत्यादिवाक्यानां परमात्मपरत्वेऽपि न सन्देहः, अत एतत्समर्थनमनपेक्षितम् । समानाधिकरणवाक्यानां ब्रह्मात्मकत्वोपदेशपरत्वेऽपि न विशय इति न तत्समर्थनार्थमधिकरणारम्भो युक्तः । जीवस्वरूपकथनं ब्रह्मात्मकत्वविधानायानुवाद इत्ययमर्थो निरूपणीय इति चेन्न प्राप्तार्थानां वाक्यानामनुवादकत्वस्य अप्राप्तार्थानां वाक्यानां विधायकत्वस्य च स्वत एव स्पष्टत्वात्। न खलु 'अग्निर्हिमस्य भेषजम्'इत्यस्य वाक्यस्य अनुवादकत्वं 'स्वर्गकामो यजेत' इतिवाक्यस्य विधित्वं चात्र निरूपणीयम्, अतो जीवस्वरूपकथने प्राप्तविशेषणोक्तेरनुवादत्वं न समर्थनीयम्, अप्राप्तधर्मप्रतिपादनस्य विधित्वं

७ भावप्रकाशिका ७

सनप्रतिज्ञापि न श्रूयत इत्याशङ्क्याह ( नेतिपदस्येति ) ( अनुषङ्गेपि न दोष इति ) अध्याहारापेक्षया अनुषङ्गस्य ज्यायस्त्वात्तव त्विहानुषङ्गस्याप्यसम्भवादितिभावः । किञ्च शेषभूतप्रतिज्ञायामनुषङ्गो न दोषायेति युक्त्यन्तरमाह ( प्रधानादिपरत्वव्युदासस्येति ) ननु कारणत्वेनाकाशादिष्वित्यत्र नेतिपदानुषङ्गो न युज्यते, परब्रह्मणो जगदुत्पद्यत इति निर्णेतुं शक्यमिति तत्र प्रतिज्ञा भाष्योक्तेत्याशङ्क्याह (क्वचिदध्याहारदर्शनेपीति) (परमात्मपरत्वेन न सन्देह इति) यद्यपि 'सर्वस्य

* श्रुतप्रकाशिका *

च न साध्यम्. विहितधर्मनिषेधेन स्वरूपैक्यप्रतिपादनं चानुपपन्नम्, सूत्राक्षरप्रातिकूल्याच्च नेदं सूत्रद्वयं ब्रह्मात्मकत्वोपदेशसमर्थनपरम्, भेदसमर्थनपरत्वं ह्यक्षरस्वारस्यादवगम्यते । न च मृषावाद्यभिमतं ब्रह्मात्मकत्वमस्मिन्प्रकरणे दृश्यते " स वा एष महानज आत्मा योऽयं विज्ञानमयः स एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इतीश्वरतादात्म्योपदेशपरत्वावगमात् । तन्मतेऽधिष्ठानतादात्म्यं ह्युपदेश्यम्, न हीश्वरोऽशेषजगदध्यासाधिष्ठानम्, ईश्वरस्यापि सन्मात्रवस्तुनि कल्पितत्वात् । न हि रज्जुकल्पितस्सर्पस्तत्कल्पितभूदलनाम्बुधाराधिष्ठानम् । किञ्च ईश्वराध्यस्तजीवदर्शनं नेश्वरकर्तृकम्, ईश्वरस्य सर्वज्ञतया स्वारोपिताकारविषयभ्रमानुपपत्तेः, । न चान्यकर्तृकम्, अधिष्ठानभूतेश्वरस्य संसार्यगोचरत्वात्. न ह्यधिष्ठानानवभासेऽध्यस्तप्रतीतिरुपपद्यते. घटस्सन् पटस्सन्निति सन्मात्रमेवाधिष्ठानतयाऽनुवृत्तमवभासत इति च तदीयप्रक्रिया, न त्वीश्वरोऽधिष्ठानतया प्रतीयत इति; अतस्सर्पभूदलनयोरन्योन्यतादात्म्योपदेशवज्जीवेश्वरतादात्म्योपदेशोऽनुपपन्नः । ईश्वरधर्माश्च अविवक्षिता इति चेत् पदानां लक्षणा। किञ्च अप्राप्तानां धर्माणामनुवादासम्भवाद्विहितस्य निषेधायोगात् 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" इति तात्पर्यलिङ्गदर्शनाच्च तेषां धर्माणामविवक्षितत्वं दुर्वचम् । सिद्धान्त्यभिमतन्तु तादात्म्यं तदुपासनञ्चोत्तरत्र निरूपयिष्यते, अतः सूत्राक्षरप्रातिकूल्यात्संशयविषयाभावात् स्वाभिमतार्थशरीरस्यानुपपन्नत्वात्प्रामाणिकतादात्म्यनिरूपणस्यान्यत्र क्रियमाणत्वाच्चाकाशशब्दनिर्दिष्टस्य परमात्मत्वोपपादकं सूत्रद्वयमिति सिद्धम् । यादवप्रकाशपक्षेऽपि निरूपणीया-

७ भावप्रकाशिका ७

वशी' इत्यादयश्शब्दा अपि जीव. एव यथाकथञ्चिद्योजनीयाः । नास्मिन् सन्दर्भे कस्यचिदपि वाक्यस्य परमात्मप्रतिपादकत्वमस्त्येव पूर्वपक्षो वाचस्पतिना दर्शितः, तथापि 'सर्वस्य वशी सर्वस्येशानः' इत्यादिना जीवप्रतिपादकत्ववादस्यातिसाहसत्वादसंशय इति द्रष्टव्यम् । ( किञ्चेश्वरस्येति ) ईश्वराध्यस्तजीवभ्रमनिवृत्त्यर्थं खलु जीवस्याधिष्ठानभूतेश्वरतादात्म्यमुपदिश्यते, तत्रेश्वरे जीवभ्रमः किमीश्वरस्य, उत जीवस्य ?। न प्रथमः, सर्वज्ञस्य भ्रमासम्भवात् । न द्वितीयः, अधिष्ठानभूतेश्वरज्ञानशून्यस्य तत्र जीवस्य भ्रमानुदयादित्यर्थः । ( तात्पर्यलिङ्गदर्शनाच्चेति )

* श्रुतप्रकाशिका *

भावादनारम्भणीयत्वदोषः स्थितः । पूर्वपक्षसिद्धान्तवर्णनप्रकारश्चानुपपन्नः । परिष्वङ्गान्वारोहाभ्यां प्राज्ञस्यात्मनश्शारीराद्भेदः स्थित इति विषयशोधकमाद्यं सूत्रं व्याख्याय स प्राज्ञः किं भोक्ता विद्याकर्मातिशयलब्धैश्वर्यो जीवः ? उत परः ? इति विशये भोक्तुर्विज्ञानमयस्य प्रकरणस्थतया वशित्वेशानत्वादीनां विद्याकर्मलब्धतया जीवत्वमुक्त्वा पत्यादिशब्दानां शाखान्तरे परमात्मविषयत्वदर्शनादन्यत्र सुषुप्तौ परमात्मनि सम्पत्तिश्रवणाच्च परमात्मत्वं साधितम् । तत्र तावदाद्यसूत्रव्याख्यानमयुक्तम्, विषयशोधकत्वमात्रे सूत्रवैयर्थ्यात् पूर्वपक्षपरत्वे शाब्दस्य हेतोर्विरुद्धत्वात् भोक्तुः प्रकृततया कर्माधीनैश्वरत्वस्य पूर्वपक्षहेतोरशाब्दत्वाच्च तच्छङ्काव्युदसनासमर्थभेदानुभाषणे प्रयोजनाभावात् सूत्रवैयर्थ्यम् । किञ्च शारीराद्भेदकौ परिष्वङ्गान्वारोहौ प्राज्ञकर्तृकौ श्रूयेते । प्राज्ञत्वं च स्वाभाविकम् पतित्वादयश्च स्वाभाविका एवात्र प्रतिपाद्यन्ते, उपाध्यनुक्तेः तथैव "स न साधुना कर्मणा भूयान्" इत्युपाधिनिषेधाच्च, अतस्तदनादृत्य पत्यादिशब्दानां शाखान्तरप्रसिद्ध्यापरमात्मसाधकत्वोक्तिरचतुरा । सद्विद्यासंवादस्तु यद्यपि प्राज्ञस्य जगत्कारणत्वावगमकः तथापि कारणस्य चिदचिद्वैलक्षण्ये तु संवादनिरपेक्षहेतुः प्राज्ञत्वं निरुपाधिकैश्वर्यवत्त्वञ्च । यद्यकर्महेतुकं निरङ्कुशैश्वर्यमपि श्रुत्यन्तरसंवादसापेक्षम् तर्हि श्रुत्यन्तरेषु कथमाश्वासः ? तत्रापि संवादान्तरापेक्षणेऽनवस्था स्यात्, एतच्छ्रुत्यपेक्षणेऽन्योन्याश्रयः स्यात्; अतोऽधिकरणान्तर कल्पनं तन्निर्वहणं चाऽनुपपन्नम्. अतस्सूत्रत्रयमेकाधिकरणम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरंचितशारीरकमीमांसा-

ಛ भावप्रकाशिका ಛ

अभ्यासापूर्वत्वरूपतात्पर्यलिङ्गदर्शनाच्चेत्यर्थः । ( शाखान्तरे इति ) कौषीतकीश्वेताश्वतरादिष्वित्यर्थः । 'सता सोम्य तदा सम्पन्नो भवति' इति सद्विद्यायां श्रवणाच्चेत्यर्थः । ( शाब्दस्य हेतोर्विरुद्धत्वादिति ) सुषुप्त्युत्क्रान्त्योर्भेदस्य जीवत्वपूर्वपक्षासाधकत्वादिति भावः । यस्तु पूर्वपक्षहेतुः पूर्वमुक्तः स न शाब्द इत्याह ( भोक्तुः प्रकृततयेति ) ननु उत्सूत्र एव पूर्वपक्षः, आद्यसूत्रमपि सिद्धान्तसाधकमेवास्त्वित्याशङ्क्याह ( तच्छङ्काव्युदसनेति ) ( निरुपाधिकैश्वर्यवत्त्वं चेति )

* श्रुतप्रकाशिका *

भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां

प्रथमस्याध्यायस्य तृतीयः पादः ॥

छ भावप्रकाशिका छ

ततश्च चिदचिद्वैलक्षण्यसाधने संवादनिरपेक्षप्राज्ञत्वादेरेव हेतूकरणसम्भवेन तत्र शाखान्तरसंवादस्य हेतूकरणसम्भवादिति भावः ॥

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुजमुनिभिर्विरचितायां

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

प्रथमस्याध्यायस्य तृतीयः पादः ॥

श्रीमते रामानुजाय नमः ।





श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## प्रथमाध्याये—चतुर्थः पादः ।



१. अधिकरणम्

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं

* श्रुतप्रकाशिका *

॥ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ प्रथमपादश्चिदचिद्विलक्षणकारणत्वायोगव्यवच्छेदपरः, अन्ययोगव्यवच्छेदपरायां त्रिपाद्यामस्पष्टस्पष्टजीवादिलिङ्गकवाक्यविषयौ द्वितीयतृतीयौ, स्पष्टतरजीवादिप्रतिपादकवाक्यविषयश्चतुर्थ इति पादसङ्गतिर्द्वितीयपादारम्भे कथिता । सूत्रकारैस्तु अन्ययोगव्यवच्छेदस्य त्रिपादीकृत्यत्वं चतुर्थपादारम्भे कण्ठोक्तम् 'आनुमानिकमप्येकेषा'मिति ह्युक्तम्, अतो भाष्यकारश्चतुर्थपादारम्भे त्रिपाद्यर्थस्फुटीकरणमुखेन सङ्गतिं विवक्षन् प्रथमपादार्थानुभाषणपूर्वकं द्वितीयतृतीययोरर्थं वृत्तं दर्शयति (उक्तमिति) प्रधानादेरित्यादिशब्देन प्राणाकाशादिग्रहणम् । विलक्षणमित्यन्तेन प्रथमपादार्थ उक्तः । वैलक्षण्यञ्चोभयलिङ्गतयेति दर्शयन्

* भावप्रकाशिका *

द्वितीयपादारम्भे कथितायाः पादसङ्गतेस्त्रिपाद्या अन्ययोगव्यच्छेदपरत्वस्य वा अत्र पुनः कीर्तनं किमर्थमित्याशङ्कायामाह (प्रथमपाद इति) (धर्मिस्वरूप-

जगज्जन्मादिकारणं ब्रह्माचिद्वस्तुनः प्रधानादेश्चेतनाच्च बद्धमुक्तोभयावस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्य्यमिति। इदानीं कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि

* श्रुतप्रकाशिका *

द्वितीयतृतीययोरप्यर्थं दर्शयति ( निरस्तेत्यादिपदैः ) समस्तशब्देन चिद्गतमचिद्गतं च हेयं विवक्षितम्। गन्धशब्देन मुक्तव्यावृत्तिः। समस्तकल्याणगुणात्मकमिति पदं धर्मिस्वरूपपरम्। सर्वज्ञमित्यादिपदैर्द्वितीयपादार्थः सूचितः "यस्सर्वज्ञः 'भारूपः सत्यसङ्कल्पः" इत्यादिवाक्यजातं हि तद्विषयः। अन्तर्यामिवैश्वानरद्युभ्वाद्यधिकरणसिद्धमर्थमाह ( सर्वान्तरात्मभूतमिति ) 'एष सर्वभूतान्तरात्मा' इति सुबालोपनिषदन्तर्यामिविषयतया श्रूयमाणत्वात् "पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति मुण्डकोपनिषद्वाक्यस्य सपक्षत्वेनोपन्यासात्तत्समर्थनाच्च। निरङ्कुशैश्वर्यमिति तृतीयपादार्थसूचनम्, "एतस्य वा अक्षरस्य प्रशासने गार्गि" "ईशानो भूतभव्यस्य' 'सर्वस्य वशी सर्वस्येशानः" इत्यादिवाक्यजातं हि तद्विषयः। वर्तिष्यमाणमाह ( इदानीमिति ) ( प्रधानकारणत्वप्रतिपादनच्छायानुसारीणीति ) न केवलं लिङ्गप्रतिपादकानि, किन्तु लिङ्गिनामेव प्रधानादीनां जगत्कारणत्वप्रतिपादनशङ्कास्पदानीति, अतो जीवादिविषयतायाः स्पष्टतरत्वमिति भावः। ( प्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीणीति ) प्रधानपुरुषादिस्वरूपप्रतिपादनप्रकारस्तन्त्रार्थप्रत्यभिज्ञापकः, तेन प्रधानकारणत्वप्रतिपादनं फलि-

७ भावप्रकाशिका ७

परमिति ) सर्वज्ञत्वादिगुणानां कल्याणत्वपरमित्यर्थः। सर्वभूतान्तरात्मत्वस्य अन्तर्यामिवैश्वानराधिकरणसिद्धत्वं कथम्? अन्तर्यामिब्राह्मणे वैश्वानरविद्यायां च सर्वभूतान्तरात्मेत्येवमाकारवाक्याश्रवणादित्याशङ्क्याह ( एष सर्वभूतान्तरात्मेत्यादि ) ( मुण्डकोपनिषद्वाक्यस्य सपक्षत्वेनोपन्यासादिति ) द्युभ्वाद्यधिकरण-

कानिचिद्वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते। कठवल्लीष्वाम्नायते[1] "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति। तत्र सन्देहः

* श्रुतप्रकाशिका *

तमित्यर्थः। ब्रह्मैककारणत्वस्थेम्न इत्यत्र एकशब्देन त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वं सूचितम्, स्थेम्न इत्यनेन चतुर्थपादार्थः सूचितः, पूर्वपादद्वयप्रतिपन्नस्यान्ययोगव्यवच्छेदस्य स्थैर्यमस्मिन् पादे प्रधानादिकारणत्वप्रतिपादनव्युदसने कृते हि भवति। अत्रानन्तरपूर्वाधिकरणे मुक्तादपि वैलक्षण्यमुक्तम्. तदयुक्तम्; प्रत्यगात्मनः परस्य निषेधादिति शङ्कया अवान्तरसङ्गतिरिति चार्थसिद्धम्, बद्धमुक्तोभयावस्थाद्विलक्षणमिति ह्युक्तम्। विषयमाह (कठवल्लीष्विति) तन्त्रसिद्धतत्त्वक्रमप्रत्यभिज्ञाभासजनकानि वाक्यानि विषयः। तन्त्रसिद्धक्रमतद्विपर्ययप्रतीतिभ्यां संशयः। सिद्धान्ते अव्यक्तशब्दस्य प्रधानवाचकत्वाभावात् उत नेति संशयशिरोऽन्तरं कृतम्, अन्यथा उत ब्रह्मात्मकं प्रधानमिति हि शिरोऽन्तरं वक्तव्यम्। कठवल्ल्याम्

* भावप्रकाशिका *

विषयवाक्यैकप्रकरणस्य 'पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति मुण्डकोपनिषद्वाक्यस्य 'स्मर्यमाणमनुमानं स्यात्' इति वैश्वानराधिकरणगुणसूत्रे सपक्षत्वेनोपन्यासादित्यर्थः। इदानीमितीतिग्रन्थस्यानन्तरं प्रधानपुरुषादिप्रतिपादनमुखेनेति न केवलं लिङ्गप्रतिपादकानि, किन्तु लिङ्गिनामेव प्रधानादीनां प्रतिपादनमुखेन प्रधानादिकारणत्वप्रतिपादनच्छायानुसारीणीतिपाठस्तु समीचीनः, कोशस्तु निरीक्ष्यः। (प्रत्यगात्मनः परस्य निषेधादिति) 'पुरुषान्न परं किञ्चित्' इति प्रत्यगात्मव्यतिरिक्तस्य साङ्ख्यमत इव निषेधादिति भावः। (बद्धमुक्तोभयावस्थाद्विलक्षणमिति ह्युक्तमिति) यद्यपीदं प्रथमपादार्थसूचकमिति

---

१ कठ. २-३-१०,११॥

किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाऽव्यक्तशब्देनोच्यते, उत न? इति। किं युक्तम्? प्रधानमिति। कुतः? "महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इति तन्त्रसिद्धतत्त्वप्रक्रियाप्रत्यभिज्ञानेन तस्यैव प्रतीतेः, "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च; अतोऽव्यक्तं कारणमिति प्राप्तम्। तदिदमुक्तम् आनुमानिकमप्येकेषामिति चेदिति। एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेत् —

---

* श्रुतप्रकाशिका *

अब्रह्मात्मकप्रधानकारणत्वप्रतिपत्तिरस्ति न वेति प्रथमविचारोऽभिप्रेतः। तदर्थम् 'इन्द्रियेभ्यः पराः' इत्यत्राव्यक्तशब्दः किमब्रह्मात्मकप्रधानपरः उत नेति विचारः। तदर्थं किमस्मिन्मन्त्रे तन्त्रसिद्धतत्त्वगणनक्रमप्रत्यभिज्ञानमस्ति, न? इति। तदर्थम् अव्यक्तात्पूर्वापरनिर्दिष्टमहत्पुरुषशब्दाभ्यां महज्जीवतत्त्वे निर्दिश्येते, उत जीवपरौ? इति। किमिहेन्द्रियादिशब्दैः पूर्ववाक्यस्थरूपकरूपितेन्द्रियादिप्रतिपत्तिरस्ति नेति। किमत्र परत्वं कारणभावेन? उत वशीकार्यतयेति। यदा कारणभावेन तदा रूपितेन्द्रियादिप्रतिपत्त्यभावेन महत्पुरुषशब्दयोर्महज्जीवतत्त्वसमर्पकतया तान्त्रिकप्रक्रियाप्रत्यभिज्ञानादव्यक्तशब्देनाब्रह्मात्मकं प्रधानमुच्यत इति तस्यैव कारणत्वं प्रतीयत इति पूर्वः पक्षः। सिद्धान्ते तु यदा वशीकार्यतया परत्वं विवक्षितं तदा पूर्वरूपितेन्द्रियादिप्रतिपत्त्या महत्पुरुषशब्दयोर्जीवपरमात्मपरत्वेन तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानाभावादव्यक्तशब्दो नाब्रह्मात्मकप्रधानपर इति न तस्यात्र कारणत्वप्रतीतिरिति फलफलिभावः। शङ्काया अनुत्सूत्रत्वमाह (तदिदमुक्तमिति) शङ्कानुवादिनं सूत्रखण्डं व्याचष्टे (एकेषामित्यादिना)॥ परिहारखण्डं व्याचष्टे

* भावप्रकाशिका *

व्याख्यातम्, अथाप्यव्यवहिताधिकरणार्थसारकत्वमपि सम्भवतीत्यभिप्रेत्यैव-

अत्रोत्तरं—नेति । नाऽव्यक्तशब्देनाब्रह्मात्मकं प्रधानमिहाभिधीयते । कुतः ? शरीररूपकविन्यस्तगृहीतेः—शरीराख्यरूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः । आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथिरथादिभावेन रूपितेषु रथरूपेण विन्यस्तस्य शरीरस्यात्राऽव्यक्त-

* श्रुतप्रकाशिका *

( शरीराख्येति ) शरीरमेव रूपकविन्यस्तम्, रूप्यतेऽनेनेति रूपकम्, दृष्टान्तः । रूपकत्वेन विन्यस्तम्, रूपितमित्यर्थः । शरीरं हि रथत्वेन रूपितं "शरीरं रथमेव च'इति । ननु रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यम्; विशेषणस्य पूर्वनिपातित्वादिति शङ्कापरिहाराय शरीराख्येत्युक्तम् । अस्मिन् वाक्ये रूपकविन्यस्तं वस्तु प्राधान्येन विवक्षितम्, विशेषणापेक्षया विशेष्यं प्रधानम्; अतो रूपकविन्यस्तपदं विशेष्यसमर्पकम्, कीदृशं तदित्यपेक्षायां शरीराख्यं रूपकविन्यस्तमिति शरीरशब्देन तद्विशेष्यते, यथा खण्डशब्देन गौः, अतो रूपकविन्यस्तप्राधान्याभिप्रायः शरीरशब्दपूर्वनिपात इत्यभिप्रायः । कानि कथं रूपितानीत्यत्राह ( आत्मेति ) रूपकाभिधायि वाक्यं किम् ? रथिरथादिभावेन रूपितानामत्र ग्रहणं तत्राप्यव्यक्तशब्देन शरीरस्य ग्रहणमिति च कथमवगम्यते ? रथ्यादित्वेन रूपितानामस्मिन् वाक्ये

⁂ भावप्रकाशिका ⁂

मुक्तमिति द्रष्टव्यम् । ( रूप्यतेऽनेनेति ) रूपवत्तया क्रियते अनेनेत्यर्थः । रूपवच्छब्दात्तत्करोतीति णिचि णाविष्ठवद्भावात् 'विमतोर्लुगि'ति मतुपो लुकि टिलोपे च ण्यन्ताद्रूपीत्येतस्मात्कर्मणि रूप्यत इति प्रयोगः । ण्यन्ताद्रूपीत्येतस्मात्कर्तरि ण्वुलि णिलोपे च रूपवत्करोतीति रूपकमिति हि रूपकशब्दनिष्पत्तिः, एवमेव ह्यालङ्कारिकाणामुक्तिः, ततश्चात्मा शरीरादीनुपमेयान् स्वेन रूपेण रूपवतः कुर्वन्तो रथिरथादयो रूपकाः, ततश्च रूपकरथात्मना विन्यस्तशरीरस्य गृहीतेरित्यर्थः । ( प्राधान्येन विवक्षितमिति ) विशेषणविशेष्यभावे कामचारादिति भावः । ( पूर्वनिपात इत्यभिप्राय इति ) नन्वेवं निर्देशे किं प्रयोजनमिति चेदुच्यते; शरीरे अधिकरणे रूपकात्मना विन्यस्ताश्शरीररूपकविन्यस्ता इन्द्रियादयः

शब्देन ग्रहणादित्यर्थः। एतदुक्तम्भवति–पूर्वत्र हि [1]"आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" इत्यादिना [2]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तमुपासकं रथित्वेन तच्छरीरादीनि च रथरथाङ्गत्वेन रूपयित्वा यस्यैते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारं वैष्णवं पदमाप्नो-

* श्रुतप्रकाशिका *

कीर्त्तनं किमर्थमित्यत्राह ( एतदुक्तमिति ) 'आत्मान' मित्यादिकं रूपकाभिधायि वाक्यम्, तेषामत्र ग्रहणं वशीकार्यतायां प्राधान्यज्ञापनार्थम्. स्वशब्दैरेव प्रत्यभिज्ञानाद्रथिरथादिभावेन रूपितानामत्र ग्रहणमिति ज्ञातम्। पारिशेष्यादव्यक्तशब्देन शरीरग्रहणमितीदमर्थजातमुच्यते ( पूर्वत्र हीत्यादिना ) रूपणस्य प्रयोजनमाह ( यस्यैत इति ) वशीकार्यत्वज्ञापनाय रथिरथादिभावेन रूपणमित्यर्थः। रूपक-

❀ भावप्रकाशिका ❀

तेषां स्वस्ववाचकशब्देन गृहीतत्वात् पारिशेष्यादव्यक्तशब्देन गृह्यत इत्यत्र नियामकतया पारिशेष्यस्योपन्यसनीयतया तत्प्रदर्शकसमासान्तराश्रयणस्यापि सार्थक्यात्। भाष्ये– तद्विष्णोः परमं पदमित्यन्तेनेति। "इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः। यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः। यस्तु विज्ञानवान् भवति युक्तेन मनसा सह। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः। यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः। न स तत्पदमाप्नोति सँसारञ्चाधिगच्छति। यस्तु विज्ञानवान् भवति समनस्कस्सदा शुचिः। स तु तत्पदमाप्नोति यस्माद्भूयो न जायते। विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पार-

[1] कठ. १-३-३॥ | [2] कठ. १-३-९॥

तीत्युक्त्वा तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते ' इन्द्रियेभ्यः

* श्रुतप्रकाशिका *

रूपितानामिह ग्रहणं वशीकार्यतायां प्राधान्याप्राधान्यज्ञापनार्थमित्याह ( यानि येभ्य इत्यादिना ) ननु वशीकार्यतायां प्राधान्यस्य विवक्षितत्वं कथमवगम्यते ? उच्यते; 'इन्द्रियेभ्यः पराः' इत्यादिमन्त्रे परशब्दस्तावन्नान्यवचनः, अर्थेभ्यः इन्द्रियादीनां भेदस्य लोकसिद्धत्वेन उपदेशवैयर्थ्यात्; अतः परशब्दः प्रकर्षपरः । प्रकर्षश्च न तावत्कारणत्वनिबन्धनः, अर्थानामिन्द्रियकारणत्वाभावात्. इन्द्रियाणां विषयसिद्ध्यर्थतया तच्छेषत्वात् साध्यत्वलक्षणः प्रकर्ष इति च न वाच्यम्; तथा सत्यर्थापेक्षया मनसः परत्वायोगात् । न चान्तरङ्गत्वलक्षणः प्रकर्षः, इन्द्रियमनोबुद्धीनां तत्सम्भवेऽपीन्द्रियापेक्षया बाह्यानामर्थानां परत्वायोगात्, अतः पारिशेष्याद्रथिरथादिभावरूपणेन उपासनोपकरणत्वावगमात् तत्रैव " यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवान् भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः । यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारञ्चाधिगच्छति । यस्तु विज्ञानवान् भवति समनस्कस्सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते" इतीन्द्रियादिवशीकारावशीकारयोरर्थानर्थदर्शनात् " यच्छेद्वाङ्मनसी प्राज्ञः" इतीन्द्रियादीनां वशीकारप्रकारदर्शनाच्चास्मिन्मन्त्रे वशीकार्यतायां प्राधान्यं

७ भावप्रकाशिका ७

माप्नोति तद्विष्णोः परमं पदम् । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः । एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः । यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति यच्छेत्तद्यच्छेच्छान्त आत्मनि । उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति । अशब्दमस्पर्शमरूपमव्ययम्" इति हि श्रुतिक्रमः । ( साध्यत्वलक्षणः प्रकर्ष इति) शेषित्वलक्षणप्रकर्ष इत्यर्थः । अध्यवसायाभिमान-

पराः' इत्यादिना। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषयाः वशीकार्यत्वे पराः, वश्येन्द्रियस्यापि विषयसन्निधाविन्द्रियाणां दुर्निग्रहत्वात्. तेभ्योपि परं प्रग्रहरूपितं मनः, मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिञ्चित्करत्वात्। तस्मादपि सारथित्वरूपिता बुद्धिः परा, अध्यवसाया-

* श्रुतप्रकाशिका *

परशब्देन विवक्षितमित्यवगम्यते। तत्रार्थादीनामिन्द्रियादिभ्यः परत्वमुपपादयति (तत्रेति) ननु 'अष्टौ ग्रहाः अष्टावतिग्रहाः' इति प्राणजिह्वावाक्चक्षुःश्रोत्रमनोहस्तत्वगिन्द्रियाणां ग्रहत्वम्, गन्धरसनामरूपशब्दकामकर्मस्पर्शाख्यानां विषयाणामतिग्रहत्वञ्च श्रुतम्; तस्माद्ग्रहेभ्य इन्द्रियेभ्य अतिग्रहशब्दोक्तनामर्थानां परत्वं किं न स्यात्? उच्यते; यदि ग्रहेभ्योऽतिग्रहाणां परत्वमिह विवक्षितं तदा अर्थेभ्यो मनसः परत्वकथनमयुक्तम्, मनसो ग्रहान्तर्गतत्वादर्थानामतिग्रहशब्दोक्तत्वाच्च; अतः स्वसन्निधाविन्द्रियणां दुर्निग्रहत्वापादनमेवार्थानां वशीकार्यत्वे परत्वम्, तद्वशीकरणं च असन्निधापनं हेयतया ज्ञापनञ्च। (तेभ्योऽपीति) स्वावधानाभावे विषयासन्निधेरकिञ्चित्करत्वहेतुकं मनसः प्राधान्यम्। तस्य वशीकरणं नाम तस्य मुहुर्मुहुर्विषयदोषचिन्तनेन तेभ्यो निवर्त्तनसंशीलनम् "अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते" इति ह्युक्तम्। (तस्मादपीति) बुद्धिशब्दोऽध्यवसायरूपज्ञानविशेषपरः। न त्वन्तःकरणपरः। "यदा कर्मगुणोपेता बुद्धिर्मनसि वर्त्तते। व्यवसायगुणोपेता तदा सम्पद्यते मनः" इत्यादिषु बुद्धिशब्दस्यान्तःकरणपरत्वं तत्कार्यभूतव्यवसायस्य पृथङ्निर्देशादिभिरवसीयते, इह तु बुद्धिशब्दस्य भावार्थत्वस्वारस्यात्तदपवादाभावाच्च व्यवसायपरत्वमित्यध्यवसायाभावशब्दं प्रयुञ्जानस्याभिप्रायः। यद्वा बुद्धिशब्दोऽन्तःकरणपरः, इदानीमध्यवसायाभाव इत्यनेन तत्कार्यभूताध्यवसाया-

❁ भावप्रकाशिका ❁

चिन्ताद्यृत्तिभेदान्मन एव बुद्ध्यहङ्कारचित्तशब्देन व्यपदिश्यत इति पञ्चवृत्तिर्मनोवद्व्यपदिश्यत इति सूत्रभाष्यं हृदि निधाय बुद्धिशब्दस्यान्तःकरणपरत्वेपि

भावे मनसोऽप्यकिञ्चित्करत्वात्। तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात्परः, सर्वस्य चास्यात्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते। तस्मादपि रथरूपितं शरीरं परम्, तदायत्तत्वाज्जी-

* श्रुतप्रकाशिका *

भाव इत्युक्तं स्यात्। अल्पास्थिरत्वदुस्साधत्वदुःखमिश्रत्वादिदोषदर्शनेन विषयाणां हेयत्वाध्यवसायोऽध्यवसायशब्देन विवक्षितः, तदभावे ह्यन्यत्र व्यासङ्गादिना क्वचिद्विषये प्रावण्यरहितमपि मनः कदाचित्तत्प्रवणमपि स्यात्; अतो बुद्धेः परत्वम्. तस्याश्च वशीकरणं नाम विषयदोषदर्शनसंशीलनेन तद्दृढीकरणरूपं मनोनिवर्तनपाटवापादनम्। (आत्मा कर्तृत्वेन प्राधान्यात्पर इति) कर्तृत्वेन—अध्यवसायस्याश्रयत्वेन। बुद्धिशब्दस्यान्तःकरणपरत्वपक्षे तु उपकरणित्वेनेत्यर्थः। अणोरात्मनः कथं महच्छब्दविशेष्यत्वमित्यत्राह (सर्वस्य चेति) अस्य सर्वस्य—इन्द्रियादेरध्यवसायपर्यन्तस्य। इन्द्रियाणि जेतव्यानि, सम्यगर्थविषयोऽध्यवसायः सम्पाद्य इत्येवंरूपेच्छायत्तत्वादित्यर्थः। अनेनात्मनो वशीकरणं नामात्मरूपयाथात्म्याध्यवसायप्रावण्यरूपेच्छापादनमेवेति च फलितम्। (तस्मादपि रथरूपितं शरीरं परमिति) शरीरस्य परत्वं नाम स्वगतगुणोन्मेषानुगुणमात्मगतज्ञानापादकत्वम्. रजस्तमोऽनुदयसत्त्वप्राचुर्यकरपरिशुद्धाहारेण सत्त्वोद्रिक्ततापादनं शरीरस्य वशीकरणमित्यर्थः। जीवभेदस्याविद्याकल्पितत्वात् अविद्यासंज्ञमव्यक्तं जीवात्परम्, तत्कार्यत्वाच्छरीरस्य परत्वमुपचर्यत इति कैश्चिदुक्तम्। तदयुक्तम्; कारणगतपरत्वस्य कार्ये उपचरणे स्वारस्याभावात् जीवभेदस्याविद्याकल्पितत्वाभावाच्च।

* भावप्रकाशिका *

नानुपपत्तिरित्यभिप्रयन्नाह (यद्वा बुद्धिशब्दोऽन्तःकरणपर इति) (कैश्चिदुक्तमिति) मृषावादिभिर्हि महच्छब्देन 'मनो महान् मतिर्ब्रह्मा भूर्बुद्धिः ख्यातिरीश्वरः। प्रज्ञासंविच्चितिश्चैव स्मृतिश्च परिगृह्यते" इति स्मृतिवशात् प्रथमोत्पन्नहिरण्यगर्भबुद्धिरुच्यते, तस्याश्चाव्यक्तप्रभवत्वात् 'महतः परमव्यक्तम्' इत्युक्तिरुपपद्यते। यद्वा जीव एव महच्छब्देनाभिधीयते, आत्मशब्देन विशेषणात्. तत्रापि पक्षे जीवभावस्याव्यक्ताधीनत्वेन महतः परत्वमुपपद्यते, पक्षद्वयेपि अव्य-

वात्मनस्सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि परस्सर्वान्तरात्मभूतोऽन्तर्याम्यध्वनः पारभूतः परमपुरुषः, यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात् । स खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः । "परात्तु तच्छ्रुतेः' इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव ।

* श्रुतप्रकाशिका *

आत्मपर्यन्तस्य— स्वावधिकस्य । यद्वा जीवपर्यन्तस्येत्यर्थः । नास्मिन्वाक्ये वशीकार्यतया परत्वे निर्दिष्टः क्रमो विवक्षितः, किन्तूपकरणतया प्राधान्यम्; अत एव हि 'आत्मानं रथिनं विद्धी'ति शरीरात् पूर्वनिर्देशः । उपासनोपकरणकोटिनिवेशः परस्य कथम्? अव्यक्तात्परस्य पुरुषत्वमात्रं श्रुतम्, न परमत्वम्; तत्कथमश्रुतपरमशब्दार्थाङ्गीकार इत्यत्राह ( स खल्विति ) उपासननिर्वाहकत्वाद्वशीकार्यत्वमित्यर्थः । सा काष्ठेति श्रुतिवाक्यखण्डं व्याचष्टे ( वशीकार्योपासनेति ) वशीकार्यशब्द उपायविशेष्यकः । रूपितेष्वर्थेषु परत्वेन रूपितस्य पदस्यात्राकथनाद्वक्ष्यमाणपरिशेषासिद्धिशङ्कां परिहर्तुं 'सा परा गति'रित्यनेनैव पारत्वरूपितपदस्यापि प्रतिपादितत्वमाह ( परमेति ) 'पुरुषान्न परं किञ्चित्' इत्युपायकोटिकाष्ठाभूतमस्मात्परं न विद्यत इति व्यतिरेक उक्तः, सा काष्ठेत्यनेन अयमेवोपायकाष्ठाभूत इत्यन्वय उक्तः ।

७ भावप्रकाशिका ७

क्तशब्दिताविद्यानिष्ठत्वं महत्परत्वं तत्कार्ये शरीरे उपचर्यत इत्युक्तमिति भावः । ननु कथं जीवपर्यन्तेत्युच्यते ? महतः परमव्यक्तमिति पूर्ववाक्ये अव्यक्तशब्दितशरीरस्यैव जीवादपि परत्वोपन्यासेनाव्यक्तपर्यन्तस्येति हि निर्देशो युक्त इत्याशङ्कयाह ( नास्मिन् वाक्य इति ) यथोक्तस्यात्मपर्यन्तस्येति भाष्यवाक्य इत्यर्थः । ( पदस्यात्र चाकथनादिति ) सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति

१ शारी. २-३-४० ॥

तदिदमुच्यते [1]"पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति। तथा चान्तर्यामिब्राह्मणे [2]"य आत्मनि तिष्ठन्" इत्यादिभिस्सर्वं साक्षात्कुर्वन्तस्सर्वं नियमयतीत्युक्त्वा [3]"नान्योऽतोऽस्ति द्रष्टा" इति नियन्त्रन्तरं निषिध्यते। भगवद्गीतासु च [4]"अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम्। विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्" इति। दैवमत्र पुरुषोत्तम एव, [5]"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च" इति वचनात्। तस्य च वशीकरणं तच्छ-

* श्रुतप्रकाशिका *

इन्द्रियादीनामप्युपायभूतत्वमात्रमस्तीति तद्व्यावृत्त्यर्थं 'परा गति'रिति प्राप्यत्वमुच्यत इत्यर्थः। "यस्मात्परं नापरमस्ति" इत्यादिश्रुत्यैकार्थ्यावगमात् स्वस्मात् परान्तररहितस्य परमात्मत्वमर्थसिद्धमिति चाभिप्रायः। सर्वनियामकादस्मात् परस्याभावेन उपायकाष्ठात्वोपपादनार्थमन्तर्यामिब्राह्मणमुपादीयते (तथेति) दैवमिति कर्म वा कर्माराध्यमिन्द्रादिकं वा विवक्षितं स्यादित्यत्राह (दैवमत्रेति) "न दैवं केशवात्परम्, 'श्रूयतां परमं दैवं दुर्विज्ञेयं मयापि च। नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः" 'नारायणस्य चाङ्गानि सर्वदैवानि चाभवन्' 'अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः" इत्यादिप्रयोगादित्यभिप्रायः। परमपुरुषस्याप्युपासननिर्वर्तकत्वमस्तु, कथं सर्वस्मात्परस्यानीश्वरेण संसारिणा वशीकर्तुं शक्यत्वम्? शक्यश्चेत्तत्प्रकारोऽपि क्वचिच्छ्रूयेत, न च श्रूयते 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादावनुपलब्धेरित्यत्राह (तस्य चेति) 'यच्छेद्वाङ्मनसी' इत्यादौ तस्य वशीकार्यत्वश्रवणं दर्शयिष्यते। कथमव्यक्तशब्देन शरीराख्यरूपकविन्यस्ताभिधानम्? रूपकविन्यस्तान्तराभिधानं किं न स्यादिति

७ भावप्रकाशिका ७

पारत्वेन रूपितस्य विष्णोः परमपदस्य 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्राकथना-

१ कठ. १-३-११॥
२ बृह. ५-७-२२-मा-पा॥
३ बृ ५-७-२३॥
४ गीता. १८-१४॥
५ गी. १५-१५॥

रणागतिरेव । यथाह [1]"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ" इति । तदेवम् [2]'आत्मानं रथिनं विद्धि' इत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः [3]"इन्द्रियेभ्यः परा ह्यर्थाः" इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति निश्चीयते; अतः कापिलतन्त्रसिद्धस्य प्रधानस्य प्रसङ्ग एव नास्ति । न चात्र तत्तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा 'इन्द्रियेभ्यः परा ह्यर्थाः" इतीन्द्रियेभ्योऽर्थानां शब्दादीनां परत्वकीर्तनात् । न हि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने । [4]'अर्थेभ्यश्च परं मनः' इत्यपि न तत्तन्त्रसङ्गतम्, अकारणत्वादेव;

* श्रुतप्रकाशिका *

शङ्कायामव्यक्तशब्देन शरीरस्याभिधानं पारिशेष्यादित्याह ( तदेवमात्मानमिति ) प्रधानप्रतिपादकत्वमङ्गीकृत्य तस्य ब्रह्मात्मकत्वाब्रह्मात्मकत्वविवादोऽपि क्वचिदस्तीति तद्व्यावृत्त्यर्थं प्रसङ्ग एव नास्तीत्युक्तम् । वशीकार्यतया परत्वमुपपादितम्, कारणत्वेन परत्वस्यानुपपत्तिमाह (न चात्रेति) प्रत्यभिज्ञानाभावमुपपादयति (इन्द्रियेभ्य इति ) तदेव विवृणोति ( नहीति ) ( अकारणत्वादेवेति ) 'इन्द्रियेभ्यः परा ह्यर्थाः" इत्यत्र तन्त्रप्रक्रियाप्रत्यभिज्ञानव्युदासहेतोरेवेत्यर्थः । अहङ्कारद्वारा बुद्धेर्मनःकारणत्वसम्भवात् 'मनसस्तु परा बुद्धिः' इत्येतत्क्लिष्टगत्या निर्वोढुं शक्यदित्यर्थः । ( क्वचिदस्तीति ) 'अजामेकाम्' इत्यादौ तादृशविचारस्य दर्शयिष्यमाणत्वादिति भावः । ( अहङ्कारद्वारा बुद्धेरिति ) बुद्धिर्महत्तत्त्वम् । ( तन्त्रप्रक्रिया-

ᛃ भावप्रकाशिका ᛃ

(Note: the भावप्रकाशिका heading is printed between the lines "...निर्वोढुं शक्य-" and "दित्यर्थः ।".)

१ गी. १८-६१-६२ ॥
२ कठ. १-३-३ ॥
३ कठ. १-३-१० ॥
४ कठ. १-३-१० ॥

तथा [1]" बुद्धेरात्मा महान् परः' इत्यप्यसङ्गतम्, बुद्धिशब्देन महत्तत्त्वस्याभिधानाभ्युपगमात्। न हि महतो महान् परस्सम्भवति। महत आत्मशब्देन विशेषणं च न सङ्गच्छते, अतो रूपकविन्यस्तानामेव ग्रहणम्। दर्शयति च—तदेव [2]" एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" [3]" यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान-

* श्रुतप्रकाशिका *

मिति तदनादरेण बुद्धेरात्मेत्यत्रानुपपत्तिमाह (तथेति) बुद्धिशब्देन महत्तत्त्वमभिधीयताम्, ततः किमित्यत्राह (न हीति) समष्टिव्यष्टिविभागेन परत्वोपपत्तिरिति चेन्न; तत्कल्पनेन निर्वाहस्यास्वरसत्वात् इन्द्रियादिषु चार्थान्तरेषु समष्टिव्यष्टिविभागादर्शनाद्रूपकवाक्ये पृथङ्निर्देशाभावाच्च। अनुपपत्त्यन्तरमाह (महत आत्मशब्देनेति) आत्मशब्दः स्वतश्चेतनैकान्तः, अगत्या क्वचित्तस्यातत्परत्वाश्रयणम्। अवयवशक्त्या स्वकार्यव्याप्तिपरत्वेऽपि महत्तत्त्वादपि प्रधान एवावयवार्थप्रकर्षात् महत आत्मशब्दविशेष्यत्वमयुक्तमित्यर्थः। ननु "उद्बबर्हात्मनश्चैव मनस्सदसदात्मकम्। मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्। महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च" इति स्मृतिसिद्धप्रक्रियाप्रत्यभिज्ञानान्महच्छब्दो महत्तत्त्वपरः, न त्वात्मविशेषक इति चेन्न; श्रुताविन्द्रियार्थमनोबुद्धिमहतां परत्वस्य चोक्तत्वादहङ्कारस्यानुक्तत्वात् स्मृतौ मनोऽहङ्कारमहतामेवोक्तत्वादिन्द्रियार्थबुद्धीनां परत्वस्य चानुक्तत्वात् श्रुतौ स्मृत्यर्थप्रत्यभिज्ञानाभावान्मनसोऽहङ्कारमुद्बबर्हेत्यस्य तन्त्रप्रक्रियाविरोधप्रतीतेः पूर्वपक्षिणैवं परिचोदनस्यायुक्तत्वाच्च। ननु महच्छब्दस्यात्मविशेषणत्वे सति 'महतः पर'मिति निर्देष्टुमयुक्तम्, अपि त्वात्मन इत्येव निर्देष्टव्यमिति चेन्न; विशेषणवाचिपदेनापि प्रकृतविशेष्याभिधानदर्शनात् देवदत्ताद्यज्ञदत्तः शीघ्रगतिर्योऽयमश्वारूढः

ঙ भावप्रकाशिका ঙ

विरोधप्रतीतेरिति) तन्त्रे अहङ्कारस्य महत्तत्त्वजन्यत्वेन मनोजन्यत्वाभावा-

१ कठ. १-३-१० ॥ २ कठ. १-३-१२ ॥ ३ कठ. १-३-१३ ॥

आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" इति। अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियादीनां वशीकारप्रकारोऽयमुच्यते। 'यच्छेद्वाङ्मनसी' वाचं मनसि नियच्छेत्—वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः। वाक्छब्दे

* श्रुतप्रकाशिका *

अश्वारूढाद्विष्णुमित्र इति, अवृद्धसेवी पुरुषो मूढः, मूढादमूढ आदरणीय इत्यादौ। रूपकविन्यस्तानामेव ग्रहणमित्येतद्भाष्यमेतदुक्तम्भवतीत्यनेनान्वितम्। इतिशब्दाप्रयोगोऽतिविप्रकर्षात्. दर्शयति चेति सूत्रखण्डोपादानम्। तदेव— वशीकार्यत्वे परत्वमेव। एष इत्यादि श्रुतिः। न प्रकाशत इत्युक्ते केषामित्यपेक्षायां "यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः। यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः। न स तत्पदमाप्नोति संसारञ्चाधिगच्छति'इति प्राकरणिकवाक्योपजीवनेन न प्रकाशत इत्यस्यार्थमाह (अजितबाह्येति) वाक्छब्दस्सर्वेन्द्रियोपलक्षणार्थ इत्याह (वाक्पूर्वकाणीति) नन्विदमयथाक्षरमिव व्याख्यातम्, न ह्यत्र वाक्छब्दो द्वितीयान्तो मनश्शब्दश्च सप्तम्यन्तः श्रूयत इत्यत्राह (वाक्छब्द इति)। ननु वाक्छब्दात् परस्याः द्वितीयायाः 'सुपां सुलुक्" इत्यनुशासनेन स्वादेशाश्रयणेन द्वितीयान्तत्वं किं न स्यात्? न; स्वादेशेऽपि "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सूत्रेण वाक्छब्दस्य हलन्ततया

७ भावप्रकाशिका ७

दितिभावः। (सूत्रखण्डोपादानमिति) दर्शयति चेत्यादिग्रन्थस्सूत्रखण्डव्याख्यानरूप इत्यर्थः। ततश्च दर्शयति चेत्यस्य सूत्रखण्डोपादानत्वे तदेवेतिभाष्यखण्डस्य कुत्राप्यनन्वयप्रसङ्गादिति दूषणमलमकं वेदितव्यम्। ननु सुपां सुलुगितिसूत्रे सोः प्रथमनिर्दिष्टतया तदतिक्रमे कारणाभावेन द्वितीयायाः स्वादेशे हल्ङ्यादिलोपे च द्वितीयान्तत्वं कुतो न सिध्येदित्याशङ्क्य प्रक्रियागौरवान्नायं पन्था इत्याह (ननु वाक्छब्दादित्यादिना) ननु भाष्ये मनसी इति कथं निर्देशः? सवर्ण-

**द्वितीयायाः १" सुपां सुलुक्" इति लुक्। मनसी इति सप्तम्याश्छान्दसो दीर्घः । "तद्यच्छेत् ज्ञान आत्मनि"**

* श्रुतप्रकाशिका *

सुलोपस्य प्राप्तत्वात् स्वादेशाङ्गीकारेऽपि लुकि पर्यवसानं स्यात्, तत्र द्वितीयास्थाने स्वादेशमाश्रित्य लोपकल्पनाद्वरं द्वितीयाया एव लुगाश्रयणमिति । सप्तम्येकवचनान्तस्य मनश्शब्दस्य दीर्घान्तत्वं कथमित्यत्राह (मनसी इति सप्तम्याश्छान्दसो दीर्घ इति ) 'ईदूतौ च सप्तम्यर्थे' इति प्रकृतिभावसरणिनिबन्धनो मनसी इति निर्देशः । ननु 'इयाडियाजीकाराणामुपसङ्ख्यानम्'' इत्युपसङ्ख्यानवशादीकारान्तत्वसम्भवे कथं छान्दसत्वाश्रयणमिति चेत्. उपसङ्ख्यानेन निर्वाहासम्भवादिति ब्रूमः। न हि 'वाङ्मनसी' इत्यत्र वाक् च मनश्चेत्यर्थस्सम्भवति, अचतुरविचतुरेत्यादिसरणेनाजन्ततया वाङ्मनसे इति प्राप्तत्वात्। अथ तत्रापि छान्दसत्वबलेन समासान्तो नाद्रियते, तथा सति यथोक्तनिर्वाहे कः प्रद्वेषः ? न च निर्वाहद्वयतुल्यता, पूर्वोक्तस्य प्रकरणानुगुण्यादेकवचनोपपत्तेश्च। यच्छेदित्युक्तस्य नियमनस्य सप्तम्यपेक्षा प्रकरणसिद्धा, तद्यच्छेत् ज्ञान आत्मनि ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनीति हि श्रूयते। वाक् च मनश्चेत्यर्थोऽभिमतश्चेत्तदिति पुनः परामर्शश्च न घटते, ते इति द्विवचनान्ततया हि निर्देष्टव्यम् ; अत उक्तनिर्वाह एवोपपन्नः । तद्यच्छेद्ज्ञान आत्मनीति वाक्यं मनसोऽहङ्कारे नियमनपरं

७ भावप्रकाशिका ७

दीर्घेण हि भाव्यमित्यत्राह ( ईदूतौ च सप्तम्यर्थे इतीति ) ( प्रकृतिभावसरणिनिबन्धनो मनसी इतीति निर्देश इति) ईदूतौ च सप्तम्यर्थे' इति सूत्रविहितप्रगृह्यसंज्ञानिमित्तकप्रकृतिभावनिबन्धन इत्यर्थः । प्रकृतिवद्भावसरणेति क्वचित्पाठो दृश्यते, स तु लेखकस्खलनकृतः। (उपसङ्ख्यानेन निर्वाहासम्भवादिति ब्रूम इति ) 'इयाडियाजीकाराणामुपसङ्ख्यान'मित्यस्यापि छन्दोविषयतया छान्दसत्वानाश्रयणेन निर्वाहस्यासम्भवादित्यर्थः । वाङ्मनसी इत्यस्य द्वितीयाद्विवचनान्तत्वशङ्कां प्रतिक्षिपति ( नहि वाङ्मनसी इत्यत्रेति ) प्रकरणानुगुण्यमेकवचनोपपत्तिञ्च स्पष्टयति ( यच्छेदित्युक्तस्येति ) ( केचिद्व्याचक्षत इति ) यादवप्रकाशीया इत्यर्थः ।

---

१ पाणिनि. ७-१-३९ ॥

# तन्मनो बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । 'ज्ञान आत्मनि' इति व्यधिकरणे

* श्रुतप्रकाशिका *

केचिद्व्याचक्षते, तदनुपपन्नं मन्वान आह ( तन्मनो बुद्धौ नियच्छेदिति ) अहङ्कारपरत्वमस्वरसम्, बुद्धिपरत्वन्तु स्वरसमित्यभिप्रायेणाह ( ज्ञानशब्देनेति ) पूर्वोक्ता बुद्धिः, अनात्मात्मविषयहेयोपादेयताध्यवसायः । ज्ञानसामान्यवाचिशब्दस्य ज्ञानविशेषवाचित्वं मुख्यमिति भावः । आत्मशब्दसमानाधिकरणज्ञानशब्दस्य बुद्धिपरत्वमयुक्तमित्यत्राह ( ज्ञान आत्मनीति ) आत्मशब्दस्य स्वतश्चेतनैकान्तत्वादनन्तरवाक्यस्थात्मशब्दस्यास्य चैकरूपार्थत्वे स्वारस्याच्च सामानाधिकरण्यमात्रस्वारस्यमुपेक्ष्यमित्यभिप्रायः । वैयधिकरण्यफलितमाह (आत्मनि वर्त्तमान इति) सप्तम्यर्थस्य स्फुटीकरणाय वर्त्तमानपदमध्याहृतम् । ज्ञानशब्दस्याहङ्कारपरत्वाश्रयणम् किं शब्दस्वारस्यात्, उतार्थवशात् ? । न प्रथमः, दत्तोत्तरत्वात् । नापि द्वितीयः, अर्थसामर्थ्यादर्शनात् । मनोमहतोर्मध्यगतत्वमर्थसामर्थ्यमिति चेत्; यदि शब्दतः प्रत्यभिज्ञानाभावेऽपि ज्ञानशब्दो मनोमहतोर्मध्यगतत्वरूपार्थसामर्थ्यादहङ्कारपरः तर्हि तुल्यन्यायत्वात् 'मनसस्तु परा बुद्धि' रित्यत्रापि बुद्धिशब्दस्याहङ्कारपरत्वं स्यात्. तदप्यस्त्विति न वाच्यम् ; स्वग्रन्थविरोधात् । अथ बुद्धिशब्देनाहङ्कारं ब्रूयुः तथापि तन्त्रसिद्धस्याहङ्कारस्य प्रत्यभिज्ञा नोपपद्यते, बुद्धिशब्देन व्यवहाराभावात् महच्च न तन्त्रसिद्धमिह प्रत्यभिज्ञायते आत्मशब्देन सामानाधिकरण्यादिति हि अन्तिमसूत्रव्याख्याने तैरुक्तम् । अथोच्येत तत्र यद्यपि मनोमहतोर्मध्यगतो बुद्धिशब्दः तथापि नाहङ्कारपरः, महच्छब्दस्यात्मशब्दोपपदपीडितत्वेन महत्तत्त्वाभिधायकत्वाभावादिति । तर्ह्यत्रापि सप्तम्यन्तमहच्छब्दस्यापि आत्मशब्दोपपदपीडितत्वेन महत्तत्त्वोपस्थापकत्वाभावान्मनोमहतोर्मध्यगतत्वरूपमर्थसामर्थ्यं न विद्यते । यद्यत्रोपपदं न पीडकम्, तर्हि तत्रापि पीडनासामर्थ्यात् " मनसस्तु परा बुद्धिरित्यप्यहङ्कार उक्तः स्यात् । ततश्चाधिकरणप्रयासवैयर्थ्यमेव स्यात्, तन्त्रप्रक्रियास्थिरत्वसिद्धेरित्यलमनेन । ज्ञानमात्मनीत्यस्यार्थ-

ॐ भावप्रकाशिका ॐ

स्वग्रन्थमेव प्रदर्शयति ( अथ बुद्धिशब्देन अहङ्कारं ब्रूयुरिति ) ( अन्तिमसूत्र-

सप्तम्यौ । आत्मनि वर्त्तमाने ज्ञाने नियच्छेदित्यर्थः । "ज्ञानमात्मनि महति नियच्छेत्" बुद्धिं कर्त्तरि महत्यात्मनि नियच्छेत् । 'तद्यच्छेच्छान्त आत्मनि' तं कर्त्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुंसकलिङ्गता । एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः ॥ १ ॥

* श्रुतप्रकाशिका *

माह ( बुद्धिमिति ) वाचो मनसि नियमनम् मनोऽननुगुणप्रवृत्तिवैमुख्यापादनम् । मनसो बुद्धौ नियमनम् अध्यवसायानुगुणप्रवृत्तितापादनम् । बुद्धिः—अर्थेषु हेयताध्यवसायरूपा । तस्या बुद्धेरात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम् । शान्ते— स्वतः ऊर्मिषट्कप्रतिभटे । शान्त आत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषताप्रतिपत्तिः, सैव परस्यापि वशीकरणं भवति । न तदिति निर्देष्टव्यम्, आत्मशब्दस्य पुँल्लिङ्गत्वात्तच्छब्दस्य चात्मपरामर्शित्वादित्यत्राह ( व्यत्ययेन तदिति) ( नपुंसकलिङ्गतेति ) अत्र तदिति व्याख्येयपदम् "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति शाब्दैरुक्तलिङ्गव्यत्ययेन तदिति नपुंसकलिङ्गतेत्यर्थः । नन्वस्मिन्मन्त्रे रूपकरूपितानां वशीकरणप्रकार उच्यत इत्युक्तम्. तदयुक्तम् ; विषयाणां शरीरस्य चात्र नियमनानुक्तेरिति चेन्न, तन्नियमनस्यार्थसिद्धत्वात् । विषयाणां नियमनं हि नाम तदसन्निधापनम्. शरीरस्य नियमनं नाम सात्त्विकाहारेण परिशोधनम् । न हि दूरतोऽनुज्झितविषयस्य दुष्टाहारसेवामलिनमनसः इन्द्रियादिनियमनं सम्भवति, अतोऽर्थसिद्धस्येह कण्ठोक्त्यभावः । तन्निमित्तमिदं विषयसन्निधिपरिवर्जनं सात्त्विकाहारसेवनञ्च + योगाद्युत्पादनकाले सम्पाद्यम्, तदानीं वाक्चक्षुरादिकर्म-

* भावप्रकाशिका *

व्याख्याने तैरेवोक्तमिति ) 'महद्वच्च' इति सूत्रव्याख्याने यादवप्रकाशीयैरेवोक्तमित्यर्थः । युक्त्यन्तरमप्याह ( तन्निमित्तमिदं विषयसन्निधिपरिवर्जनमित्यादिना )

+ योगव्युत्थानकाल इति रङ्गरामानुजीयपाठः ॥

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानम्? तत्राह—

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति; तदव्याकृतमिह शरीरावस्थमव्यक्तशब्देनो-

---

* श्रुतप्रकाशिका *

ज्ञानेन्द्रियाणां नात्यन्तव्यापारनिषेधः। अत्यन्तनिषेधस्तु योगकाल एव कर्तव्यः, अतो योगकाल एव कर्तव्यस्य नियमनस्यास्मिन् मन्त्रे विधानात् 'इन्द्रियेभ्यः' इत्यस्मिन्मन्त्रेऽपि वशीकार्यत्वे परत्वं विवक्षितमिति तन्त्रसिद्धकार्यकारणतत्त्वप्रत्यभिज्ञानाभावात् रूपकरूपितेषु परिशिष्टं शरीरमव्यक्तशब्देनोच्यत इति स्थितम्॥

उत्तरसूत्रशङ्कामाह (अव्यक्तेति) पारिशेष्याच्छरीराव्यक्तशब्दयोरैकार्थ्ये अवश्यम्भाविनि सति उपक्रमाधिकरणन्यायेन उपक्रमस्थशरीरशब्दानुगुणमव्यक्तशब्दे नेये तत्राव्यक्तशब्दस्य वृत्तिः कथमित्यपेक्षायामाहेत्यभिप्रायः॥

॥ सूक्ष्मं तु तदर्हत्वात् ॥ द्रव्यैक्यलक्षणसम्बन्धात् कार्ये कारणशब्दोपचार इत्याह (भूतसूक्ष्ममिति) कारणभूताव्यक्ते कार्यवाचिशरीरशब्दोपचारः किं

* भावप्रकाशिका *

(योगव्युत्थानकाल इति) योगराहित्यदशायामित्यर्थः। (अत्यन्तनिषेधस्त्विति) ततश्च योगव्युत्थानकालकर्तव्यविषयसन्निधिपरिवर्जनादेरस्मिन्मन्त्रेऽनुक्तिर्न दोषायेति भावः। प्रकृतमुपसंहरति (अतो योगकाल एवेति)॥ (कार्यवाचिशरीरशब्दोपचारः किं न स्यादिति) यद्यपीयं शङ्का उपक्रमाधिकरणन्यायादित्यादिना पूर्वं परिहृता, तथाप्यर्हत्वादितिसूत्रखण्डाभिप्रेतयुक्त्यन्तरोपन्यासायायं पुनरुपक्षेप इति द्रष्टव्यम्। ननु तदर्हत्वादित्यत्र तच्छब्देन विकारापन्नाव्याकृताचिद्वस्तुनः कथं परामर्शः? सूक्ष्ममितिसौत्रपदेन सूक्ष्ममात्रस्य प्रकृततया विकारापन्नव्याकृतस्य प्रस्तुतत्वादित्याशङ्क्य शरीररूपकेति पूर्वसूत्रे शरीरस्य श्रुतत्वादस्मिंश्च सूत्रे सूक्ष्ममिति निर्दिष्टत्वाच्च शरीरभावापन्नं सूक्ष्मं बुद्धिस्थम्, विशिष्टस्य प्राक् प्रस्तुततया तस्य तच्छब्देन परामर्शस्सम्भवतीत्याह (सूक्ष्मत्वं

च्यते । तदर्हत्वात्- तस्याव्याकृतस्याचिद्वस्तुन एव विकारापन्नस्य रथवत् पुरुषार्थसाधनप्रवृत्त्यर्हत्वात् ॥२॥

* श्रुतप्रकाशिका *

न स्यादित्यत्राह (तदर्हत्वादिति) व्याख्येयस्सौत्रस्तच्छब्दस्तस्येति व्यस्य निर्दिष्टः। सूक्ष्मत्वं स्वशब्देनोपस्थापितम्, स्थूलावस्थं शरीरमव्यक्तशब्दविषयतया बुद्धिस्थम्, अतस्तथाविधाचिद्द्रव्यपरामर्श इति भावः । अवस्थाद्वयानुगतवस्तुलक्षणानिमित्तमाकारमाह ( अचिद्वस्तुन इति ) ज्ञानसङ्कोचविकासरूपविकारापत्तिश्चिद्वस्तुनोऽप्यस्ति, तद्व्यावृत्त्यर्थमचिद्वस्तुन एव विकारापन्नस्येत्युक्तम् । अर्हत्वं कार्यापेक्षम्, तद्विशेषं प्रकरणसिद्धमभिप्रेत्याह ( पुरुषार्थेति ) औपचारिकत्वाविशेषेऽपि पुरुषार्थप्रवृत्त्यनर्हतारूपार्थविरोधात् तत एवाव्यक्तस्य वशीकार्य्यत्वायोगाच्च न कारणे कार्योपचाराच्छरीरशब्दो भूतसूक्ष्मपरत्वेन व्याख्यात इत्यर्थः । यादवप्रकाशीयास्तु- सूक्ष्मं शरीरमिह गृह्यते, तस्याव्यक्तशब्दार्हत्वात्; पूर्वत्रापि तदेव रथत्वेन रूपितम्, लोकान्तरप्राप्तेरपि विवक्षितत्वादिति व्याचक्षते. तदयुक्तम्, उपक्रमस्थशरीरशब्दस्य स्वरसतः स्थूलशरीरप्रतिपत्तिहेतुत्वात् 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिना पुरुषार्थसाधनप्रवृत्तिविशेषप्रतिपादनेन पुरुषार्थसाधनप्रवृत्त्यर्हत्वविवक्षामूलं रथत्वेन रूपणमित्यवगमाच्च । पुरुषार्थसाधनप्रवृत्त्यर्हत्वं हि स्थूलशरीरस्य, लोकान्तरप्राप्तिः फलानुभवार्थेति तत्साधनस्य सूक्ष्मदेहस्य नोपायानुष्ठानार्हता, अतोऽव्यक्तशब्दमात्रस्वारस्यादपि उपक्रमस्थशरीरशब्दस्वारस्यादुपायदशायामुपयोगप्रतीतिस्वारस्याच्च यथोक्त एव सूत्रार्थ इत्येतदभिप्रायेणाह ( रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वादिति ) ॥

* भावप्रकाशिका *

स्वशब्देनोपस्थापितमिति ) सूक्ष्ममिति सौत्रपदेनोपस्थापितमित्यर्थः । ( बुद्धिस्थमिति ) पूर्वसूत्रे शरीररूपकेति बुद्धिस्थमित्यर्थः । ( अवस्थाद्वयानुगतवस्तुलक्षणानिमित्तमाकारमाहेति ) अवस्थान्तरविशिष्टवस्तुलक्षणाबीजभूतमुख्यार्थानुपपत्तिमाहेत्यर्थः । ( चिद्वस्तुनोप्यस्तीति ) ज्ञानसङ्कोचविकासरूपविकारवतो रथवत्पुरुषार्थप्रवृत्त्यर्हत्वाभावादचिद्वस्तुन एव विकारापन्नस्य प्रवृत्त्यर्हत्वादिति वक्तव्यमिति भावः । ( पुरुषार्थसाधनप्रवृत्तिविशेषप्रतिपादनेनेति ) पुरुषार्थसाधनं वागादि,

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते; कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः? तत्रापि हि भूतकारणमेवाव्यक्तमित्युच्यते; तत्राह—

तदधीनत्वादर्थवत् ॥ ३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद्भूतसूक्ष्मम् । एतदुक्तम्भवति- न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः, अपि तु परमपुरुषशरीरतया तदात्मकत्वविरहेण । तदात्मकत्वेनैव हि प्रकृत्यादयस्स्वप्रयोजनं साधयन्ति; अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युः, तथाऽनभ्युप-

* श्रुतप्रकाशिका *

उत्तरसूत्रशङ्कामाह (यदीति) (भूतकारणमेवेति) त्वयापि यदभ्युपेतं भूतकारणत्वेन तदेवेति भावः ॥ तदधीनत्वादर्थवत् ॥ न हि प्रयोजनवत्त्वाप्रयोजनवत्त्वे चोदिते, प्रधानाङ्गीकारः प्रधानवाददूषणाच्च व्याहतमिति ह्युक्तम्, तत्कथं परिहृतं भवतीत्यत्राह (एतदुक्तमिति) (तदात्मकत्वविरहेणेति) नाभ्युपगच्छाम इत्यन्वयः । तदधीनशब्दस्य प्रवृत्तिमात्रे तादधीन्यपरत्वशङ्काव्यावृत्त्यर्थं परमपुरुषशरीरतया तदात्मकत्वेनेत्युक्तम् । तेन प्रवृत्तौ पराधीनत्वेऽपि सत्तास्थित्योः कुलालानपेक्षदण्डचक्रादिव्यावृत्तिः, स्वातन्त्र्येण किं नाभ्युपगम्यत इत्यपेक्षायामर्थस्थितिमाह ( तदात्मकत्वेनैव हीति ) हिशब्दः प्रमाणप्रसिद्धिद्योतकः । स्वप्रयोजनम्— स्वकार्यम् । प्रकृतेः कार्यं हि महानेव, महदादीनामपि तत्तत्कार्यमेव प्रयोजनम् . पुरुषस्य भोगापवर्गरूपं वा । उक्तमर्थमुपपादयति ( अन्यथेति ) अन्यथा— तदात्मकत्वविरहे । ( स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युरिति ) "न तदस्ति विना यत्स्यात्" "मयि सर्वमिदं प्रोतम्"

ϕ भावप्रकाशिका ϕ

प्रवृत्तिविशेषः नियमनम्, ततश्च पुरुषार्थसाधनानामेव रूपकवाक्ये परत्वावधिवाक्येपि प्राप्तत्वात्सूक्ष्मस्य चातथात्वाच्छरीरस्यैव ग्रहणं युक्तमिति भावः ॥ (कालान्तरावि-

गमादेव तन्त्रसिद्धप्रक्रियानिरसनमिति । श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकास्सङ्कीर्त्यन्ते, यथा "पृथिव्यप्सु लीयते" इत्यारभ्य "तन्मात्राणि भूतादौ लीयन्ते। भूतादिर्महति लीयते। महानव्यक्ते लीयते। अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते। तमः परे देव एकीभवति" तथा [2]"यस्य पृथिवी शरीरं यस्यापश्शरीरं यस्य तेजश्शरीरं यस्य वायुश्शरीरं

* श्रुतप्रकाशिका *

'मत्तः सर्वं प्रवर्त्तते'' इत्यादिभिः स्वरूपस्थितिप्रवृत्तितादधीन्यसिद्धिः, स्वरूपम्—व्यवहारार्हत्वम् मानसम्बन्धार्हत्वं वा। तस्य कालान्तरावच्छिन्नाकारविरहः स्थितिः। प्रवृत्तिः— कार्योत्पत्त्यनुगुणव्यापारः। स्वरूपस्थिती न स्याताम्, ततश्च प्रवृत्त्यभावः कैमुत्यन्यायसिद्धः, यथा शरीरस्यात्मविश्लेषे इत्यर्थः। सूत्रे अर्थवच्छब्दस्तदुपयुक्तार्थतादधीन्यस्यापि प्रदर्शनार्थः । अर्थोपयोगित्वात्प्रवृत्तेः प्रवृत्त्युपयोगित्वाच्च स्वरूपस्थित्योरित्यभिप्रायः । पूर्वोक्तव्याघातस्य परिहृतत्वं दर्शयति ( तथाऽनभ्युपगमादेवेति ) अब्रह्मात्मकप्रधानवाद एव दूष्यः, ब्रह्मात्मकप्रधानं स्वीकृतमिति न व्याहतिरित्यभिप्रायेण प्रक्रियानिरसनमित्युक्तम्। हिशब्दाभिप्रेतं तदात्मकत्वे प्रमाणं दर्शयति ( श्रुतिस्मृत्योर्हीति ) प्रलयश्रुतिः "पृथिव्यप्सु लीयते' इत्यादिः, महिमवादश्रुतिः 'यस्य पृथिवी शरीर'मित्यादिः।

ϕ भावप्रकाशिका ϕ

च्छिन्नाकारविरह इति) कालान्तरव्यावृत्ताकारविरहः, कालान्तरव्यावृत्तिविरहइत्यर्थः, कालान्तरानुवृत्तिरितियावत्। (तदुपयुक्तार्थतादधीन्यस्यापीति) तदव्यक्तम् उपयुक्तं यस्येति तदुपयुक्तार्थः, तत्साध्यार्थो महदादिरुच्यते, यदर्थोपयुक्तस्वरूपप्रवृत्तयो यदधीनास्तत्साध्यार्थस्यापि तदधीनत्वदर्शनादितिभावः। ननु महिमवादेषु शरीरत्वप्रतिपादनेन तदात्मकत्वसिद्धावपि प्रलयवादेषु कथं तत्सिद्धिः? पृथि-

१ सुबाल. २ खं ॥ | २ सुबाल ७ खं॥

यस्याकाशः शरीरं यस्याहङ्कारः शरीरं यस्य बुद्धिश्शरीरं यस्याऽव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" तथा [1]"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्य्यते जगत्। एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्य

* श्रुतप्रकाशिका *

प्रलयपरत्वश्रुतेरपि 'तमः परे देव एकीभवती'त्येतदन्तत्वात्तदात्मकत्वसिद्धिः। 'तस्मात्तमः सञ्जायते' इत्युत्पत्तिवाक्यं द्रष्टव्यम्, अप्ययपूर्वकत्वात्सृष्टेः, प्रलयश्रुत्युपादानं सृष्टिवाक्यप्रदर्शनार्थम्। शरीरस्य जीवात्मापेक्षया परत्वं कथमिति शङ्कायां जीवस्य शरीराधीनप्रवृत्तित्वाज्जीवापेक्षया शरीरस्य परत्वम्, यथेन्द्रियेभ्योऽर्थानां परत्वमिति परिहारपरमिदं सूत्रमितरैर्व्याख्यातम्— तदयुक्तम्, अपेक्षितविधेरनपेक्षितविधानदौर्बल्यात्। न हि वेदान्तिभिः प्रकृतिः स्वरूपेण नाभ्युपगम्यते; अतस्तदभ्युपगमतन्निरासयोर्व्याघातः परिहर्त्तव्य इति तत्परिहारोपेक्षणमपेक्षिताकरणं स्यात्। ननु शरीरस्य जीवात् परत्वानुपपत्तिशङ्का च परिहर्त्तव्या; अतो नानपेक्षितविधानं स्यादिति चेत्, एवं तर्हीन्द्रियेभ्यः कथमर्थानां परत्वमिति शङ्कायाश्च परिहर्त्तव्यत्वात्तत्परिहाराय सूत्रान्तरं प्रणेयं स्यात्, सा च 'अर्थव'दित्यनेन परिजिहीर्षितेति चेत्; तर्हि अर्थवदिति दृष्टान्ततयोक्तिर्न घटते. अर्थेभ्यो मनसः परत्वं कथमिति शङ्कापरिहाराय सूत्रान्तरं वक्तव्यञ्च स्यात्, अर्थमनोबुद्ध्यादीनां परत्वं यथाकथञ्चित् व्यवहारे प्राधान्यादिविवक्षया निरूढमत इति न तत्र

* भावप्रकाशिका *

व्यादीनामवादिषु लयमात्रप्रतिपादनादित्याशङ्क्याह (प्रलयपरत्वश्रुतेरपीति) भाष्ये उत्पत्तिवाक्यानुपादाने हेतुमाह ( अप्ययपूर्वकत्वादिति ) ( इतरैरिति ) यादवा-

1 गीता. ५-४, ५, ६, ७॥

जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति । [1]"व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च" इति, [2]"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते" इति च ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥

यदि तन्त्रसिद्धमिहाऽव्यक्तमविवक्षिष्यत्, तदास्य ज्ञेयत्व-

* श्रुतप्रकाशिका *

परिहर्त्तव्यमिति चेत् ; अव्यक्तस्य परत्वमपि यथाकथञ्चिन्निरूप्यत इति न सूत्रापेक्षा । केन युक्तिबलेन यथाकथञ्चिन्निर्वाह इति चेत् ; अर्थमनोबुद्ध्यादीनां यथाकथञ्चित्परत्वनिर्वाहः केन युक्तिबलेन ? प्रकरणपारिशेष्याभ्यामाद्यसूत्रविवक्षिताभ्यामव्यक्तशब्दस्य रूपकविन्यस्तशरीरविषयत्वनिश्चयबलेनेति चेत् ; तेनैवायमपि निर्वाह आद्यसूत्रेणैव सिद्ध इत्यनपेक्षितविधानं स्यादेव, अतः उक्तार्थपरमेवेदं सूत्रम् ॥ ज्ञेयत्वावचनाच ॥ व्यक्ताव्यक्तज्ञविज्ञानादिति साङ्ख्यग्रन्थ

* भावप्रकाशिका *

दिभिरित्यर्थः । निरूह्यत इति पाठः । 'वहेर्यकि सम्प्रसारणे अङ्गावयहलुत्तरत्वाभावेन तस्य दीर्घप्रसक्तेः 'ऊह वितर्के' इति धात्वाश्रयणेपि उपसर्गाद्ध्रस्व 'ऊह्यते'रिति ह्रस्वविधानाचेति द्रष्टव्यम् । ( केन युक्तिबलेनेति ) अव्यक्तपरत्वस्येति शेषः । शङ्कते ( प्रकरणपारिशेष्याभ्यामिति ) रूपकविन्यस्तगृहीतेरित्याद्यसूत्रविवक्षिताभ्यामव्यक्तशब्दस्य शरीरविषयत्वनिश्चयाच्छरीरस्य चात्मापेक्षया मुख्यस्य परस्यासम्भवेनास्मिन् प्रकरणे सर्वत्र परत्वस्य यथाकथञ्चिनिर्वाह्यत्वं श्रुत्यभिप्रेतमवगम्यते, ततश्चार्थादीनामपि परत्वं कथञ्चिदुपपद्यत इति सिध्यतीति चेदित्यर्थः । ( तेनैवेति ) युक्तिबलेनेतिशेषः ॥

१ वि. १-१-१८ ॥ | २ वि. ६-४ ३९-४० ॥

मविवक्षिष्यतः; [1] व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात्, न चास्य ज्ञेयत्वमुच्यते; अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

[2] "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत्–तन्न, प्राज्ञः- परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते [3] "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्। [4] "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति प्राज्ञस्यैव प्रकृतत्वात्; अत एव 'पुरुषान्न परं किञ्चित' इति न पञ्चविंशकपुरुषातिरिक्ततत्त्व-

* श्रुतप्रकाशिका *

एव स्ववाक्ये निवेशितः ॥ वदतीति चेन्न प्राज्ञो हि प्रकरणात्। ( अव्यक्तस्य ज्ञेयत्वमिति ) व्यक्तधर्मभूतशब्दादिनिषेधानामव्यक्तपर्यवसानस्य न्याय्यत्वान्महतः परत्वोक्तेश्च सामान्येन यत्तच्छब्दनिर्दिष्टमपि कारणमव्यक्तमिति भावः। ( विज्ञानसारथिरिति ) अनेन ज्ञेयस्य प्राज्ञस्य परमपुरुषासाधारणविष्णुशब्देन प्रकृतत्वं दर्शितम् ( एष सर्वेष्विति ) निचाय्येत्युक्तस्य ज्ञानस्य दृश्यत इतिपदेन प्राज्ञविषयतया प्रकृतत्वं दर्शितम्। अवान्तरचोद्यपरिहारपरेऽस्मिन् सूत्रे परमप्रकृतपूर्वपक्षयुक्तिनिरासश्चार्थसिद्ध इत्याह ( अत एवेति ) व्यक्तधर्मनिषेधा-

१- सांख्यतत्त्वकारिका ॥
२- कठ. १-३-१५ ॥
३ कठ. १-३-९ ॥
४ कठ. १-३-१२ ॥

निषेधः । तस्य च परमपुरुषस्याशब्दत्वादयो धर्माः [1]'यत्तदद्रेश्यमग्राह्यम्' इत्यादिश्रुतिप्रसिद्धाः। 'महतः परम्' इत्यपि [2]'बुद्धेरात्मा महान् परः' इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥ ५ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

अस्मिन् प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणामेव चैवमुपन्यासः—ज्ञेयत्वेनोपन्यासस्तद्विषयश्च प्रश्नो दृश्यते, नान्यस्याव्यक्तादेः । तथाहि; नचिकेता मुमुक्षुस्सन् मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यता-

* श्रुतप्रकाशिका *

नामव्यक्तपर्यवसानचोद्यस्यादृश्यत्वाद्यधिकरणे परिहृतत्वमाह (तस्य चेति) महतः परत्वादव्यक्तमिह विवक्षितमित्यत्राह (महत इति) इन्द्रियादिपरिकरवत्त्वलक्षणप्राधान्यविवक्षातिशयान्महच्छब्देनात्मनिर्देशः ॥ प्रकरणस्य प्राज्ञैकपरत्वं नास्ति, प्रधानस्यापि प्रतिपाद्यमानत्वात्. तस्मात्प्राज्ञपरत्वं न प्रधानपरत्वविरोधीत्यत्राह सूत्रकारः॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च॥ प्रथमश्चशब्दो हेतुसमुच्चये, द्वितीयश्चशब्दः प्रश्नोपन्यासयोः समुच्चये, कथमत्र त्रयाणामुपन्यासः ? प्रश्नवाक्यं हि मुक्तमात्रविषयमिति शङ्कायां प्रतिवचनप्रकारेण प्रश्नार्थस्य विज्ञेयत्वात् प्रश्नवाक्येऽपि त्रयमपि पृष्टं भवतीत्यभिप्रायेण प्रश्नस्य पश्चादुक्तिः। (अस्मिन्नित्यादि) त्रयाणामितिपदमग्निजीवपरमात्मपरं परैर्व्याख्यातमिति तद्व्यावृत्त्यर्थमाह (उपायेति) एवमुपन्यास इति व्याख्येयं पदम् । एवंपदं व्याचष्टे (ज्ञेयत्वेनेति) ज्ञेयत्वावचनाच्चेति पूर्वसूत्रस्थज्ञेयत्वमेवंशब्देन परामृश्यत इत्यर्थः। तदुपपादयति (तथा हीति) (नचिकेता इत्यादि) प्रथमवरवरणं द्वितीयपादे

* भावप्रकाशिका *

(हेतुसमुच्चये इति) पूर्वसूत्रोक्तहेतुना एतत्सूत्रोक्तहेतुं समुच्चिनोतीत्यर्थः। (लोका-

१ मु. १-६ ॥ | २ कठ १-३-१० ॥

पादिनीमात्मनि पितुस्सुमनस्कतां प्रतिलभ्य द्वितीयेन वरेण मोक्षोपायभूतां नाचिकेताग्निविद्यां वव्रे, [१] "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तँ श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण' इति। स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो

* श्रुतप्रकाशिका *

'अत्ता चराचरग्रहणा'दित्यधिकरणे विस्तृतत्वादिह प्रतिलभ्येत्यन्तेन सङ्क्षिप्तम्। तत्र सङ्क्षिप्तत्वात् द्वितीयवरवरणं विस्तरेण दर्शयति (द्वितीयेनेति) (मोक्षोपायभूतामिति) नाचिकेताग्निविद्यायाः मोक्षोपायत्वमङ्गिद्वारा भवति, तच्च तस्याः परमात्मात्मकस्वात्मानुसन्धानगर्भत्वात्, तथाहि तदुभयं श्रूयते "लोकादिमग्निं तमुवाच तस्मै" इत्युपक्रम्य "ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति 'त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम्। स मृत्युपाशात् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके" इति वाक्येन परमात्मतदात्मकस्वात्मतदनुसन्धानगर्भाग्निविद्याज्ञानपूर्वकं चिन्वानस्य शोकातिगत्वमुक्तम्। 'यो वा एतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम्। स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायते" इति वाक्येन ब्रह्मात्मकचेतनदृष्ट्या वा तादृशदेवताधिष्ठितत्वेन वाऽनुसन्धानपूर्वकमग्निं चिन्वानस्यापुनर्भवहेतुभूतब्रह्मोपासनद्वारा मोक्षप्राप्तिरुक्ता; तृतीयवरवरणश्लोकार्थनिष्कर्षौपयिकतया द्वितीयवरवरणश्लोकमुपादाय तत्र व्याख्येयस्य स्वर्ग्यपदस्य प्रकृत्यंशं व्याचष्टे (स्वर्गेति) मोक्षशब्दो मोक्षस्थानपरः, लोकशब्दसामानाधिकरण्यात् भाष्ये तत्रस्थस्येति वक्ष्यमाणत्वाच्च। स्वर्गशब्दस्य मोक्षवाचित्वोपपादकः परमपुरुषार्थलक्षणशब्दः, स्वर्गशब्दस्य प्रकृष्टसुखोपलक्षणत्वात् मोक्षस्य निरवधिकानन्दरूपत्वाच्च स्वर्गशब्दवाच्यत्वमिति भावः। प्रसिद्धस्वर्गपरत्वं किं न स्या-

❀ भावप्रकाशिका ❀

दिमग्निं तमुवाच तस्मा इत्युपक्रम्येति) अत्रापेक्षितश्रुतिक्रमः 'अत्ता चराचरग्रहणा'

१ कठ. १-१-१३॥

मोक्षोऽभिधीयते, 'अमृतत्वं भजन्ते' इति तत्रस्थस्य जननमरणाभावश्रवणादुत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च; [२]"त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू" इति च प्रतिवचनात्। तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्म्मानुगृहीतोपासनस्वरूपञ्च पृष्टम्, [३]"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः"

* श्रुतप्रकाशिका *

दित्यत्राह (अमृतत्वमिति) (तत्रस्थस्येति) स्वर्गलोका इति हि बहुव्रीहिः, निरतिशयसुखरूपपरमव्योमस्था इति भावः। मोक्षवाचित्वे हेत्वन्तरमाह (उत्तरत्रेति) तृतीयवरवरणप्रश्ने 'श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः। अपि सर्वं जीवितमल्पमेव" इति, तथा 'जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव' इति तत्र नचिकेतसैव क्षयिफलस्य निन्दितत्वात् क्षयिफलविमुखेन नचिकेतसा क्षयिफलसाधनप्रश्नानुपपत्तेरित्यर्थः। द्वितीयवरवरणप्रतिवचनावगतं हेत्वन्तरमाह (त्रिणाचिकेत इति) "त्रिणाचिकेतः—'अयं वा वयः पवते" इत्याद्यनुवाकत्रयाध्यायी। त्रिकर्मकृत्—यजनाध्ययनदानकृत्, पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा। त्रिभिरग्निभिर्हेतुभिः सन्धिम्—परमात्मोपासनेन सम्बन्धम्, प्राप्य जन्ममृत्यू तरतीत्यर्थः। 'करोति तद्येन पुनर्न जायते' इत्यनेनैकार्थ्यात्। (तृतीयेनेति) येयं प्रेत इतिमन्त्रस्य देहातिरिक्तजीवस्वरूपमात्रप्रश्नपरत्वव्युदासायाह (मोक्षेति) अत्रोपायोपेयप्रश्नो गर्भित इति भावः। प्रतिवचनप्रकारेण प्रश्नार्थस्यावगन्तव्यत्वात्। प्रेते—परित्यक्तचरमशरीरे इत्यर्थः। "न प्रेत्य संज्ञाऽस्ती"ति प्रयोगात्, अन्यथा पूर्ववरद्वयवरणानुपपत्तिर्हेतुः पूर्वः मुक्तत्वादिह न कण्ठोक्तः, इदं च विस्तरेणोपपादयिष्यामः। अस्मिन् प्रकरणे 'नचिकेतो मरणं मानुप्राक्षी'रिति मरणशब्दश्चरमशरीरवियोगपरः, उक्तहेतोरेव

१ कठ. १-१-१७॥ | २ कठ. १-१-२०॥

इति। एवं मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश, [४]"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति, तदेवं सामान्येनोपदिष्टे नचिकेताः प्रीतः सन् देवं मत्वा' इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य 'अध्यात्मयोगाधिगमेन' इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च 'मत्वा धीरो हर्षशोकौ जहाति' इति निर्दिष्टस्य + ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ [५]"अन्यत्र

* श्रुतप्रकाशिका *

'पञ्चविंशतितत्त्वज्ञः परमात्मा भवेन्मृतः। स मुक्तस्तत्त्वसन्तानात् परेण समतां व्रजेत्' इति परमात्मसाम्यापन्ने मुक्तेऽमृतशब्दस्य कपिलासुरिसंवादे प्रयुक्तत्वात्, "देवैरत्रापि विचिकित्सितं पुरा"इत्यारभ्य "धृत्या धीरो नचिकेतोऽत्यस्राक्षीः" इत्यन्तेनोच्यमानं दुरवगमत्वविविधप्रलोभनप्रश्नप्रतिषेधादिकमाभिप्रेत्याह (तदुपदेशयोग्यतां परीक्ष्येति) दुर्दर्शम्– द्रष्टुमशक्यम्, कुतः? गूढम्– गुणत्रयतिरोहितत्वात्। अनुप्रविष्टम् शरीरानुप्रविष्टम्। तत्रापि गुहाहितम्– हृदयगुहागतम्. गह्वरेष्ठम्– तदन्तर्गते वस्तुनि स्थितम्, जीवान्तः स्थितमित्यर्थः। जहातीत्युपदिदेशेत्यन्वयः, येयं प्रेत इत्यादिवाक्यस्य जीवमात्रप्रश्नपरत्वे परमात्मविषयतया प्रतिवचनवैघर्थ्यं स्यादित्यभिप्रायः। अस्मिन्वाक्ये स्वोक्तमर्थत्रितयमपि विशदयति (तदेवमिति) अध्यात्मयोगशब्दः प्राप्तृस्वरूपविषययोगपर इत्यभिप्रयन्नाह (वेदितव्यतयेति) तं दुर्दर्शमितिमन्त्रेण त्रितयमप्युक्तं चेच्छ्रोतव्याभावात् पुनः प्रश्नानुपपत्तिरिति शङ्कापनोदनाय प्रश्नाकाङ्क्षाप्रयोजने दर्शिते (सामान्येनेति) (स्वरूपविशोधनाय पुनः पप्रच्छेति च) पुनः

* भावप्रकाशिका *

दित्यत्र विलिखितः, व्याख्यातश्च; तत एवावगन्तव्यः। (जहातीत्युपदिदेशेति)

[४] कठ. १-२-१२॥ [५] कठ. १-२-१४॥ + प्राप्यब्रह्म; इति पा०॥

धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद" इति । एवं सकलेतरातीतानागतवर्त्तमानसाध्यसाधनसाधकविलक्षणे

* श्रुतप्रकाशिका *

पप्रच्छेति पाठः। उपायोपेयोपेतॄणां त्रयाणामपि सामान्येनोपदिष्टत्वात् स्वरूपशोधनाकाङ्क्षापि सर्वसाधारणी, तत्कथम् 'अन्यत्र धर्मा'दितिमन्त्रेण परमात्ममात्रविषयप्रश्नः ? इति शङ्कायां प्रश्नस्य त्रितयविषयत्वमनुभाषणव्याजेन दर्शयंस्तदनन्तरमन्त्रस्यापि त्रितयविषयत्वमाह ( एवं सकलेतरेति ) कालत्रयसम्बन्धित्वं हि वक्ष्यमाणत्रितयस्याप्यस्ति, तत्कथं विलक्षणत्वमिति शङ्काव्युदासार्थं इतरशब्दः । वर्त्तमानशब्देन कृताकृतशब्दो व्याख्यातः, प्रारब्धमसमाप्तं हि वर्तमानमुच्यते। अन्यत्रेति वैलक्षण्यं विवक्षितम्, धर्मः– उपायः । धर्मादन्यत्र– प्रसिद्धोपायविलक्षण उपाय इत्यर्थः । अधर्मः– धर्मेतरः , उपेयः । अधर्मादन्यत्र– प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः । अस्मादिति बुद्धिस्थस्तत्साधको विवक्षितः, स एव उपेता, स हि प्रसिद्धोपेतृसाधकविलक्षणः, साधकावस्थायामितरफलविरक्तत्वात् फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च । कृताकृतादिति धर्मादीनां विशेषणम्, कृताकृताद्धर्मादेर्विलक्षणं यत् भूताद्भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः । यद्वा धर्मादधर्माच्च अन्यत्र यदित्युपासनप्रश्नः , पुण्यापुण्यरूपसाधनविलक्षणत्वादुपासनस्य । कृताकृताद्भूताद्भव्याच्चान्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टम्. उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च तत एव तस्यापि तन्त्रेण

* भावप्रकाशिका *

पूर्वेणान्वय इति शेषः । ( पुनः पप्रच्छेति पाठ इति ) पुनः पुनः पप्रच्छेतिपाठस्तु न युक्त इति भावः । भाष्ये—मत्वा धीरो हर्षशोकौ जहातीति निर्दिष्टस्य ब्रह्मोपासनस्येतिपाठः । धीरो न शोचतीतिपाठो लेखकदोषात्, तस्यापकृतत्वादिति द्रष्टव्यम् । ननु कृताकृताद्भूताद्भव्याच्चेतत्रितयस्यापि धर्माधर्मादस्मादितिनिर्दिष्टोपायोपेयोपेतृविशेषणत्वे अन्यत्र भूताद्भव्याच्चेत्यन्यत्रपदं व्यर्थं स्यादित्यस्वरसादाह ( यद्वा धर्माधर्माच्चान्यत्रेति ) परैस्तु धर्माधर्मशब्दाभ्यां तत्साध्यफलानि विवक्षितानि, कृताकृतादिति कार्यकारणप्रपञ्चो विवक्षितः । भूतादिति भूतकालमात्र-

इति । एवं मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश, [४]"तं दुदर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति, तदेवं सामान्येनोपदिष्टे नचिकेताः प्रीतः सन् देवं मत्वा' इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य 'अध्यात्मयोगाधिगमेन' इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च 'मत्वा धीरो हर्षशोकौ जहाति' इति निर्दिष्टस्य + ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ [५]"अन्यत्र

* श्रुतप्रकाशिका *

'पञ्चविंशतितत्त्वज्ञः परमात्मा भवेन्मृतः । स मुक्तस्तत्त्वसन्तानात् परेण समतां व्रजेत्' इति परमात्मसाम्यापन्ने मुक्तेऽमृतशब्दस्य कपिलासुरिसंवादे प्रयुक्तत्वात्, "देवैरत्रापि विचिकित्सितं पुरा"इत्यारभ्य "धृत्या धीरो नचिकेतोऽत्यस्राक्षीः" इत्यन्तेनोच्यमानं दुरवगमत्वविविधप्रलोभनप्रश्नप्रतिषेधादिकमभिप्रेत्याह ( तदुपदेशयोग्यतां परीक्ष्येति ) दुर्दशम्– द्रष्टुमशक्यम्. कुतः ? गूढम्– गुणत्रयतिरोहितत्वात् । अनुप्रविष्टम् शरीरानुप्रविष्टम् । तत्रापि गुहाहितम्– हृदयगुहागतम् . गह्वरेष्ठम्– तदन्तर्गते वस्तुनि स्थितम्, जीवान्तः स्थितमित्यर्थः । जहातीत्युपदिदेशेत्यन्वयः, येयं प्रेत इत्यादिवाक्यस्य जीवमात्रप्रश्नपरत्वे परमात्मविषयतया प्रतिवचनवैघट्यं स्यादित्यभिप्रायः । अस्मिन्वाक्ये स्वोक्तमर्थत्रितयमपि विशदयति ( तदेवमिति ) अध्यात्मयोगशब्दः प्राप्तृस्वरूपविषययोगपर इत्यभिप्रयन्नाह ( वेदितव्यतयेति ) तं दुर्दर्शमितिमन्त्रेण त्रितयमप्युक्तं चेच्छ्रोतव्याभावात् पुनः प्रश्नानुपपत्तिरिति शङ्कापनोदनाय प्रश्नाकाङ्क्षाप्रयोजने दर्शिते ( सामान्येनेति ) ( स्वरूपविशोधनाय पुनः पप्रच्छेति च ) पुनः

❀ भावप्रकाशिका ❀

दित्यत्र विलिखितः, व्याख्यातश्च; तत एवावगन्तव्यः । ( जहातीत्युपदिदेशेति )

१ कठ. १-२-१२ ॥ २ कठ. १-२-१४ ॥ + प्राप्यब्रह्म, इति पा० ॥

धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद" इति । एवं सकलेतरातीतानागतवर्त्तमानसाध्यसाधनसाधकविलक्षणे

* श्रुतप्रकाशिका *

पप्रच्छेति पाठः । उपायोपेयोपेतॄणां त्रयाणामपि सामान्येनोपदिष्टत्वात् स्वरूपशोधनाकाङ्क्षापि सर्वसाधारणी, तत्कथम् ' अन्यत्र धर्मा'दितिमन्त्रेण परमात्ममात्रविषयप्रश्नः ? इति शङ्कायां प्रश्नस्य त्रितयविषयत्वमनुभाषणव्याजेन दर्शयंस्तदनन्तरमन्त्रस्यापि त्रितयविषयत्वमाह ( एवं सकलेतरेति ) कालत्रयसम्बन्धित्वं हि वक्ष्यमाणत्रितयस्याप्यस्ति, तत्कथं विलक्षणत्वमिति शङ्काव्युदासार्थं इतरशब्दः । वर्त्तमानशब्देन कृताकृतशब्दो व्याख्यातः, प्रारब्धमसमाप्तं हि वर्तमानमुच्यते । अन्यत्रेति वैलक्षण्यं विवक्षितम्, धर्मः— उपायः । धर्मादन्यत्र—प्रसिद्धोपायविलक्षण उपाय इत्यर्थः । अधर्मः— धर्मेतरः, उपेयः । अधर्मादन्यत्र—प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः । अस्मादिति बुद्धिस्थस्तत्साधको विवक्षितः, स एव उपेता, स हि प्रसिद्धोपेतृसाधकविलक्षणः, साधकावस्थायामितरफलविरक्तत्वात् फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च । कृताकृतादिति धर्मादीनां विशेषणम्, कृताकृताद्धर्मादेर्विलक्षणं यत् भूताद्भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः । यद्वा धर्मादधर्माच्च अन्यत्र यदित्युपासनप्रश्नः , पुण्यापुण्यरूपसाधनविलक्षणत्वादुपासनस्य । कृताकृताद्भूताद्भव्याच्चान्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टम्. उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च तत एव तस्यापि तन्त्रेण

* भावप्रकाशिका *

पूर्वेणान्वय इति शेषः । ( पुनः पप्रच्छेति पाठ इति ) पुनः पुनः पप्रच्छेतिपाठस्तु न युक्त इति भावः । भाष्ये—मत्वा धीरो हर्षशोकौ जहातीति निर्दिष्टस्य ब्रह्मोपासनस्येतिपाठः । धीरो न शोचतीतिपाठो लेखकदोषात्, तस्यापक्तत्वादिति द्रष्टव्यम् । ननु कृताकृताद्भूताद्भव्याच्चेतत्रितयस्यापि धर्माधर्मादस्मादितिनिर्दिष्टोपायोपेयोपेतृविशेषणत्वे अन्यत्र भूताद्भव्याच्चेत्यन्यत्रपदं व्यर्थं स्यादित्यस्वरसादाह ( यद्वा धर्माधर्माच्चान्यत्रेति ) परैस्तु धर्माधर्मशब्दाभ्यां तत्साध्यफलानि विवक्षितानि, कृताकृतादिति कार्यकारणप्रपञ्चो विवक्षितः । भूतादिति भूतकालमात्र-

**त्रये पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं, तदन्तर्गतञ्च प्राप्तृस्वरूपं, वाचकरूपं चोपायं पुनरपि सामान्येन ख्यापयन् प्रणवं तावदुपदिदेश,**

* श्रुतप्रकाशिका *

प्रश्नः। तदन्तर्गतञ्च प्राप्तृस्वरूपमिति हि वक्ष्यते। (त्रय इति) यत्तच्छब्दौ त्रितयपराविति भावः।— ननु धर्माधर्मसाध्यत्रिकालवर्तिवस्तुविलक्षणपरमात्मविषयोऽयं मन्त्रः किं न स्यात्? उच्यते; धर्मादन्यत्रेत्युक्ते तदसाध्यत्वं न प्रतीयते, न ह्यदृष्टादन्यदृष्टमित्युक्ते सत्यदृष्टासाध्यत्वं दृष्टस्य प्रतीयते। धर्माधर्मादिविलक्षणब्रह्मविषयप्रश्नः स्यादिति चेन्न, प्रयोजनाभावात्। कृताकृताद्भूताद्भव्याच्चान्यत्रेत्यनेन कालपरिच्छिन्नार्थविलक्षणं वस्तु पृष्टं स्यात्, ततश्च धर्माधर्मवैलक्षण्यप्रश्नो विफल एव, धर्माधर्मयोरपि कालपरिच्छिन्नवस्त्वन्तर्गतत्वात्, अतः इतरोपायोपेयोपेतृविलक्षणत्रयप्रश्नपरत्वमुपपन्नम्। (प्रणवं प्रशस्येति) 'सर्वे वेदा' इत्यादिपादत्रयोक्तपरब्रह्मप्रतिपादकतया प्रशस्येत्यर्थः। 'तत्ते पदं सङ्ग्रहेण ब्रवीम्योमिति' इति प्रणवेन ब्रह्मप्रतिपादनं ह्युच्यते। (प्राप्यस्वरूपमिति) पदशब्दः पद्यत इति व्युत्पत्त्या प्राप्यवाचीति भावः। तदन्तर्गतम्— प्रणववाच्यान्तर्गतम्, प्रणववाच्यैकदेशम्. प्रणवैकदेशवाच्यो ह्युपेता जीवः। यद्वा प्राप्ये प्रणववाच्ये परमात्मनि प्रकारतयान्तर्गतमित्यर्थः। परिशुद्धजीवस्य प्राप्यान्तर्भावात् पदशब्दवाच्यान्तर्भूतत्वमितिभावः। (वाचकरूपं चोपायमिति) उपायोपायतया प्रणव-

७ भावप्रकाशिका ७

परिच्छिन्नं परामृश्यते, भव्यादिति भविष्यत्कालमात्रपरिच्छिन्नम्, ततश्च तत्सर्वव्यावृत्तमित्यर्थ इति व्याख्यातम्; तदेतदाशङ्कते (ननु धर्माधर्मसाध्येति) (प्रणवेन ब्रह्मप्रतिपादनं ह्युच्यत इति) ततश्च 'तत्ते पदं सङ्ग्रहेण ब्रवीमि' इत्ययमंशः पदशब्दितब्रह्मप्रतिपादकतया प्रणवप्रशंसापर इति भावः। भाष्ये— सामान्येन ख्यापयन्निति। ओमित्यनेनैव सामान्येन ख्यापयन्नित्यर्थः। (प्रणवैकदेशवाच्यो हीति) तदेकदेशवाच्यस्य तद्वाच्यैकदेशत्वनियमादिति भावः। तच्छब्दस्य प्रणववाच्यपरत्वं क्लिष्टमित्यस्वरसादाह (यद्वा प्राप्ये इति) एतद्ध्येवाक्षरमित्यादि। 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्।

[1]"सर्वे वेदा यत्पदमामनन्ति तपाँसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्" इति । एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह [2]"न जायते म्रियते वा विपश्चित्" इत्यादिना ।

* श्रुतप्रकाशिका *

स्योपायत्वम्. उपायो हि ध्यानम्, वाचकशब्दश्च वाच्यस्मरणोपायः "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्" "ओमित्यात्मानं ध्यायथ" "ओमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति ध्यानोपायत्वं हि प्रणवस्यावगम्यते । तपांसि ज्ञानप्रधाना उपरिभागाः । ननु तत्ते पदं सङ्ग्रहेण ब्रवीमीति प्राप्यस्वरूपपरत्वं हि प्रतीयते, तत्कथं त्रितयख्यापने तात्पर्यम् ? कथं ब्रह्मणो जिज्ञास्यत्वे प्रतिज्ञाते तदनुबन्धिनां जिज्ञास्यत्वसिद्धिः ? तदुपयुक्तत्वादुत्तरत्र निरूप्यमाणत्वाच्च अर्थतः प्रतिज्ञातत्वसिद्धेरिति चेत् ; इहापि ब्रह्मवेदनोपयोगित्वादुत्तरत्र प्रतिपाद्यमानत्वाच्च उपायोपेत्रोरपि प्रतिपाद्यत्वम् । न केवलमुपयोगादिमात्रात्, किन्तु पदशब्दवाच्यान्तर्भावश्च दर्शितः । एतद्ध्येवाक्षरं ब्रह्मेत्यादिवाक्याभिप्रायेणाह (पुनरपि प्रणवं प्रशस्येति) 'न जायते म्रियते वा विपश्चित्' इत्यादिमन्त्रद्वयस्य परमात्मपरत्वानुपपत्तिं मन्वान आह ( प्राप्तुः प्रत्यगात्मन इति ) का पुनरनुपपत्तिः ? उच्यते; इदं मन्त्रद्वयं तावदेकविषयम्, "न हन्यते हन्यमाने शरीरे' इत्येतद्विवरणरूपत्वात् द्वितीयमन्त्रस्य. हन्ता चेदितिमन्त्रश्च जीवविषय एव, लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात्तत्प्रतिषेधानुपपत्तेः । परमात्मा हि प्रत्यक्षागोचरः, कथं तस्मिन् वध्यतादिप्रतिपत्तिः ? 'अहमेनं हन्मि अयं मां हन्तुमागच्छती'ति वध्यघातुक-

* भावप्रकाशिका *

एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् । एतदालम्बलनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' इति वाक्यमभिप्रयन्नित्यर्थः । (इदं मन्त्रद्वयमिति ) 'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव

१ कठ-१-२-१५ | २ कठ-१-२-१५

प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपम् [1]'अणोरणीयान्' इत्यादिना [2]'क इत्था वेद यत्र सः' इत्यन्तेनोपदिशन्मध्ये [3]''नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन'' इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह। [4]''ऋतं पिबन्तौ'' इति चोपास्यस्योपासकेन सहावस्थानात्सूपासतामुक्त्वा '' आत्मानं रथिनं विद्धि'' इत्यादिना [6]'दुर्गं पथस्तत्कवयो वदन्ति' इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय [7]''अशब्दमस्पर्शम्'' इत्यादिनोपसंहृतम्;

* श्रुतप्रकाशिका *

भावाभिमानो हि जीवविषय एव देहिनां भवति। ननु 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते' इतिवत् परमात्मन्यपि हननानिषेध उपपद्यते. सत्यम्, तत्र दहराकाशस्य देहान्तस्स्थित्या शङ्कितविकारादिप्रतिषेध उपपद्ये ; इह तु लोकभ्रान्तिरनूद्य प्रतिषिध्यते '' हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतः''इति। परमात्मनि वध्यघातुकभ्रान्तिर्न कस्यचिदप्यस्ति, अतोऽनुवादनिषेधावनुपपन्नौ ; न जायत इतिमन्त्रश्च तेनैकार्थः, अतो मन्त्रद्वयमपि जीवविषयम्। 'अणोरणीया'नित्यादेरर्थमाह ( प्राप्यस्येति ) ''न जायते म्रियते' इत्यादिना 'अणोरणीया'नित्यादिना च जीवपरयोः स्वरूपे कथिते 'ऋतं पिबन्तौ इति मन्त्रेण तयोः प्रतिपादनवैयर्थ्यशङ्कापरिहारायाह ( सूपासतामुक्त्वेति ) एतद्वाक्यस्योपादानं परकृतव्याख्याननिरासफलकतयेति वक्ष्यामः। ( उपसंहृतमिति )

७ भावप्रकाशिका ७

कश्चित्। अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे। हन्ता

१ कठ–१-२-२० ॥
२ कठ–१-२-२५ ॥
३ कठ–१-२-२३ ॥
४ कठ–१-३-१ ॥
५ कठ. १-३-३ ॥
६ कठ. १-३-१४ ॥
७ कठ १-३ १५ ॥

**अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च, तस्मा-न्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम् ॥ ६ ॥**

* श्रुतप्रकाशिका *

प्रकृतोपसंहारस्यापेक्षितत्वादर्थान्तरपरत्वस्यासङ्गतत्वाच्चेति भावः। सूत्रार्थं निगमयति ( अतस्त्रयाणामिति ) सूत्रार्थं परमप्रकृतार्थेन घटयति ( तस्मान्नेहेति ) ननु त्रयाणामितिपदमग्निजीवपरमात्मपरं किं न स्यात् ? तेषां हि प्रश्नोपन्यासौ दृश्येते "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि" "येयं प्रेते" "अन्यत्र धर्मात्" इति त्रयाणां क्रमेण प्रश्नः "लोकादिमग्निं तमुवाच तस्मै या इष्टकाः" "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा हि मरणं प्राप्य आत्मा भवति गौतम। न जायते म्रियते वा विपश्चित्" इति प्रतिवचनञ्च। न च जीवविषयप्रश्नस्य परमात्मविषयप्रतिवचनवैघट्यम्, ऐक्यस्य विवक्षितत्वादुपपत्तेरिति. उच्यते; अत्रानतिविरोधेऽपि भाष्यकारोक्तार्थ एव युक्ततरः। तथाहि ; जीवस्ता-

* भावप्रकाशिका *

चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते' इति मन्त्रद्वयमित्यर्थः। ( अर्थान्तरपरत्वस्य चेति ) प्रधानपरत्वस्येत्यर्थः। ( हन्त त इदं प्रवक्ष्यामीति ) यद्यपि 'न जायते म्रियते वा विपश्चित्' इति परमात्मविषयप्रतिवचनसन्दर्भानन्तरमेवेदं वाक्यम्, तथापि योग्यतावशात् जीवविषयप्रश्नस्येदं प्रतिवचनमिति न प्रश्नक्रमानुरोधी श्रुतौ प्रतिवचनक्रम इति द्रष्टव्यम्। नन्वन्यत्राधर्मादितिप्रश्नः किं येयं प्रेत इति प्रश्नसमानविषयकः, उत तदधिकविषयकः ?। नाद्यः, तथासति अग्निजीवयोरेव प्रश्नदर्शनेन त्रयाणां प्रश्नाभावादग्निजीवपरमात्मनां त्रयाणामुपन्यासः प्रश्नश्चेति सूत्रविरोधात्। न द्वितीयः, परत्रयानन्तर्भूतस्य प्रश्नानर्हत्वात्, इतरथा प्रधानस्याप्युपन्याससंभवेन अधिकरणविरोधापत्तेरित्याशङ्क्य वस्तुगत्या परमात्मनो जीवाभिन्नतया परत्रयान्तर्भावस्याप्युपपत्तेः जीवपरयोरौपाधिकभेदमादायाग्निजीवपरमात्मनां त्रयाणामिति सूत्रनिर्देशस्याप्युपपत्तेरित्यभिप्रयन्नाह ( न च जीवविषयप्रश्नस्येति ) ( परमात्मविषयतावैघट्यमिति ) परमात्मविषयप्रतिवचनवैघट्यमिति पाठे तु येयं प्रेत इति जीवप्रश्नस्य तं दुर्दर्शमिति परमात्मविषयप्रतिवचनवैघट्यमित्यर्थः। ( अन-

* श्रुतप्रकाशिका *

बदुपेता, परमात्मा चोपेयः, अग्निविद्या च ब्रह्मोपासनाङ्गत्वेनोपायान्तर्भूता, तदन्तर्भावश्च प्राकरणिकवाक्यैर्दर्शितः, अग्नेरपि पृथगेव विवक्षितत्वे अग्निजीवपरमात्मतदुपासनानां चतुर्णां प्रतिपाद्यत्वदर्शनात् त्रयाणामेवेत्यवधारणमयुक्तम्, अतोऽग्नेरप्युपायान्तर्भावविवक्षाऽङ्गीकर्तव्या, तथासति उपायोपेयोपेतॄणामेव व्याख्यानं युक्ततरम्। उपासनोपदेशश्चात्र स्फुटतरमुपलभ्यते "नायमात्मा प्रवचनेन लभ्यः; "नाविरतो दुश्चरितात्' इत्यादिना केवलश्रवणादिविलक्षणः परमात्मवरणीयताहेतुभूतः प्रकृष्टज्ञानविशेषो हि उपायतयाऽभिधीयते। अवधारणं प्राधान्यव्यावृत्तिपरम्, उपायस्योपेयप्राप्त्यर्थतया परमात्मन्यन्तर्भावात् त्रित्वाविरोध इति चेत्तर्हि त्रयाणामुपन्यासः प्रधानस्याप्रतिपाद्यत्वे हेतुरेव न भवितुमर्हति, अर्थान्तरान्तर्भावसहत्वात्। प्रश्नोपन्याससमुच्चयस्त्रयाणामेव, न ह्युपायस्य प्रश्नो दृश्यते, अतोऽवधारणोपपत्तिरिति चेन्न; अस्मिन् प्रकरणे प्रश्नोपन्याससमुच्चयस्य प्रतिपाद्यत्वे हेतुत्वाभावाच्चदभावेन प्रतिपाद्यत्वाभावस्य दुर्वचत्वात्। उपायो ह्यपृष्ट एवोपन्यस्तः, सोऽप्यर्थतः पृष्ट इति प्रश्नोपन्याससमुच्चयोऽस्मिन् प्रकरणे प्रतिपाद्यत्वे हेतुरिति चेत्, तर्हि चतुर्णामिति वक्तव्यम्, शब्दतोऽर्थतश्च चतुर्णां प्रश्नोपन्याससम्भवात्। यदि कण्ठोक्त्यैव प्रश्नोपन्याससमुच्चयो विवक्षितः, तस्य प्रतिपाद्यत्वे प्रयोजकत्वाभावस्य प्रतिपाद्यमानोपासन एव दृष्टतया समुच्चयाभावस्याप्रतिपाद्यत्वे हेतुत्वायोगात्। किञ्च येयं प्रेत इत्यस्य देहातिरिक्तजीवसद्भावासद्भावप्रश्नविषयत्वं चानुपपन्नम्, देहातिरिक्तात्मसद्भावनिश्चयरहितस्य पितृसौमनस्याग्निविद्यावरणयोरनुपपत्तेः। अग्निप्रश्नवाक्य एव 'स्वर्गलोका अमृतत्वं भजन्ते' इति देहातिरिक्तात्मज्ञानवत्त्वमवगम्यते। तत्प्रतिवचन एव "त्रिकर्मकृत्तरति जन्ममृत्यू' 'करोति तच्चेन पुनर्न जायते" इत्यपवर्गरूपपुरुषार्थोपयोगित्वमग्निविद्याया अवगतम्, कुतो देहातिरिक्तात्मसन्देहसम्भवः? तस्मादपवर्गप्रकारविशेष एव सन्देहसम्भवः, अतस्तत्प्रकारविशेषप्रश्नपरत्वं येयं प्रेत इत्यादिवाक्यस्य युक्तम्, यदीदं देहातिरिक्तात्मसद्भावासद्भावप्रश्नपरत्वम् अस्य

* भावप्रकाशिका *

तिविरोधेपीति ) अग्निजीवपराणां त्रित्वोपन्यासेन जीवपरयोर्भेदस्यैव सौत्रत्वप्रतिपादनेनासदनुकूलत्वादिति भावः। ( प्रतिपाद्यत्वाभावस्येति ) प्रधानस्य त्रिगुणद्रव्यस्येत्यर्थः। प्रश्नोपन्याससमुच्चयस्य प्रतिपाद्यत्वे हेतुत्वाभावमुपपादयति

* श्रुतप्रकाशिका *

"तं दुर्दर्शम्' इति परमात्मविषयप्रतिवचनं च न घटते। जीवपरयोरैक्यज्ञापनार्थं तथा प्रतिवचनमिति चेन्न, परमात्मविषयप्रतिवचन एव "ऋतं पिबन्तौ सुकृतस्य लोके" इति जीवपरयोर्भेदप्रतिपादनेन तद्विरुद्धार्थाभिप्रायकल्पनानुपपत्तेः। न च भेदानुवादः सर्वज्ञताद्याकारेण जीववैलक्षण्यस्य लौकिकप्रमाणागोचरत्वात् विहितस्य निषेधायोगाच्च। न च बुद्धिजीवपरोऽयं मन्त्रः, गुहां प्रविष्टावित्यत्रास्य मन्त्रस्य बुद्धिजीवपरत्वं पूर्वपक्षीकृत्य जीवपरमात्मपरत्वस्य भवद्भिरेवास्य गौर्द्वितीय इति न्यायेन सिद्धान्तितत्वात् "यदेवेह तदमुत्र यदमुत्र तदन्विह' इति हृदयायतने उपास्यतया स्थितस्य परमपुरुषस्यादित्यमण्डलान्तर्वर्तित्वमुच्यत इति न जीवपरयोरैक्यप्रतीतिः। 'मृत्योस्स मृत्युमाप्नोती'तिवाक्यमुपसंहारगतमेतदपेक्षया दुर्बलं

* भावप्रकाशिका *

( उपायो हीति ) ( हृदयायतने उपास्यतया स्थितस्येति ) ननु पूर्वत्र हृदयादित्यवर्तिनोरप्रकृतत्वात्कथमिदमुच्यत इति चेदुच्यते 'अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः। दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः। एतद्वै तत्।" इति मन्त्रेण हृदयायतनस्थस्य च 'यतश्चोदेति सूर्योऽस्तं गच्छति यत्र च। तं देवास्सर्वे अर्पिता तदु नात्येति कश्चन। एतद्वै तत्' इति तदनन्तरमन्त्रेणादित्यमण्डलस्थस्यापि पूर्वप्रकृतत्वात्। तथाहि; अरण्योर्निहितोऽग्निरिव गर्भिणीभिस्सुभृतः— अन्नपानादिभिः पोषितो गर्भ इव च, दिवे दिवे अहन्यहनि, जागृवद्भिः जाग्रद्भिरप्रमत्तैर्हविष्मद्भिराराधनोपकरणवद्भिर्मनुष्यैरीड्यः स्तुत्यः ध्येयः, अग्निः— अग्रनयनादियोगात्। एतद्वै तत्— एवम्भूतो हृदयायतनस्थः, तदेव अन्यत्राधर्मादित्यादिना त्वया पृष्टमेवेत्यर्थः। अतोऽस्मिन्मन्त्रे हृदयायतने उपास्यः प्रस्तुतः। यतश्चोदेति सूर्यः— सूर्योत्पत्तिलयाधारभूतः। तं देवास्सर्वे अर्पिताः— सर्वे देवास्तदुपासिन इत्यर्थः। अतश्च सूर्यमण्डलाद्युपादानतया तदात्मकं तदन्तर्वर्तिदेवोपास्यं प्रस्तुत्य तस्याप्येतद्वै तदिति ब्रह्माभेदे बोधिते तदनन्तरं हृदयायतने मनुष्यैरुपास्यस्यादित्यमण्डलान्तर्वर्तिदेवोपास्यस्य चायतनभेदेन भिन्नत्वात्कथमेतद्वैतदिति एकेन ब्रह्मणा अभेदो बोध्यत इति शङ्का व्यावर्त्यते— तदेवे हेत्यादिना। 'यदमुत्र तदेवेह, मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यती'त्यादिना, अतो नाप्रसक्तनिषेधत्वशङ्कावकाश

* श्रुतप्रकाशिका *

भेदसामान्यनिषेधरूपत्वाद्विहितभेदविशेषव्यतिरिक्तविषयञ्च, अतः श्रुतभेदविरुद्धाभिप्रायकल्पनायोगात् प्रतिवचनवैघट्यमेव । किञ्च येयं प्रेत इति प्रथमखण्डस्थं प्रश्नं प्रति प्रश्नान्तरव्यवहितस्य पञ्चमखण्डस्थस्य 'हन्त त इदं प्रवक्ष्यामि इतिवाक्यस्य प्रतिवचनत्वं चायुक्तम् । अर्थक्रमः पाठक्रमाद्बलीयान् इति तेन तद्बाध इति चेन्न, मध्ये जीवविषयवाक्यस्य सद्भावात्. तच्च दर्शितम् । किञ्च 'यन्मयञ्च जगद्ब्रह्मन्' इत्यादाविव यदा प्रतिवचनाव्यवहिताः प्रश्नाः प्रश्नाव्यवहितानि च प्रतिवचनानि स्युः तदा क्रमकोप उपपद्यते, को देवदत्तः? दण्डी, को यज्ञदत्तः? कुण्डली, को विष्णुमित्रः? कमण्डलुमानितिवदेकैकप्रश्नान्तरं तत्तत्प्रतिवचनदर्शनाद्यज्ञदत्तप्रश्नोत्तरस्य देवदत्तप्रश्नोत्तरत्वकल्पनवत् क्रमकोपकल्पनमत्यन्तानुपपन्नम्, येयं प्रेत इति च न जीवसद्भावासद्भावमात्रप्रश्न इत्युक्तम्, अतो 'येयं प्रेते' इति श्लोकः शब्दतोऽर्थतश्च मोक्षानुबन्धितया ज्ञातव्यार्थत्रयविषयः, तथा च सति 'तं दुर्दर्श'मित्यादिप्रतिवचनमतीव घटते, 'अन्यत्र धर्मा'दिति पुनः प्रश्नाकाङ्क्षा तस्यार्थश्च दर्शितौ, अर्थत्रयस्य चैकश्लोकेन पृष्टत्वस्य विवक्षितत्वात्प्रतिवचनाच्च त्रयाणामेवेत्यवधारणं च युक्तम्; अत एव न जायत इति जीवविषयवाक्यस्य 'अणोरणीया'निति परविषयवाक्यस्य नायमात्मेत्युपायविषयवाक्यस्य च प्रतिवचनत्वं सुघटितम्, प्रश्नप्रतिवचनान्तराव्यवहितत्वं च सिध्यति, एकप्रश्नेनैवार्थत्रयस्य पृष्टत्वे सूत्रस्थप्रश्नोपन्यासशब्दगतैकवचनस्वारस्यं च भवति, न ह्युपन्यासाः प्रश्नाश्चेत्युक्तम्. यतो 'येयं प्रेत' इति प्रश्नोऽर्थत्रयविषयः, अत एवेह प्रशंसाप्रलोभनविद्याऽविद्याविभागकथनादिकमञ्जसोपपद्यते, अतो यथोक्त एव सूत्रार्थः ॥

❀ भावप्रकाशिका ❀

इति ध्येयम् । (एतदपेक्षया दुर्बलमिति) ऋतं पिबन्ताविति भेदश्रुत्यपेक्षया दुर्बलमित्यर्थः । (तच्च दर्शितमिति) 'अध्यात्मयोगाधिगमेन देवम्' न जायते म्रियते वा विपश्चित्" इत्यादिकमित्यर्थः । (प्रतिवचनाव्यवहिता इति) प्रतिवचनैरव्यवहिताः अनन्तरिता इत्यर्थः । एवं प्रश्नाव्यवहितानित्यत्रापि । नन्वस्मिन् प्रकरणे उपायोपेयोपेतृव्यतिरिक्ताग्नेरपि पृष्टतया त्रयाणामेवेत्यवधारणं भवन्मतेऽप्ययुक्तम्, न चाग्निरप्युपायकोटिनिविष्ट इति वाच्यम्; ज्ञानैकसाध्यत्वान्मुक्तेरित्याशङ्क्याह (अर्थत्रयस्य चेति) ॥

महद्वच्च ॥ ७ ॥

यथा "बुद्धेरात्मा महान् परः" इत्यत्रात्मशब्द-सामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते; एव-मव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥

चमसवदविशेषात् ॥ ८ ॥

२ अधिकरणम्　अत्रापि तन्त्रसिद्धप्रक्रिया निरस्यते, न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम्, श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात् ।

---

* श्रुतप्रकाशिका *

महद्वच्च, तन्त्रसिद्धमहत्तत्त्वाग्रहणे सूत्राभिप्रेतं हेतुमाह "आत्म—शब्दसामाना-धिकरण्यादिति ॥　　　॥ आनुमानिकाधिकरणम् समाप्तम् ॥

चमसवदविशेषात् ॥ कार्यशरीरवाचिपदस्य रूपके श्रवणाचदव्यक्तशब्देनोच्यत इत्युक्तम्, अत्र तु कार्यशरीरवाचिशब्दाश्रवणात् कारणम् प्रधानमेवोच्यत इति शङ्कया सङ्गतिः, व्याख्यात्रन्तरैर्गौणवृत्त्या तेजोऽबन्नपरत्वेन व्याख्यातम्, किमिदं वाक्यं प्रधानपरम् ? उत तेजोऽबन्नपरमिति विचारश्च कृतः. तद्दूषयितुं किं श्रुत्यन्तरस्वार्थमेवं व्याख्यातम् ? उत स्ववाक्यस्वारस्यार्थमिति विकल्पमभिप्रेत्य स्ववाक्यस्वारस्याभावमुत्तरत्र वक्ष्यन् प्रथमं प्रधानस्य प्रामाणिकतया तन्नि-रासे श्रुत्यन्तरास्वारस्यज्ञापनाय प्रधानविषयं वाक्यजातमुदाहर्तुमाह (अत्रापीति)

* भावप्रकाशिका *

( कारणं प्रधानमेवेति ) स्वतन्त्रप्रधानमेवोच्यत इत्यर्थः । ( तेजोबन्नपर-त्वेन व्याख्यातमिति ) ननु वाचस्पतिना किं स्वतन्त्रं प्रधानमनेन मन्त्रवर्णेन प्रतिपाद्यताम्, उत परमेश्वरी मायाशक्तिस्तेजोबन्नव्याक्रियाकारणमुच्यताम् ? इत्येवं सिद्धान्ते मूलप्रकृतिपरत्वमेव प्रदर्शितम्. न तु तेजोबन्नात्मकावान्तरप्रकृति-परत्वमिति चेत् . सत्यमुक्तं वाचस्पतिना, तथापि वचनस्य ज्योतिरुपक्रमादिति-

यथा आथर्वणिका अधीयते– "विकारजननीमज्ञा-मष्टरूपामजां ध्रुवाम्। ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्। गौरनाद्यन्तवती सा जनित्री भूतभाविनी। सितासिता च रक्ता च सर्वकामदुघा विभोः। पिब-न्त्येनामविषमामविज्ञाताः कुमारकाः। एकस्तु पिबते देवस्स्वच्छन्दोऽत्र वशानुगाम्। ध्यानक्रियाभ्यां भगवान्

* श्रुतप्रकाशिका *

(विकारजननीमित्यादि) अष्टरूपत्वम् 'भूमिराप' इत्याद्युक्तप्रकारेण अजाम्–उत्पत्तिर-हिताम् ध्रुवां– नाशरहितां. ध्यायते परमात्मना सङ्कल्परूपज्ञानेन ज्ञायते. अध्यासिता अधिष्ठिता. तन्यते– विस्तार्यते, स्थूलत्वावस्थं क्रियते. समष्टिभूतरूपेण क्रियते, प्रेर्यते– व्यष्टिसृष्ट्यर्थं प्रेर्यते। पुरुषार्थम्– पुरुषाणामर्थनीयं भोग्यभोगोपकरणभोग-स्थानरूपं जगत्सूयते, (गौरित्यादि) जनित्री भूतभाविनीति समष्टिव्यष्टिसृष्टि-रुच्यते, सितासिता च. रक्ता च गौण्या वृत्त्या सत्त्वरजस्तमोमयी। यद्वा तेजो-ऽबन्नद्वारा सितासिता रक्ता. विभोः– ईश्वरस्य. सर्वकामदुघा– लीलारसदोग्ध्रीम्– अविषमां भोक्तृकर्मानुगुणपरिणामित्वादपक्षपातिनीम्. अविज्ञाताः–स्वात्मभिर्देहेभ्यो विविच्यापरिज्ञाताः (एकस्त्विति) कर्मवश्यबहुभोक्तृव्यावृत्त्यर्थमेकः स्वच्छन्द इत्युक्तम् ध्यानक्रियाभ्याम्– सङ्कल्पसर्गादिव्यापाराभ्याम्. ऐक्षत– असृजतेति द्वयमपि

* भावप्रकाशिका *

सूत्रतद्भाष्याभ्यां तेजोबन्नानां जननश्रवणात् कथमजात्वमिति कल्पनोप-देशादितिसूत्रावतारिकाभाष्येण च विरुद्धत्वात्तदनादृतम्। यदि हि मूल-प्रकृतिर्मन्त्रवर्णप्रतिपाद्यत्वेनाभिमता स्यात् तदा तस्य जन्मरहिततया कथम-जात्वमित्याक्षेपस्य वा कल्पनोपदेशादितिच्छागत्वकल्पनेन परिहारस्य वा अस-म्भवादिति ध्येयम्। (गौण्या वृत्त्या सत्त्वरजस्तमोमयीति) रक्तं कुसुम्भादि, रञ्जयतीति रक्तशब्देन रज उच्यते। एवं प्रसन्नं सलिलं शुक्लं सत्त्व-मपि प्रसन्नमिति प्रसन्नत्वसाधर्म्यात्सितशब्देन सत्त्वमुच्यते। एवमावारक-

भुङ्क्तेऽसौ प्रसभं विभुः । सर्वसाधारणीं दोग्ध्रीं पीड्यमानान्तु यज्वभिः" । "चतुर्विंशतिसङ्ख्याकमव्यक्तं व्यक्तमुच्यते" इति । अत्र प्रकृत्यादीनां स्वरूपमभिहितम् । यदात्मकाश्चैते प्रकृत्यादयः, स परमपुरुषोऽपि "तं षड्विंशकमित्याहुः । सप्तविंशमथापरे । पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदु"रिति

* श्रुतप्रकाशिका *

हि श्रूयते, (पीड्यमानान्तु यज्वभिरिति) वत्सा हि मातरं क्षीरक्षरणार्थं पीडयित्वा भुञ्जते तद्वत्कर्मवश्यैरात्मभिर्भोक्तव्यफलानुरूपं परिणाम्यमानामित्यर्थः। (अत्रेति) प्रकृत्यादीनां प्रकृतिपुरुषमहदादीनाम्– स्वरूपमभिहितम्। एषु वाक्येषु ईश्वरप्रतिपादनं प्रधानादीनामीश्वरतादधीन्यविशिष्टत्वपरमिति भावः। एवं ब्रह्मात्मकप्रधानपरवाक्यान्युक्तानि । अथ तदन्तर्यामिभगवत्प्रतिपादकं वाक्यं दर्शयितुमाह– (यदात्मका इति) षड्विंशकत्वं कालस्य विशेषणत्वेन प्रकृतितद्विकारेष्वन्तर्भावात्, सप्तविंशकत्वं कालस्य तदन्तर्भावविवक्षया, पञ्चविंशकेष्वेव लब्धैश्वर्यः कश्चिदुक्तः पञ्चविंशकस्तुत्यर्थमित्यन्यथासिद्धिरीश्वरप्रतिपादनस्य

* भावप्रकाशिका *

मन्धकारं नीलं तमोगुणश्चावारक इति आवारकत्वसाधर्म्यात्तमोपि नीलादिशब्देनोच्यते इति भावः। परिणम्यमानमितिपाठः । 'णिचि मितां ह्रस्व' इति ह्रस्वविधानात्, यद्वा 'मितां ह्रस्व' इत्यत्र वेत्यनुवृत्तेर्वा परिणम्यमानमित्यस्य साधुत्वं द्रष्टव्यम् । प्रकृत्यादीनामिति व्याख्येयं पदम् । नन्वत्र प्रकृत्यादीनां स्वरूपमभिहितमिति कथमुच्यते, 'षड्विंशकमित्याहु' रित्यादाविवात्रापि 'एकस्तु पिबते देवः स्वच्छन्दोत्र वशानुगाम्' इतीश्वरस्यापि प्रतिपादनादित्याशङ्क्याह (एषु वाक्येषु ईश्वरप्रतिपादनमिति) ततश्च प्रकृत्यादीनां स्वरूपमभिहितमिति भाष्यस्य ब्रह्मात्मकस्वरूपमभिहितमित्यर्थ इति भावः। (तदन्तर्यामिभगवत्प्रतिपादकवाक्यमिति) 'स्तूयते मन्त्रसंस्कृतैरथर्वविहितैर्विभु' रित्युत्तरखण्डे विभुशब्देन व्यापकं नियन्तारं संस्तुत्य तं षड्विंशकमित्यादि-

प्रतिपाद्यते; अपरे चाथर्वणिकाः "अष्टौ प्रकृतयः षोडश विकारा" इत्यधीयते; श्वेताश्वतराश्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति "संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः। अनीशश्चाऽन्यो बध्यते भोक्तृभावात्। ज्ञात्वा देवं मुच्यते सर्वपाशैः" "ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता। अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता। त्रयं यदा विन्दते ब्रह्म चैतत्" 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्ति"रिति। तथा "छन्दांसि यज्ञाः क्रतवो व्रतानि। भूतं भव्यं यच्च देवा वदन्ति" "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः "मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्। तस्यावयव-

* श्रुतप्रकाशिका *

वक्तुमशक्या, सङ्ख्यातः पृथङ्निर्देशादित्यभिप्रायः प्रकृतेः प्रामाणिकत्वमात्रदर्शनार्थमुक्तम्– (अष्टौ प्रकृततय इति) अत्रापि वाक्यान्तरैकार्थ्यात् ब्रह्मात्मकत्वं सिद्धमिति भावः। एतत् त्रयं यदा विन्दते तदा ब्रह्म भवति मुक्तो भवतीत्यर्थः। अभिध्यानम्– आरम्भनसंशीलनं, योजनं योगः तत्व-

৬ भावप्रकाशिका ৬

प्रतिपादनात् षड्विंशकस्यात्मत्वं सिद्धमिति भावः। 'प्रकृतिं पुरुषं चैवे'त्यादि गीतायां त्रयोदशाध्याये 'सत्त्वं रजस्तम' इति, चतुर्थाध्याये 'सर्वभूतानि कौन्तेये'त्यादि नवमे, भाष्ये सिद्धान्ते च, 'चमसवदविशेषा'दितिसूत्रोपादानानन्तरं 'नात्र तन्त्रसिद्धा प्रकृतिरभिधीयत' इति वाक्यं केषुचित्कोशेषु दृश्यते,

भूतैस्तु व्याप्तं सर्वमिदं जगत्" इति । तथोत्तरत्राऽपि "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुरि"ति । स्मृतिरपि "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् । कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषस्सुखदुःखानाम्भोक्तृत्वे हेतुरुच्यते ॥ पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु । सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो ! देहे देहिनमव्ययम् । तथा "सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् । प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृ-

---

* श्रुतप्रकाशिका *

भावः— तत्त्वाविर्भावः साक्षात्कारः, अवयवभूतैरंशभूतैश्शरीरभूतैरित्यर्थः । स्मृतिं दर्शयति— (स्मृतिरपीति) एवं प्रधानस्य प्रामाणिकत्वा-

* भावप्रकाशिका *

तदहृष्टश्रुतप्रकाशिकैः पण्डितम्मन्यैः प्रक्षिप्तम् । उपक्रमस्थं प्रतिज्ञावाक्यमनुषज्यत इति मत्वेति टीकोक्तेरिति द्रष्टव्यम्; वस्तुतस्तु, नात्र तन्त्रसिद्धा प्रकृतिरभिधीयत इत्येव प्रतिज्ञोचिता, न तु प्रकृतिर्निरस्यत इति, सूत्रावतारिकायां निरस्यत इत्युक्तिसम्भवेऽपि सूत्रार्थकथनदशायां निरस्यत इति प्रतिज्ञाया अयुक्तत्वान्नानुषङ्गोऽपेक्षितः, अतो यथा भाष्यमेव प्रतीमः, भाष्ये 'यथार्वाग्बिलश्चमस ऊर्द्ध्वबुध्न' इति बृहदारण्यके चतुर्थपाठके शिशुब्राह्मणे— 'तदेषश्लोको भवति' 'अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नस्तस्मिन् यशो निहितं यशोरूपम् तस्यासत ऋषयः

तेर्वशात् । मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय ! जगद्धिपरिवर्त्तते" इति । तस्मादब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते, श्वेताश्वतरोपनिषदि श्रूयते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनाम्भुक्तभोगामजोऽन्यः" इति, तत्र सन्देहः किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते ? उत ब्रह्मात्मिका ?

* श्रुतप्रकाशिका *

दतत्परत्वेन व्याख्यानमनुपपन्नम् इत्युक्तन्ततः किमित्यत्राह ( तस्मादिति ) प्रकृत्यादयइत्यादिशब्देन महदादिरभिप्रेतः । विषयादिकं दर्शयति ( श्वेतेति ) प्रकृतेरेव कर्तृत्वप्रतीतिजनकवाक्यजातं विषयः . अचेतनत्वसृजमानपदस्वारस्याभ्यां संशयः, श्वेताश्वतरे 'अजामेका'मितिमन्त्रे अजाशब्दो यौगिकः किमब्रह्मात्मकप्रकृतिपर ? उत ब्रह्मात्मकप्रकृतिपर ? इति विचारः. अजाशब्दसृजमानशब्दौ किमजायाः स्वातन्त्र्येण स्रष्टृत्वमवगमयतः ? नेति । तैत्तिरीयके अजामेकामितिमन्त्रे प्रतिपन्नाया अजायाः किं ज्योतिरुपक्रमत्वामस्ति. नेति ? किमजात्वज्योतिरुपक्रमात्वे विरुध्येते नेति । ? यदा विरुध्येते तदा तैत्तिरीयकमन्त्रसिद्धाया अजाया ज्योतिरुपक्रमात्वाभावेन तदैकार्थ्यादजांसृजमानामितिपदयोः स्वातन्त्र्येण स्रष्टृत्वावगमकत्वात् श्वेताश्वतरमन्त्रस्याजाशब्दो ब्रह्मात्मकत्वशून्यप्रकृतिपरः । यदा न विरुध्येते तदा तैत्तिरीयकमन्त्र-

छ भावप्रकाशिका छ

सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति, अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमसः ऊर्द्ध्वबुध्नः तस्मिन् यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्ध्यष्टमी ब्रह्मणा संवित्ता, इति श्रूयते; तत्र चमसमन्त्रपर्यालोचनायां न विशेषप्रतिपत्तिः, वाक्यशेषे तु कण्ठा-

इति। किं युक्तं? केवलेति, कुतः अजामेकामित्यस्याः प्रकृतेरकार्य्यत्वश्रवणात् 'बह्वीः प्रजाःसृजमानां सरूपाः' इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्चेति—

एवम्प्राप्तेऽभिधीयते— चमसवदविशेषात् । न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात् तन्त्रासिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः, चमसवत्. यथा "अर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इत्यस्मिन्मन्त्रे चमसस्य

---

* श्रुतप्रकाशिका *

सिद्धाया अजाया ज्योतिरुपक्रमात्वेन तदैकार्थ्यात् अजां सृजमानामितिपदयोः स्वतन्त्रस्रष्टृत्वावगमकत्वाभावात् श्वेताश्वतरमन्त्रस्थोऽजाशब्दोऽपि ब्रह्मात्मकप्रधानपर इति (अजामिति) ब्रह्मत्माकत्वपक्षे अजात्वं न सम्भवति तत्कार्यत्वाभ्युपगमादित्यर्थः, (स्वातन्त्र्येणेति) सृजमानामिति कर्त्तरि शानच्, स्वतन्त्रः कर्त्ता. अतो न ब्रह्मपरतन्त्रत्वमित्यर्थः । (एवं प्राप्त इति) अत्राऽपि कापिलतन्त्रसिद्धप्रक्रिया निरस्यत इत्युपक्रमस्थं प्रतिज्ञावाक्यमनुषज्यत इति मत्वा हेतुमाह (न जायत इतीति) अथवा न जायते इतीत्यादिना हेतुपदं विवृण्वन् चमसवदिति सौत्रं पदं प्रतिज्ञापरम्मन्यमानः तेन हेतुपदस्यान्वयं दर्शयति (चमसवदिति) विशेषाप्रतीतेरित्यन्तं हेतुपदव्याख्यानम्, अवयवशक्त्याऽजात्वमात्रप्रतिपादनेन विशेषाप्रतीतेश्चमसवद्भवति. वाक्यान्तरमन्तरेण विशेषतो निर्णेतुमशक्या भवतीत्यर्थः । तदेव विवृणोति (यथाऽर्वागिति) अस्य यथाशब्दस्य तथाऽत्रापीतिभाष्येणाऽन्वयः, चमसशब्दार्थं विशदयति

* भावप्रकाशिका *

दुपरिभागे शिरसि चमसत्वकल्पना, तद्गतमुखविवरे बिलत्वकल्पना, तदूर्ध्वभागे मूर्ध्नावयवे स्थालमूलभागरूपबुध्नत्वकल्पना, तस्मिन् विश्रमरतया स्थितेषु प्राणादिवायुषु यशत्वकल्पना, तस्मिन् परितः स्थितेषु यशत्वकल्पना, तस्मिन् परितः स्थितेषु श्रोत्रादिषु इन्द्रियेषु ऋषित्वकल्पना, इत्यर्थावगतिरिति भावः । भाष्ये

**भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मात्रेण चमसविशेषप्रतीतिः , यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थविशेषनिश्चयायोगात् ;**

* श्रुतप्रकाशिका *

( भक्षणसाधनत्वमात्रमिति ) चम्यतेऽनेनेति चमसशब्दव्युत्पत्तिरिति भावः । मात्रशब्देन विशेषव्यावृत्तिः, इतिशब्दो हेतुपरः. विशेषप्रतीत्यभावादित्यर्थः, विशेषप्रतीत्यभावे चमसः साधर्म्यदृष्टान्ततया व्याख्यातः चमसवदित्यनेनार्थसिद्धं दृष्टान्तदार्ष्टान्तिकसाधारणाकारं हेतुं दृष्टान्तोपपादकत्वेन दर्शयति ( यौगिकशब्दानामिति ) साधारणमवयवार्थं बोधयतां यौगिकशब्दानामित्यभिप्रायः , तेनासाधारणावयवार्थबोधकबलभिदादिशब्दव्यावृत्तिः , अर्थः वस्तुसामर्थ्यम् . आदिशब्दः स्ववाक्यस्थविशेषशब्दादिपरः , विशेषनिश्चयायोगादित्यस्य पूर्ववाक्येनान्वयः , अवयवशक्तेस्साधनमात्रप्रत्यायकत्वादर्थप्रकरणादिभिर्विना विशेषनिश्चयायोगाच्चमसशब्देन यथा न चमसविशेषप्रतीतिरित्यर्थः । ननु . यथा चमसविशेषो वाक्यशेषावसेयः तद्वदजाविशेषोऽपि हेत्वन्तरेण निश्चेतुं शक्यत इति शङ्कायां परपक्षे तथा निश्चयस्याशक्यतां

* भावप्रकाशिका *

साधनत्वमात्रं चमसशब्देन प्रतीयत इति. इदमुपलक्षणम्. अर्वाग्बिलोर्ध्वबुध्नशब्दाभ्यां अर्वाग्बिलोर्ध्वबुध्नत्वेऽपि प्रतीयत इत्यपि द्रष्टव्यम् । नचार्वाग्बिलोर्ध्वबुध्नत्वरूपविशेषणमहिम्ना विशेषप्रतीतिः, तयोर्गुहादिसाधारण्यात् ( साधर्म्यदृष्टान्ततया व्याख्यात इति ) तत्र 'यथेदं तच्छिरः' इत्यारभ्य वैधर्म्यदृष्टान्तमिति भाष्याभिमतमिति भावः । भाष्ये यौगिकशब्दानामिति चमसेषु समाख्यानादित्यधिकरणे यौगिकस्योक्तेरिति भावः । इदमुपलक्षणम्. प्रकृते चमसशब्दस्य प्रयोगनैयत्येन पात्रविशेषरूढत्वेऽपि प्रसिद्धस्य चमसस्य ऊर्ध्वबिलत्वेन तिर्यक् बुध्नत्वेन च तद्विलक्षणत्वे अर्वाग्बिलत्वोर्ध्वबुध्नत्वे कथिते कोशावीदृशश्चमस इति विशेषजिज्ञासायाः सत्वेन विशेषनिश्चयाभावात्, अत एव 'तस्मिन् यशो निहितं विश्वरूपं तस्यासत ऋषयः सप्त तीरे इत्यादौ यश आदिशब्दानां रूढत्वेऽपि तादृग्भूतयशःपदार्थादिजिज्ञासाया दर्शनादिति द्रष्टव्यम् ( बलभिदादीति )

तत्र "यथेदन्तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्व-
बुध्न" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः,
८ तथा अत्राऽप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या ;
न चाऽत्र तन्त्रसिद्धाजाग्रहणहेतवोऽर्थप्रकरणादयो
दृश्यन्ते, नचास्याः स्वातन्त्र्येण स्रष्टृत्वं प्रती-
यते, "बह्वीः प्रजाः सृजमानाम्" इति स्रष्टृत्वमात्र-
प्रतीतिः, अतोऽनेन मन्त्रेण नाब्रह्मात्मिकाजाऽभि-
धीयते ॥ ८ ॥

* श्रुतप्रकाशिका *

दर्शयितुं स्वपक्षे विशेषनिश्चयप्रकारमाह ( तत्र यथेदं तच्छिर इति ) यथेति-श्रुतिपदं दृष्टान्ते दर्शितस्य न्यायस्य दार्ष्टान्तिकेऽप्यवर्जनीयत्वमाह— ( तथा अत्राऽपीति ) यथा 'अर्वाग्बिलश्चमस' इति मन्त्रे न चमसविशेषप्रतीतिः, तत्र विशेषनिश्चयश्च निश्चायकवाक्यान्तराधीनः, तथाऽत्रापि निश्चायकान्तरेणाऽजाविशेषनिश्चयः कार्य इत्यर्थः । ततः किमित्यत्राह ( न चात्रेति ) सृजमानामिति स्वातन्त्र्येण स्रष्टृत्वप्रतीतिर्विशेषनिश्चायिकेत्यत्राह ( न चास्या इति ) स्वातन्त्र्येण— ईश्वराधिष्ठित्वमन्तरेणेत्यर्थः, ( स्रष्टृत्वमात्रप्रतीतेरिति ) स्वव्यापाराश्रयत्वलक्षणं स्वातन्त्र्यमेव प्रत्ययवाच्यम्. न त्वपरप्रेर्यत्वरूपमितिमात्र—शब्दाभिप्रायः, रथो गच्छतीत्यत्र कर्तृप्रत्ययो हि स्वव्यापाराश्रयत्वरूप-स्वातन्त्र्यं रथस्यावगमयति, न त्वपरप्रेर्यत्वम्, अपरप्रेर्यत्वलक्षणस्वातन्त्र्यप्रती-त्यभ्युपगमेऽपि तादृशस्वातन्त्र्यलक्षणं कर्तृत्वं किं ? प्रकृत्याश्रयम् ? उताजा—

* भावप्रकाशिका *

बलभेदकर्तृत्वस्य इन्द्रासाधारणत्वादिति भावः, यथेति नः श्रुतिपदमिति पाठः, स च श्रुतिभ्रान्तिनिवारणार्थः, ततश्च यथात्रापीत्यत्र तथाशब्दप्रतिद्वन्द्वी यथा-शब्दः । नचास्य यथाशब्दस्य तथात्रापीतिभाष्येणान्वय इति पूर्वमेवान्वयो दर्शित इति वाच्यम् ; यथाशब्दद्वयपरामृष्टस्य एकेन तथाशब्देन परामर्शसम्भवे-नादोषात्, श्रुतौ यथाशब्दादर्शनाच्चेति द्रष्टव्यम् ( स्वातन्त्र्यमेव प्रत्ययवाच्य-

ब्रह्मात्मकाजाग्रहण एव विशेषतो हेतुरस्तीत्याह—

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

तुशब्दोऽवधारणार्थः, ज्योतिरुपक्रमैवैषाऽजा, ज्योतिर्ब्रह्म "तन्देवा ज्योतिषां ज्योतिः" "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिश्रुतिप्रसिद्धेः । ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः, तथाऽह्यधीयत एके—हीति हेतौ, यस्मादस्या अजाया ब्रह्मकारणकत्वमेके-शाखिनस्तैत्तिरीया अधीयते— "अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः" इति हृदयगुहायामुपास्यत्वेन सन्निहितं ब्रह्माभिधाय "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्यादिना सर्वेषां लोकानां ब्रह्मादीनाञ्च तत उत्पत्तिमभिधाय सर्वकारणीभूताऽजा तत उत्पन्नाऽभिधीयते "अ-

---

* श्रुतप्रकाशिका *

शब्दवाच्यप्रकृतिशरीरकब्रह्माश्रयम् ? इति विशये प्रकृतिमात्राश्रयमिति निश्चायकाभावश्च मात्रशब्दाऽभिप्रेतः, यदि ब्रह्मात्मकत्वं प्रामाणिकं स्यात्तदानीम् इह प्रतीयमानं स्वातन्त्र्यलक्षणकर्तृत्वं हि तद्गततया ब्रह्मात्मकत्वाविरोधि स्यात् ॥ ७ ॥ उत्तरसूत्रमवतारयति ( ब्रह्मात्मकेति ) ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ तुशब्दस्य पक्षव्यावर्त्तकत्वशङ्काव्युदासाय व्याचष्टे ( तुशब्द इति ) इतरोक्तार्थव्यावृत्त्यर्थं श्रुतिप्रसिद्ध्यनुरोधेन व्याचष्टे ( ज्योतिर्ब्रह्मेति ) तदेव दर्शयति ( तं देवा इति ) ब्रह्मकारणत्वपरतां प्रकरणे दर्शयति ( अणोरणीयानिति ) न हि 'अजामेका'मित्यस्मिन् मन्त्रे उत्पत्तिः

७ भावप्रकाशिका ७

मिति ) कर्त्रर्थशानच्प्रत्ययेन स्वतन्त्रः कर्त्तेति स्वातन्त्र्यलक्षणकर्त्तृत्वमेव वाच्यमित्यर्थः, मात्रशब्दाभिप्रेतनिश्चायकत्वाभावमेवाह ( यदि ब्रह्मात्मकत्वमिति )

जामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनाम्भुक्तभोगामज्योऽन्य" इति । सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाणेऽभिधीयमानत्वात्प्राणसमुद्रपर्वतादिवदेषाऽप्यजा बह्वी-

---

* श्रुतप्रकाशिका *

प्रतीयत इत्यत्राह ( सर्वस्येति ) यथा 'इडो यजति बर्हिर्यजति तनूनपातं यजतीत्या'दिष्वङ्गत्वाश्रवणेऽपि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिप्रकरणस्थतया तदङ्गत्वं निश्चीयते . तद्वत् सृष्टिप्रकरणस्थत्वादुत्पत्तिसिद्धेत्यर्थः, अस्मिन्मन्त्रे न सृष्टिर्विवक्षिता , सृष्टिप्रकरणस्य पूर्वमेव विच्छेदात्, अत्र 'जहात्येनां भुक्तभोगामजोऽन्य' इत्युक्तस्य मुक्तस्योत्पत्त्यनुपपत्तेश्चेत्यत्राह ( बह्वीनामिति ) न सृष्टिप्रकरणविच्छेद इत्यर्थः , 'यस्माज्जातानपरानैव किञ्चनाने'त्युत्तरत्राऽपि सृष्ट्यनुवृत्तेरिति चार्थसिद्धम्, सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाण इति ह्युक्तम् , मुक्तात्मकीर्त्तनमेतद्विशेषणत्वेन. न तु सृष्टिप्रकरणविच्छेदात् , यथा बद्धात्मकीर्त्तनमित्यभिप्रेत्याह

* भावप्रकाशिका *

( तद्गततयेति ) प्रकृतिशरीरकब्रह्मगततयेत्यर्थः ॥ ७ ॥ ॥ ७ ॥ ७ ॥ ( सृष्टिप्रकरणत्वादिति ) यद्यपि प्रयाजादीनामङ्गत्वे इतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणं प्रमाणम्, इह सृज्यमानप्रायपाठात्मकसन्निधिलक्षणं प्रकरणं प्रमाणम् , तथाऽप्युभयोरपि प्रकरणशब्दव्यवहार्यत्वमस्तीति तथोक्तमिति द्रष्टव्यम् । ( पूर्वमेव विच्छेदादिति ) 'ब्रह्मा देवानां पदवीः कवीना'मित्यत्र विच्छेदादिति भावः । ( न सृष्टिप्रकरणविच्छेद इति ) यद्यपि सृजमानामिति प्रकृतिकर्त्तृकसृष्टेः प्रतिपादनेऽपि ईश्वरकर्तृकसृष्टिप्रकरणाविच्छेदेनैतत् प्रमाणम् , तथापि यथा कथञ्चित् सृष्टिप्रकरणमात्रानुवृत्तिप्रदर्शनार्थमिदमुक्तमिति द्रष्टव्यम् । ( प्रक्रियमाण इति ह्युक्तमिति ) शानचा प्रकरणस्य वर्त्तमानत्वप्रतीतेरिति भावः । ( एतद्विशेषणत्वेनेति ) प्रकृतिविशेषणत्वेनेत्यर्थः । तस्मिन् प्रकरणेऽनन्यविशेषणत्वेन प्रतिपाद्यस्य

नां सरूपणां प्रजानां स्रष्ट्री कर्मवश्येनाऽऽत्मना भुज्यमानाऽन्येन विदुषाऽऽत्मना त्यज्यमाना च ब्रह्मण उत्पन्ना ब्रह्मात्मिकाऽवगन्तव्येत्यर्थः । अतो वाक्यशेषाच्चमसविशेषवच्छाखान्तरीयादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्यान्नियमिताऽजा ब्रह्मात्मिकेति निश्चीयते । इहाऽपि प्रकरणोपक्रमे 'किं कारणं ब्रह्मे'त्यारभ्य "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति परब्रह्मशक्तिरूपाया अजाया अवगतेः, उपरिष्टाच्च "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" "मायान्तु

---

* श्रुतप्रकाशिका *

(कर्मवश्येनात्मना भुज्यमानाऽन्येन विदुषाऽऽत्मना त्यज्यमाना चेति) एवं तन्त्रसिद्धाजात्वविरोधि ज्योतिरुपक्रमात्वं शाखान्तरे दर्शितम् । अथ सृजमानामितिपदप्रतीतस्वातन्त्र्यविरोधिब्रह्मात्मकत्वं स्वप्रकरणे दर्शयति— (इहापीति) शक्तिरूपायाः— अपृथक्सिद्धविशेषणरूपायाः. कार्योपयोग्यपृथक्सिद्ध-

ॐ भावप्रकाशिका ॐ

प्रायपाठादुत्पत्तिरभ्युपगन्तव्य इति भावः (शाखान्तरे दर्शितमिति) ननु तैत्तिरीयकेऽपि सृज्यमानप्रकरणपाठमात्रेण कथं परमात्मकारणत्वम्, मुक्तस्यापि तथात्वप्रसङ्गात्; नच मुक्तोऽन्यार्थतया निर्दिष्ट इति वाच्यम्, प्रथमनिर्दिष्टस्याऽन्यार्थतया निर्देशे प्रमाणाभावात्; वैपरीत्यस्याऽपि सुवचत्वाच्च; किञ्च प्रायपाठभञ्जके जननप्रतिषेधकेऽजाशब्दे जाग्रति कथं तस्याः कार्यत्वसिद्धिरिति चेत्, अत्र केचित्. उपक्रमशब्दो मुख्यवाची सन् लक्षणया नियन्तृत्वपरः, ततश्च ज्योतिरुपक्रमा ब्रह्मात्मिकेत्यर्थः, अत्र च हेतुः श्वेताश्वतरप्रकरणमेव, तत्र हि 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्, मायिनं तु महेश्वरम्' अस्मान्मायी सृजते विश्वमेत' दित्यात्मशक्तितया तद्विशेषणतया च प्रतिपाद्यमानत्वात्; अयञ्च हेतुरुत्सूत्र एव । श्वेताश्वतरे 'आत्म-

प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" "यो योनिर्योनिमधितिष्ठत्येक" इति च तस्या एव प्रतीतेर्नास्मिन्मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ॥

कथं तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्ण-

* श्रुतप्रकाशिका *

विशेषणं हि शक्तिः, योनिम्— जगद्योनिभूताम्प्रकृतिमित्यर्थः तस्या एव— ब्रह्मात्मिकाया एव, (स्वतन्त्रप्रकृतिप्रतिपत्तिगन्ध इति) न केवलं शाखान्तरैकार्थ्यात्स्वप्रकरणाच्च ब्रह्मात्मकत्वावगमादिति भावः॥ ७॥ उत्तरसूत्रशङ्कामाह (कथन्तर्हीति) लोहितशुक्लकृष्णाकारत्वं हि कार्यावस्थायामुपपद्यते, तदानीं ज्योति-

७ भावप्रकाशिका ७

शक्ति' मितिश्रवणाद्ब्रह्मात्मकप्रकृतिप्रतिपादनेपि तैत्तिरीयके तथा प्रतिपादनादर्शनात्कथं तत्र ब्रह्मात्मकप्रकृतिप्रतिपादनमित्याशङ्कयाऽऽह 'तथा ह्यधीयत एक इति' तत्रापि ब्रह्मात्मिकैव प्रकृतिः प्रतिपाद्यत इत्यर्थः। तथाहि 'सप्त प्राणाः प्रभवन्ति' इत्यादिना कृत्स्नस्य जगतो ब्रह्मकार्यत्वेऽभिहिते कथं निर्विकारस्य ब्रह्मणो विकारोत्पादकत्वमिति शङ्काव्युदासाय प्रवृत्तोऽयमजामन्त्रवर्णः। यद्ययं ब्रह्मात्मिकामजान्न प्रतिपादयेत्तदा प्रागुपक्षिप्तब्रह्मोपादानत्वनिर्वाहको न स्यात्, अन्यदुपक्रान्तमन्यदापतितमिति न्यायप्रसङ्गात्, अतः सोऽपि मन्त्रो ब्रह्मात्मकप्रकृतिपर एवेति। ननु ज्योतिरुपक्रमाशब्दस्य परमात्मात्मकत्वमात्रप्रतिपादकत्वेऽजात्वज्योतिरूपक्रमात्वयोर्विरोधाभावात्तत्परिहारपरोत्तरसूत्रासङ्गतिः स्यादिति चेत्, न, प्रकृते ब्रह्मात्मकत्वस्य तत्कार्यत्वेनैव निर्वोढव्यतया नित्यायाः प्रकृतेः तत्कार्यत्वाभावात् कथं ब्रह्मात्मकत्वमित्याक्षेपे 'अस्मान्मायी सृजते विश्वमेत' दिति निर्विकारस्य परमात्मनः कारणत्वनिर्वाहकतया सृष्ट्युपयुक्ततया च प्रतिपाद्यमानायाः प्रकृतेः सर्वदा अपृथक्सिद्धविशेषणत्वस्यावश्यम्भावेन तदात्मकत्वस्य नानुपपत्तिः, ततश्चाविभक्तनामरूपा च विभक्तनामरूपा च प्रकृतिः सर्वदा परमात्मशरीरभूतैव यथा विभक्तनामरूपोऽविभक्तनामरूपश्चादित्यः परमात्मशरीरभूत इति 'कल्पनोपदेशा'दिति सूत्राभिप्राय इति वदन्ति; भाष्ये 'देवात्मशक्तिं स्वगुणैर्निगूढा'मितीत्यस्यानन्तरं पठितेति शेषः। ततश्चारभ्येति क्त्वाप्रत्ययस्योपपत्तिरिति द्रष्टव्यम् (जगद्योनिभूतां प्रकृतिमित्यर्थ इति) नच योनिशब्दस्य प्रकृतिपरत्वे प्रकृतेरेकत्वात्कथं

रूपाया अस्याः प्रकृतेरजात्वम् ? आजाया वा कथं ज्योतिरुपक्रमात्वम् ? इत्यत्राह—

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः, अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वञ्च न विरुध्यते । कुतः ? कल्पनोपदेशात्, कल्पनं क्लृप्तिः सृष्टिः, जगत्सृष्ट्युपदेशादित्यर्थः । यथा "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति कल्पनं सृष्टिः, अत्रापि 'अस्मन्मायी सृजते विश्वमेत'दिति जगत्सृष्टिरुपदिश्यते । स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायी सर्वेश्वरः सर्वं जगत्सृजती-

---

* श्रुतप्रकाशिका *

रुपक्रमात्वाङ्गीकारे अजात्वानुपपत्तिः, अजात्वे ज्योतिरुपक्रमात्वानुपपत्तिरित्यर्थः । कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ( प्रसक्तेति ) चस्त्वर्थः . अविरोधशब्दार्थमाह ( अस्या इति ) अतस्मिंस्तद्भावारोपणपरत्वव्युदासाय कल्पनशब्दस्य सृष्टिवाचित्वं धातोः सृष्टिवाचित्वेन दर्शयति ( कल्पनं क्लृप्तिरिति ) क्लृप्तिशब्दं विशदयति ( सृष्टिरिति ) क्लृप्तशिख इत्यादिप्रयोगो लोकसिद्ध इति मत्वा श्रौतप्रयोगं दर्शयति ( यथेति ) " प्राकल्पयद्यो भुवनानि सस्रे" त्यादिस्मृतिप्रयोगश्च प्रसिद्धः . अतो ज्योतिःकल्पनशब्दौ वैदिकशब्दनिर्देशानुसारिणौ. तथा निर्देशश्च मुनिसमाधिः 'सम्प्रसादादध्युपदेशात्' समानो

* भावप्रकाशिका *

वीप्सेति वाच्यम्, अन्यत्र योनिशब्दस्य प्रकृतिगहदादिसाधारण्यात् कल्पभेदोपाधिकभेदाश्रयणाद्वा वीप्सोपपत्तिरिति भावः ॥ ( वैदिकशब्दनिर्देशानुसारिणाविति ) ततश्च स्वायत्ते शब्दप्रयोगे 'किमित्यबोधकम्पदं प्रयोक्तव्य'मिति न्यायेन "ब्रह्मोपक्रमा तु तथा ह्यधीयत एके" 'सृष्ट्युपदेशाच्च मध्वादिवदविरोधः" इति कुतो न सूत्रितमिति शङ्का पराकृता, सेतिपदस्य प्रकृत्युपस्थापकस्य ब्रह्मपर्यन्तत्वे भाष्यं

त्यर्थः । अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारण-रूपेणावस्थाद्वयान्वयोऽवगम्यते, सा हि प्रलयवेलायां ब्रह्मतापन्ना अविभक्तनामरूपा सूक्ष्मरूपेणाऽवतिष्ठते । सृष्टिवेलायां तूद्भूतसत्त्वादिगुणा विभक्तनामरूपाऽव्यक्ता-दिशब्दवाच्या तेजोबन्नादिरूपेण च परिणता लोहित-शुक्लकृष्णाकारा चावतिष्ठते । अतः कारणावस्थाऽजा, कार्य्यावस्था च ज्योतिरुपक्रमेति न विरोधः । मध्वा-दिवत्. यथेश्वरेणादित्यस्य कारणावस्थायामेकस्यैवा-वस्थितस्य कार्य्यावस्थायाम् ऋग्यजुस्सामाथर्वप्रति-पाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्य-

* श्रुतप्रकाशिका *

ज्योतिषे'त्यादिषु दर्शनात्, अजात्वज्योतिरुपक्रमात्वयोरविरोधसिद्धिं दर्शयति— (अनेनेति) अवस्थाद्वयं विवृणोति (सा हीति) ब्रह्मतापन्ना— कारणावस्थ— ब्रह्मतापन्ना. ननु कथं प्रकृतेर्ब्रह्मतापत्तिः. न ह्यन्यद्द्रव्यं द्रव्यान्तरम्भवति. सत्यम्, नाऽत्र केवलप्रकृतेर्ब्रह्मतापत्तिर्विवक्षिता. किन्तु प्रकृतिशरीरकब्रह्मणः कारणा-वस्थाप्राप्तिः, भाष्ये प्रकृत्युपस्थापकं सेतिपदं हि ब्रह्मपर्य्यन्तं कारणावस्थं ब्रह्मैव प्रकृतिशब्देनाऽभिधीयते ब्रह्मव्यतिरिक्तवस्त्वन्तराभावादिति प्रकृत्य-धिकरणे वक्ष्यमाणत्वात् कार्यावस्था ज्योतिरुपक्रमेति कार्यावस्थाजाशरीरकं ब्रह्म कार्यम्, कारणावस्थाजाशरीरकं ब्रह्म कारणमित्यर्थः, सूत्रखण्डं व्याचष्टे (मध्विति) उदयास्तमयमधुत्वकल्पनानि तदभावश्चादित्यश्चावस्था-द्वयेन यथोपपद्यते तथा अजात्वज्योतिरुपक्रमात्वे अवस्थाभेदेन प्रकृत्याख्यके

* भावप्रकाशिका *

प्रमाणयति (कारणावस्थं ब्रह्मैवेति) एकस्येति व्याख्येयं पदम्, भाष्ये—वस्वा-दिभोग्यत्वार्थं मधुकल्पनमिति, वस्वादिदेवताभोगार्थकर्मनिष्पाद्यरसाश्रयतया-मधुव्यपदेशो भाक्त इत्यर्थः । यथाऽऽदित्यस्य कार्यावस्थायामृग्वे-दादिप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयत्वमुदयास्तमयत्वञ्च तथेतिभाष्यस्य पर्यवसितोऽर्थः

त्वाय मधुत्वकल्पनमुदयास्तमयकल्पनञ्च न विरुध्यते। तदुक्तं मधुविद्यायाम् "असौ वा आदित्यो देवमधु" इत्यारभ्य अथ 'तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेत्येकल एव मध्ये स्थाते'त्यन्तेन एकलः एकस्वभावः, अतोऽनेन मन्त्रेण ब्रह्मात्मिकाऽजैवाऽभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम् ॥ अन्ये त्वस्मिन्मन्त्रे तेजोबन्नलक्षणाऽजैकाभिधीयत इति ब्रुवते, ते प्रष्टव्याः— किं तेजोबन्नान्येव तेजोबन्नात्मिकाजैका ? उत तेजोबन्नरूपं ब्रह्मैव ? किं वा— तेजोबन्नाकारणभूता काचिदिति । प्रथमे कल्पे तेजोबन्नानामनेकत्वादजामेकामिति विरुद्धयते, न च वाच्यन्तेजो-

* श्रुतप्रकाशिका *

धर्मिण्यविरुद्धे इत्यर्थः। एकस्य— ईश्वरेणैकस्याविभक्तनामरूपस्येत्यर्थः, ज्योतिरुपक्रमेत्यादिसूत्रद्वयस्य परोक्तमर्थं निराचिकीर्षुस्तत्र प्रथमस्य सूत्रस्यार्थन्दूषयति ( अन्ये त्विति ) दूषयितुं विकल्पयति ( किमिति ) एकाजात्वेन परिकल्प्यमानं वस्तु किन्तेजोबन्नान्येवेत्यर्थः, अजात्वैकत्वसिद्ध्यर्थं ब्रह्मकारणवादानुगुण्यार्थञ्च ब्रह्मानुबन्धित्वेन मध्यमं शिरो दर्शितम्, तेजोबन्नरूपम्— तेजोबन्नावस्थं ब्रह्म किमेकच्छागत्वेन कल्प्यत इत्यर्थः. ( तेजोबन्नकारणभूता काचिदिति ) तेजोबन्नवाचिशब्देन लक्षिता तत्कारणभूता काचिदेकाऽजात्वेन किं रूप्यत इत्यर्थः। प्रथमं शिरो दूषयति ( प्रथमेति ) एकत्वविरोधपरिहारमाशङ्क्याह ( न च वाच्यमिति ) कुत इत्यत्राह ( त्रिवृत्करणेऽपीति )

* भावप्रकाशिका *

( अजात्वैकत्वसिद्ध्यर्थमिति ) एकाजात्वसिद्ध्यर्थमित्यर्थः। उत्तरत्र एकच्छागत्वसिद्ध्यर्थमिति वक्ष्यमाणत्वात ( तेजोबन्नवाचिशब्देनेति ) लोहितकृष्णशब्दैः तद्रूपवन्ति तेजोबन्नानि लक्षयित्वा तद्द्वारा तत्कारणभूता मूलप्रकृतिर्लक्ष्यते किमि-

बन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति । त्रिवृत्करणेऽपि बहुत्वानपगमात्, "इमास्तिस्रो देवताः" "तासां त्रिवृतं त्रिवृतमेकैकाङ्करवाणी" ति प्रत्येकं त्रिवृत्करणोपदेशात् । द्वितीयः कल्पो विकल्प्यः,— किन्तेजोबन्नरूपेण विकृतं ब्रह्मैवाजैका ? किं वा स्वरूपेणावस्थितमविकृतमिति। प्रथमः कल्पो बहुत्वानपायादेव निरस्तः। द्वितीयेऽपि लोहितशुक्लकृष्णामिति विरुध्यते। स्वरूपेणावस्थितं ब्रह्म तेजोबन्नलक्षणमिति वक्तुमपि न शक्यते,

* श्रुतप्रकाशिका *

बहुत्वानपगममुपपादयति ( इमा इति ) न समुदायैकत्वम् . अपि तु समुदायत्रयमेवेत्यर्थः। द्वितीयं शिरो विकल्पयति ( किमिति ) तेजोबन्नरूपा ब्रह्मणो विकाराः किमजाशब्देनोच्यन्ते ? उत स्वरूपम् ? इति विकल्पग्रन्थार्थः, प्रथमे शिरस्यवस्थाबहुत्वादेकत्वविरोधमाह ( प्रथममिति ) मध्यमे शिरसि द्वितीयकल्पं दूषयति (द्वितीयेऽपीति) ब्रह्मस्वरूपस्य लोहितशुक्लकृष्णत्वाभावात् श्रुत्यस्वारस्यमित्यर्थः । तेजोबन्नादिसर्वात्मकस्य ब्रह्मणः किन्नोपपद्यत इत्यत्राह ( स्वरूपेणेति ) यद्वा सूत्रास्वारस्यमप्याह ( स्वरूपेणेति ) ज्योतिरुपक्रमेति हि सौत्रम्पदम्, ज्योतिरुपक्रमशब्दस्तेजोबन्नवाचीति हि तैर्व्याख्यातम्, न हि ब्रह्मस्वरूपं तेजोबन्नशब्दवाच्यम्, अतस्सूत्रास्वारस्यमित्यर्थः, तेजोबन्नावस्थाविशिष्टं ब्रह्माजाशब्दवाच्यमिति पक्षे किमदस्थाविशिष्टत्वं सद्वारकम् ? अद्वारकं वा ? अद्वारकत्वे लोहितशुक्लकृष्णत्ववि-

❀ भावप्रकाशिका ❀

त्यर्थः ( समुदायत्रयमेवेत्यर्थ इति ) त्रिवृत्कृता पृथिवी, त्रिवृत्कृता आपः, त्रिवृत्कृतं तेजश्चेतित्रयस्समुदाया इति भावः ( अद्वारकत्वे लोहितशुक्लकृष्णत्वविरोध इति ) इदमुपलक्षणम्, निर्विकारत्वश्रुतिविरोध इत्यपि द्रष्टव्यम्। विकल्प.

तृतीये कल्पेऽप्यजाशब्देन तेजोबन्नानि निर्दिश्य तैस्तत्कारणावस्थोपस्थापनीयेत्यास्थेयम्। ततो वरमजाशब्देन। तेजेबन्नकारणावस्थायाः श्रुतिप्रसिद्धाया एवाभिधानम्, यत्पुनरस्याः प्रकृतेरजाशब्देन छागत्व-

* श्रुतप्रकाशिका *

रोधः, 'अरसमलोहित'मिति श्रुतेः। सद्वारकत्वेऽस्मत्पक्ष एव परिगृहीतः स्यादिति विकल्पपरिहारयोः स्पष्टत्वान्न तत्कण्ठोक्तिः। प्रथमविकल्पितशिरस्त्रये तृतीयं शिरो दूषयति (तृतीय इति) लोहितशुक्लकृष्णात्वाजात्वैकत्वसिद्ध्यर्थमयं पक्षः शङ्कितः। तत्र दूषणमुच्यते— (अजाशब्देनेति) तेजोबन्नानामवाचकस्याजाशब्दस्य तेजोबन्नपरत्वमारोप्य तेन तत्कारणस्य लक्षणयोपस्थापनादपि मुख्यवृत्त्या कारणप्रतिपादनपरत्वाश्रयणं युक्तमित्यर्थः। कल्पनोपदेशादिति सूत्रस्य परोक्तार्थं दूषयति (यत्पुनरस्या इति) सर्वत्र रूढितोऽवयवशक्त्या वा प्रतिपाद्यमानमुख्यार्थपरिग्रहः स्वतः प्राप्तः, गौणार्थपरिग्रहस्तु मुख्यार्थानुपपत्त्या क्रियते, तत्रौचित्यातिशयलाभो-

* भावप्रकाशिका *

परिहारयोरिति) विकल्पदूषणयोरित्यर्थः। भाष्ये—तृतीयविकल्पेपीत्यादेरयमर्थः, तेजोबन्नकारणभूता लोहितकृष्णादिशब्दैः लक्षिता अजाशब्देन रूप्यत इति, तृतीयपक्षे लोहितादिशब्दैः तेजोबन्नानि लक्षयित्वा तद्वारा लक्षिता कारणावस्था अजाशब्देन गौण्या वृत्त्योपस्थापनीया, न जायत इत्यजेतियोगरूपमुख्यवृत्त्यैव लोहितशुक्लकृष्णाशब्दलक्षिततेजोबन्नकारणस्याऽभिधानसम्भवे छागत्वकल्पनेन गौणवृत्त्या तत्प्रतिपादनाभ्युपगमस्यायुक्तत्वादिति; तेजोबन्नानामवाचकस्येति टीकायामप्ययमेवार्थः, तेजोबन्नकारणावाचकस्याऽजाशब्दस्य गौण्या वृत्त्या तादृशकारणप्रतिपादकत्वं परिकल्प्य तथाभ्युपगमाद्वरं योगवृत्त्याऽजाशब्दस्य मूलकारणपरत्वमिति, नत्वजाशब्दस्य तेजोबन्नलक्षणाद्वारा तत्कारणलक्षकत्वमस्मिन् वाक्ये प्रतिक्षिप्यत इति मन्तव्यम्। परैः तथानुक्तेः, लोहितादिशब्दलक्षणा, अजाशब्दे गौणीवृत्तिरित्येवोक्तमिति मन्तव्यम् (रूढितोऽवयवशक्त्या वेति) ननु एवं 'मैत्रुहोतुश्चमसः प्रोद्गातृणा'मितिमन्त्रे-उद्गातृपदरूढ्यर्थबहु-

परिकल्पनमुपदिश्यत इति तदप्यसङ्गतम्, निष्प्रयोजनत्वात्, यथा 'आत्मानं रथिनं विद्धी'त्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते, यथा चादित्ये वस्वादीनाम्भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते, तद्वदस्याम्प्रकृतौ च्छागत्वपरिकल्पनं क्वोपयुज्यते, न केवलमुपयोगाभाव एव, विरोधश्च । कृत्स्नजगत्कारणभूतायास्स्वस्मिन्ननादिकालसम्बद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूतायाः अचेतनायाः अत्य-

* श्रुतप्रकाशिका *

ऽनेकपदमुख्यार्थत्वसिद्धिश्च प्रयोजनम्, तत्र मुख्यार्थानुपपत्त्यभावः प्रदर्शितः अजात्वज्योतिरुपक्रमात्वयोरवस्थाभेदेन अविरोधस्योक्तत्वात्, अतोऽर्थौचित्यलाभरूपप्रयोजनाभावरूपं दूषणमाह ( निष्प्रयोजनत्वादिति ) प्रयोजनाभावस्य दूषणत्वज्ञापनाय कल्पनस्य प्रयोजनसिद्ध्यर्थतां दर्शयति ( यथाऽऽत्मानमिति ), विरोधं दर्शयति ( कृत्स्नेति ) ( एकरूपेति ) दुग्धादिरेव प्रयोजनमित्यर्थः, अचेतनाया इत्यनेन स्वसम्बन्धिपरित्यागासामर्थ्यं सिद्धमिति तत्प्रत्यनीकाकारमाह

* भावप्रकाशिका *

त्वानुपपत्तौ सत्यामवयवार्थमादाय न च सुब्रह्मण्यानां चतुर्णां ग्रहणम्. अपि तु रूढिपूर्वकलक्षणयाऽन्तरङ्गप्रत्यासत्त्या सदः प्रवेशवतामुद्गातृप्रस्तोतृप्रतिहर्तॄणां त्रयाणां ग्रहणमिति सिद्धान्तंकोपप्रसङ्ग इति चेन्न, मोद्गातृपदयौगिकार्थग्रहणेऽपि 'प्रैतुहोतुश्चमस' इत्यत्र सदसि भक्षयितारः स्थिताः तत्र चमसस्य नयनं भक्षार्थं प्रेष्यते; न च सुब्रह्मण्यस्तत्र स्थितः. अतस्त्रयाणामेव भक्षणं योगपक्षेपि सिद्ध्यतीति योगापलापेन रूढिपूर्वकलक्षणासमर्थनेन प्रयोजनं पश्यामः; रूढिपूर्वकलक्षणापक्षे अपसुब्रह्मण्यानां ग्रहणम्, योगपक्षे चतुर्णामपीत्यस्यार्थस्य सम्प्रतिपन्नत्वात्, तस्मात् तदधिकरणरूढ्यर्थबहुत्वासम्भवे यौगिकोऽर्थस्स्वीकर्तव्यः, ननु

ल्पप्रजासर्गकरागन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागाहेतुभूतस्वसम्बन्धिपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव । "अजामेकाम्' 'अजो ह्येकः' 'अजोऽन्य' इत्यत्राजाशब्दस्य विरूपार्थकल्पनञ्च न शोभनम् । सर्वत्र च्छागत्वं परिकल्प्यत इति चेत् · 'जहात्येनाम्भुक्तभोगामजोऽन्य' इति विदुष

---

* श्रुतप्रकाशिका *

( स्वसम्बन्धीति ) परिमितकार्यकरत्वादित्यत्र विरोध उक्तः । दूषणान्तरमाह ( अजामिति ) अर्थैकरूप्यं शङ्कते ( सर्वत्रेति ) तत्र विरोधान्तरमाह— ( जहातीति ) एवमर्थौचित्यलाभरूपप्रयोजनाभावो दर्शितः, सर्वत्र च्छागत्वपरिकल्पनशङ्कोपन्यासेनैवानेकपदान्तरमुख्यार्थत्वसिद्धिरूपप्रयोजनाभावश्च फलितः, एवं हेत्वभावात् प्रयोजनाभावाच्च छागत्वपरिकल्पनं व्युदस्तम् । ननु नार्थविरोधः कार्यकारित्वप्रयोजनसाधनत्वचेतनसङ्गादिमात्रस्य विवक्षितत्वात्, न हि दृष्टान्तगतसर्वधर्माणां विवक्षानियमोऽस्ति तथा सति सर्वत्र दृष्टान्तोपन्यासभङ्गप्रसङ्गात्, 'गौरनाद्यन्तवती' 'आत्मानं रथिनं विद्धी'त्यादिषु च प्रकृत्यादेर्गोत्वादिपरिकल्पनं दृश्यते, तच्च सर्वथा साधर्म्यविवक्षायां न घटत इति उच्यते 'आत्मानं रथिनं विद्धी'त्यत्र पृथगेव रूप्यरूपकवाचिपदश्रवणाद्रूपकानङ्गीकाररूपकवाचिपदवैयर्थ्यप्रसङ्गात्, येनाकारेण साधर्म्यं योग्यं

ॐ भावप्रकाशिका ॐ

पाशवदत्यन्तागतिकत्वम्, पाशपदे योगार्थाप्रतीतेरित्येवं परम्, ततश्च प्रकृतेऽजाशब्दे यौगिकार्थस्य स्फुटप्रतीतेर्न रूढिपूर्वकलक्षणाप्रसङ्गोऽवतरति, अत एव कुमुदं पङ्कजमित्युक्ते पङ्कजनिकर्तृत्वार्थ एव प्रतीयते, नतु तत्सादृश्यमिति भावः । भाष्ये स्वस्मिन्ननादिकालसम्बन्धानामिति, स्वरूपापेक्षया नपुंसकलिङ्गनिर्देशः, दृढभक्तिः शक्यश्चानेन क्षुत्प्रतिहन्तुं 'द्विगुरेकवचन'मितिवत् स्त्रीलिङ्गविवक्षाया वा, एवमनेन वा अन्येन वा, संयोगयोग्येत्युत्तरभाष्येऽपि लिङ्गनिर्देशो द्रष्टव्यः । भाष्येष्वपरित्यागा-

**आत्यन्तिकप्रकृतिपरित्यागङ्कुर्वतोऽनेन वाऽन्येन वा पुनरपि सम्बन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥** चमसाधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

प्राप्त्युपायतादिरूपं तदाकारमात्रन्तत्र विवक्षितमिति निश्चितं प्रयुक्तपदवैयर्थ्यपरिहारार्थम्, 'अजामेका'मिति वाक्यं तु रूप्यरूपकवाचिपदद्वयाश्रवणात् अर्थौचित्यं नावगम्यते, तेन गौणवृत्यनङ्गीकारेऽपि न वैयर्थ्यम्, 'गौरनाद्यन्तवती'त्यत्र रूप्यवाचिपदाश्रवणात्, अजाशब्दवद् गोशब्दस्यावयवशक्त्या प्रकृत्युपस्थापनासामर्थ्याच्च गत्यभावाद् गौणी वृत्तिराश्रिता, अनाद्यन्तवती—सर्वकामदुघेत्याद्युचितविशेषणश्रवणादर्थौचित्यमवगम्यते, अजाशब्दे तु न तथा गत्यन्तराभावः. उचितावयवार्थसम्भवात्, उचितविशेषणं च रूढिसिद्धाजाव्यावर्त्तकं नं श्रूयते, पुँल्लिङ्गाजाशब्दयोश्चामुख्यत्वं 'बह्वीः प्रजा' इत्यादिपदानां सङ्कोचश्च विफलः, अतः प्रयुक्तपदवैयर्थ्यपरिहारपदान्तरस्वारस्यार्थौचित्यसद्भावासद्भावरूपवैष-

* भावप्रकाशिका *

हेतुभूतेति, अपवर्गसाधनभूतादित्यस्य प्रतिद्वन्द्वि ( गौणवृत्त्यनङ्गीकारेऽपि न वैयर्थ्यमिति ) ननु अजामन्त्रे स्वरसत एतावानर्थः प्रतीयते, 'काश्चिच्छागीं त्रिवर्णां स्वरूपबहुबर्कराम् प्रजाकरामेकः छागः प्रीयमाणोऽनुवर्तते' अन्यस्तामुपभुक्तां त्यज्यत इति, अत्र लोके सम्भवन्नप्ययमर्थो वेदे तत्राप्यध्यात्मप्रकरणे न निर्बन्धमर्हतीति आध्यात्मिक एव पदार्थे योजनं कार्यमिति निश्चिते योग्यतावशात्तेजोबन्नमूलभूतप्रकृतावेवायं गौण्या वृत्त्या वर्तत इति प्रतीतिर्भवत्येव; यथा "द्वा सुपर्णा सयुजा सखायौ समानं वृक्षं परिषस्वजात" इतिमन्त्रे वृक्षत्वेन शरीरस्य. जीवपरयोः पक्षित्वेन. कर्मफलस्य वृक्षफलत्वेन. परिकल्पनं तद्वत्, इतरथा तत्राप्यगतेः, तथा 'गौरनाद्यन्तवती'' अत्रापि गोशब्दस्य गौणत्वे इयमेव वृत्तिराश्रयणीया, इतरथाऽयं मन्त्रः काश्चिद्वस्तुतो गोव्यक्तिमनादिं प्रतिपादयत्वित्युक्तावगतिरिति चेत्, सत्यम्, अध्यात्मप्रकरणयोग्यस्य यौगिकार्थस्य ग्रहणसम्भवे गौणार्थस्वीकारस्यायुक्तत्वादिति भावः । ( रूप्यवाचिपदाश्रवणादिति ) 'आत्मानं रथिनं विद्धि' इत्यादाविव रूप्यवाचिपदाश्रवणेऽपीत्यर्थः, ( रूढिसिद्धा-

* श्रुतप्रकाशिका *

स्यात् 'आत्मनं रथिनं विद्धी'त्यादिवद्रूपणपरत्वमयुक्तम्. कार्यकारित्वाद्यर्थमात्रविवक्षायामर्थविरोधाभावो य उक्तः स चेन्मुख्ययैव वृत्त्या लभ्यते. तदा गौणवृत्तिपरिग्रहो निष्फलत्वादनुपपन्नः, एवं परोक्तज्योतिरुपक्रमेत्यादिसूत्रार्थस्य एकशब्दार्थविरोध उक्तः, कल्पनोपदेशादिति सूत्रस्याजाशब्दास्वारस्यं दूषणतयोक्तम्, यद्यपि ज्योतिरुपक्रमाशब्देन तेजःप्रमुखत्वङ्कल्पनशब्देनातस्मिंस्तद्भावारोपणञ्च परोक्तं सूत्राक्षरानुगुणमिव प्रतीयते. तथाप्यनुपपत्तिपराहतम्, अस्मदुक्तार्थस्तु वैदिकनिर्देशसमाधिना स्वरस उपपन्नश्चेतिभिदा, "चमसवदविशेषा"दिति सूत्रं परस्यास्वरसञ्चमसशब्दस्य यौगिकत्वाद्रूढार्थपरत्वाभावाच्च ॥ ४ ॥ ४ ॥ ४ ॥

४ भावप्रकाशिका ४

जाव्यावर्त्तकमिति) रूढ्यर्थनिर्णायकमित्यर्थः (अतः प्रयुक्तपदवैय्यर्थ्येति) 'आत्मानं रथिनं विद्धि' इत्यत्रप्रयुक्तरूप्यवाचिपदवैय्यर्थ्यपरिहारोऽस्ति, 'गौरनाद्यन्तवती' इत्यत्र गौणार्थग्रहण एव अनाद्यन्तवती इत्यादिपदस्वारस्यमस्ति, सर्वकामदुघेत्युचितविशेषणश्रवणादर्थौचित्यमवगम्यते. अजामन्त्रे तु न तथा, रूप्यवाचिपदाश्रवणात्, गौणार्थपरिग्रहेऽपि पुंल्लिङ्गाजशब्दयोरपि स्वरसप्रसङ्गात्, अगौणार्थपरिग्रहेऽपि अजाशब्दस्य योगेनाऽर्थप्रतिपादकत्वसम्भवात्; बहुप्रजाजनकत्वादिविशेषणानाञ्च मुख्याजाव्यावर्त्तकत्वाभावेन गौणपक्ष एवार्थौचित्यमित्यस्यापि भावाच्चेत्यर्थः, (रूढार्थसदृशपरत्वाभावाच्चेति) यद्यपि चमसशब्दः पात्रविशेषे रूढः, शिरसि तु तत्सादृश्यात्तत्कल्पनया गौण इत्येव परेषां मतम्, तथापि प्रोक्षणीन्यायेन योगेन वृत्त्युपपत्तौ चमसशब्दस्य रूढिकल्पनायां प्रमाणाभावात्, नच यथा प्रस्तोत्रादिषु अप्रयोगादुद्गातृशब्दस्य रूढिरङ्गीक्रियते, यथा वाधीयन्त इति धाय्या, इति धाय्याशब्दस्य यौगिकत्वे इतरत्रापि प्रयोगप्रसङ्गात्. 'पृथुवाजिवत्यौ धाय्ये भवत' इति तयोरेव प्रयोगात् धाय्याशब्दस्य पाय्यसान्नाय्य निकाय्य धाय्यामानहविर्निवाससामिधेनिष्विति सामधेनिमात्रवचनत्वेन स्मृतत्वेऽपि रूढत्वमित्येवमादिषु रूढिरङ्गीक्रियते, तथा चमसशब्देऽप्यस्तु 'चमसस्सामपात्रं स्यात्' इति निघण्टुपाठादिति वाच्यम्, चमसशब्दस्य पात्रविशेषादन्यत्राप्रयोगे प्रमाणाभावात्, यदि च रूढत्वं तथापि पूर्वोक्तदोषात् परोक्तयोजना न युक्तेति तात्पर्य्यम्। ॥ चमसाधिकरणम् समाप्तम् ॥ ४ ॥

## न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

३ अधिकरणम्

वाजसनेयिनस्समामनन्ति "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवन्मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" इति । किमयं

* श्रुतप्रकाशिका *

न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ अजाशब्दस्य स्वतन्त्रप्रकृत्युस्थापकत्वे विशेषाभावाद्वाक्यान्तरानुरोधेन प्रकृतेर्ब्रह्मात्मकत्वं साधितम् , तदत्रानुपपन्नम् परमात्मपरत्वे सङ्ख्याधिक्यात् परमात्मना विनाऽपि सङ्ख्यापूरणेनाब्रह्मात्मिका प्रकृतिरिति विशेषनिश्चयसम्भवादिति शङ्कया सङ्गतिः । विषयादिकमाह ( वाजेति ) पञ्चविंशतिसङ्ख्यान्वयतत्त्वाधिक्यादिप्रतीतिजनकमिदं वाक्यम्, एवंजातीयकवाक्यानि सन्ति चेत्तान्यपि विषयः, पञ्चविंशतिसङ्ख्यान्वयतत्त्वाधिक्यप्रतीतिभ्यां संशयः, 'यस्मिन् पञ्च पञ्चजना' इति मन्त्रः किं कापिलतन्त्रसिद्धतत्त्वपरः ? उत नेति । किं पञ्चपञ्चजनशब्देन पञ्चविंशतितत्त्वप्रतीतिरस्ति नेति ? किमाकाशस्य पृथग्निर्देशोऽवान्तरसङ्ख्याऽन्वयनिमित्तविरोधी ? उत नेति किं वाक्यशेषेण पञ्चजनशब्दस्य प्राणादिविषयत्वनिश्चयः शक्यः ? उत नेति। यदा न विरोधी, यदा च निश्चयो न शक्यः. तदाऽवान्तरसङ्ख्यान्वयनिमित्तसम्भवेन समासस्य समाहारविषयतया पञ्चपञ्चजनशब्देन पञ्चपञ्चकान्युच्यन्त इति पञ्चविंशतितत्त्वप्रतीतेरयं मन्त्रस्तन्त्रसिद्धतत्त्वपतिपादनपर इति पूर्वः पक्षः, यदा आकाशस्य पृथग्निर्देशोऽवान्तरसङ्ख्यान्वयनिमित्तविरोधी वाक्यशेषेण च प्राणादिविषयत्वनिश्चयः शक्यः । तदाऽवान्तरसङ्ख्यान्वयनिमित्ताभावेन समाससंज्ञाविषयतया पञ्चपञ्चजनशब्देन पञ्चपदार्था उच्यन्त इति पञ्चविंशति-

* भावप्रकाशिका *

'तन्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' 'यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः' 'तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनो विदुः. ते निश्चिक्युर्ब्रह्म पुराणमग्र्यम्" इति श्रुतिः । ( तान्यपि विषय इति ) "स वा एष पुरुष पञ्चधा

मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपरः ? उत नेति सन्दिह्यते। किं युक्तम्? तन्त्रसिद्धतत्त्वप्रतिपादनपर इति । कुतः? पञ्चशब्दविशेषितात्पञ्चजनशब्दा-

* श्रुतप्रकाशिका *

तत्त्वाप्रतीतेरयम्मन्त्रो न तन्त्रसिद्धतत्त्वप्रतिपादनपर इति राद्धान्तः। यद्यपि 'स्युः पुमांसः पञ्चजना' इति मनुष्यनामतया पठितस्य समुद्रान्तर्वर्तिनि च दानवविशेषे प्रयुक्तस्य च पञ्चजनशब्दस्य सङ्ख्यापूर्वसमासत्वं नाऽस्ति सप्तर्षीणामेकैकस्य सप्तस्वन्यतमाभाववन्मनुष्याणां दानवविशेषस्य च पञ्च-स्वन्यतमत्वाभावेन सङ्ख्यान्वयप्रतीत्यनुपपत्तेः समाससामर्थ्याभावः, तथाऽप्यस्य तु पञ्चजनशब्दस्य सङ्ख्याप्रतीतिस्वारस्यानुरोधे सम्भवति तत्परित्यागायोगात् सङ्ख्यापूर्वसमासत्वं युक्तमित्यभिप्रेत्याह (पञ्चजनशब्दविशेषितादिति) ननु कथ-मिदमवसीयते ? पञ्चजना इत्येकं पदं न तु पञ्च पञ्च जना इतीति, तदा हि दशत्वमापद्येत, यदा च समस्तः पञ्चजनशब्दस्तदापि कथन्तन्त्रसिद्धतत्त्वप्रतीतिः पञ्चजनशब्देन पञ्चसङ्ख्यतया प्रतिपन्नार्थस्य पुनः पञ्चतया विशेषणे पञ्चविंश-तितत्त्वप्रतिपत्तिरिति चेन्न पुनरुक्तिप्रसङ्गात्, विशिष्टस्य विशेषणाददोष इति

७ भावप्रकाशिका ७

पञ्चात्मा'' इत्यादिवाक्यमपि विषय इत्यर्थः (पञ्चस्वन्यतमत्वाभावेनेति) यद्यपि 'रथकारः पञ्चमाश्चत्वारो वर्णाः पञ्चजना' इति कैय्यटोक्तेर्मनुष्यनाम्नः पञ्चजनशब्द-स्यापि सप्तर्षितुल्ययोगक्षेमत्वमेवेति वक्तुं शक्यम्, तथापि मनुष्यादिनाम्नः पञ्च-जनशब्दस्य पञ्चभिर्भूतैर्जननमस्येति व्युत्पत्त्यभिप्रायेण तथोक्तमिति द्रष्टव्यम्। नच तथा व्युत्पत्त्याश्रयणेऽपि सङ्ख्यापूर्वकत्वं सिद्धमिति कथं सङ्ख्यापूर्वकसमा-सत्वाक्षेप इति वाच्यम्, समानाधिकरणसङ्ख्यापूर्वकसमासासम्भवादिति भावः (सङ्ख्यापूर्वसमासत्वं युक्तमित्यभिप्रेत्येति) 'तद्धितार्थोत्तरपदसमाहारे चे'तिसूत्रविहितसङ्ख्यापूर्वकसमासत्वं युक्तमित्यभिप्रेत्येत्यर्थः, नतु 'दिक्सङ्ख्ये संज्ञाया'मिति विहितसङ्ख्यापूर्वकसमासत्वमिति मन्तव्यम्, तथा सति 'सप्त सप्त-र्षय' इत्यत्रैकोनपञ्चाशतत्वसङ्ख्याप्रतीत्यभाववत् 'पञ्च पञ्चजना' इत्युक्ते पञ्चविंश-तत्वप्रतीत्यभावप्रसङ्गादिति द्रष्टव्यम् (तदा हीति) पञ्चशब्दस्य समस्तत्व इत्यर्थः

* श्रुतप्रकाशिका *

चेत् किं विशेष्यस्य ? उत विशेषणस्य ? आहोस्विदुभयस्य । न तावद्विशेष्यस्य, तत्र पञ्चत्वसङ्ख्यान्वयस्य शब्दान्तरसिद्धतया पुनरुक्तत्वात्सङ्ख्याभ्यासेऽभिमते दशसङ्ख्याप्रतीतेश्च, नाऽपि विशेषणस्य विशेष्यपर्यन्तशब्दोपस्थापितस्य विशेषणस्य पुनस्तत्पदनिर्दिष्टजातीयविशेषणान्वयायोगात्, न हि गौर्गौरिति गोत्वेन विशेष्यम्, न चोभयस्य, अंशे पौनरुक्त्यादंशे सङ्ख्यान्वयायोगात्, न च द्वे शते त्रीणि शतानीतिवद्विशेष्टुं युक्तम्, अवान्तरसङ्ख्यानिवेशनिमित्तैकोपाध्यभावेन समूहैक्यासिद्धेः, एकग्रामस्थित्याद्युपाधिना हि शतसङ्ख्यपुरुषसमूहैक्यम्. तस्मिंश्च सति ह्येकत्वद्वित्वाविना पुनर्विशेषणसम्भवः, अन्यथा बहूनामेकत्वद्वित्वाद्यभावात्,

❀ भावप्रकाशिका ❀

( दशत्वमापद्यत इति ) यथा 'पञ्च सप्त च वर्षाणि नववर्षशतक्रतुः' इत्यादौ द्वादशवर्षवृष्ट्यभावप्रतीतिवदिति भावः (विशेषपर्यन्तशब्दोपस्थापितस्येति ) ततश्च स्वतन्त्रोपस्थित्यभावेन नैराकाङ्क्ष्यादिति भावः ( नच द्वे शतेति ) "द्वे शते ब्राह्मणास्त्रीणि शतानि ब्राह्मणा" इत्यत्र ब्राह्मणपदसामानाधिकरण्यसिद्ध्यर्थं शतशब्दस्य शतत्वसङ्ख्यावद्विशेष्यपर्यन्ततया विशेष्यपर्यन्तशब्दोपस्थापितस्यापि शतसङ्ख्यारूपविशेषणस्य सङ्ख्यान्तरान्वयदर्शनवदिहापि पञ्चत्वसङ्ख्यायाः पञ्चत्वसङ्ख्यान्वयोऽस्तीत्यर्थः । ( अवान्तरसङ्ख्येति ) यथा त्रयस्त्रिंशद्देवा इति महासङ्ख्यायाम् 'अष्टौ वसव एकादश रुद्राः द्वादश आदित्याः प्रजापतिरिन्द्रश्चे'ति वाक्यप्रतिपन्नाष्टत्वैकादशत्वावान्तरसङ्ख्यानिवेशनिमित्तवसुत्वाद्युपाधिवदिह पञ्चत्वसङ्ख्यारूपायन्तारसङ्ख्यानिवेशनिमित्तभूतस्यैकस्योपाधेर्दर्शनादित्यर्थः ( एकग्रामस्थित्याद्युपाधिना हीति ) यद्यपि एकग्रामवासिषु सहस्रेषु पुरुषेषु सहस्रसङ्ख्यावान्तरसङ्ख्यारूपशतसङ्ख्यानिवेशनिमित्तभूताः परस्परव्यावृत्ता उपाधयो न दृश्यन्ते, 'पञ्च सप्त च वर्षाणि पञ्च पञ्चाशतस्त्रिवृत् सम्वत्सरा' इत्यादिषु विनाप्येकैकमवच्छेदकं विवक्षितमहासङ्ख्यालाभोपायतामात्रेण यत्किञ्चदवान्तरसङ्ख्यानिवेशदर्शनात्, नहि द्वादशवार्षिक्यामनावृष्टौ पञ्चसु सप्तसु च वर्षेषु विश्वसृजामयने पञ्चाशदुत्तरद्विशतसङ्ख्यानां त्रिवृतां सम्वत्सराणां मध्ये पञ्चाशति पञ्चाशति सम्वत्सरेषु चैकैकधर्मोऽस्ति, तथापि सम्भवस्थलाभिप्रायेणेदं द्रष्टव्यम् । ( शतसङ्ख्यपुरुषसमूहैक्यमिति ) शतसङ्ख्यालक्षणधर्मैक्येन समूहैक्यमित्यर्थः । सङ्ख्या-

त्पञ्चविंशतितत्त्वप्रतीतेः। एतदुक्तम्भवति पञ्चजना इति समासः समाहारविषयः । पञ्चजनाः-- पञ्चानां जनानां समूहाः पञ्चजनाः, पञ्चपूल्य इतिवत् ।

* श्रुतप्रकाशिका *

अतो न पञ्चविंशत्यर्थसिद्धिः, सिद्धावपि न तन्त्रोक्तार्थत्वनिश्चयः, निश्चायकाभावादित्याशङ्कायामाह ( एतदुक्तम्भवतीति ) ( समासः समाहारविषय इति ) 'पञ्चानां त्वापञ्चजनाना'मित्यत्र पञ्चजनशब्दस्य समस्ततयैकपद्यदर्शनादिहाप्यौचित्यतस्तत्प्रतिपत्तेः, द्वितीयपञ्चशब्दसमभिव्याहारबलेन इतरपञ्चशब्दस्य सङ्ख्यापरत्वप्रतीतेः समाहारसमासत्वं स्वीक्रियत इति भावः । तत्फलमाह ( पञ्चानामिति ) छान्दस इति त्रिभुवनादिशब्दवत् स्त्रीलिङ्गस्मृतेरपवादाभावात् छान्दसत्वमिति भावः । भूतत्वज्ञानैन्द्रियत्वादिकमवान्तरसङ्ख्यानिवेशनिमित्तमस्तीत्यभिप्रेतं तद्धि स्फुटीभविष्यति । एवं समूहसिद्धौ पञ्चतया

* भावप्रकाशिका *

निवेशनिमित्तोपाधौ सति सङ्ख्यानिवेशः, सङ्ख्यानिवेशे सति समूहैक्यमिति द्रष्टव्यम् ( न तन्त्रोक्तार्थत्वनिश्चय इति ) 'देवाः पितरो गन्धर्वा दैत्या दानवा राक्षसा भूताः प्रेताः पिशाचाः चत्वारो वर्णाः षडनुलोमाः षट् प्रतिलोमाश्चे'त्येवमादिरूपेण पञ्चविंशतिजनसम्भवादिति भावः ( ऐकपद्यदर्शनादिति ) इदमुपलक्षणम्, पञ्चजनशब्दस्य भाषिकाख्यशतपथब्राह्मणस्वरविधायकग्रन्थविहितेनान्तोदात्तस्वरेणापि समासो विधीयत इति द्रष्टव्यम्, ( पञ्चशब्दसमभिव्याहारबलेनेति ) पञ्च सप्तर्षयः सप्त सप्तर्षय इत्यादौ सङ्ख्यावाचिपदसमभिव्याहारेऽपि न सङ्ख्यापरत्वम्, समाहारस्वीकारो वा, तथापि प्रत्यस्तमितावयवार्थसञ्ज्ञा समासत्वाश्रयणापेक्षया समाहारसमासत्वाश्रयणमेव ज्यायः; किञ्च. सञ्ज्ञासमासत्वाभ्युपगमेऽपि न पञ्चजनशब्देन मनुष्याणां ग्रहणं सम्भवति, अध्यात्मप्रकरणे पञ्चमनुष्यत्वकीर्तनस्यायुक्तत्वात्, इतरेषाञ्च पञ्चजनशब्दितानामप्रसिद्धेः समाहारसमासत्वाश्रयणमेव युक्तमिति भावः, ( पञ्चजनपञ्चशब्दस्येति ) पञ्चजनशब्दान्तर्गतपञ्चशब्दस्येत्यर्थः ( स्त्रीलिङ्गस्मृतेरिति ) 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत' इति स्त्रीत्वस्य पात्रादिषु प्रतिषेधो वक्तव्य इति त्रिभुवनादिषु अपवादवत् . इह तद

पञ्चजना इति लिङ्गव्यत्ययश्छान्दसः । ते च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयन्ते यथा-पञ्च पञ्चपूल्य इति । अतः "पञ्च पञ्चजनाः" इति पञ्चविंशतिपदार्थावगतौ ते कतम इत्यपेक्षायाम् मोक्षा-धिकारान्मुमुक्षुभिर्ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृ-

* श्रुतप्रकाशिका *

विशेषणोपपत्तिमाह ( ते चेति ) एवं पञ्चविंशतिसङ्ख्यासिद्धावस्य मन्त्रस्य मोक्षाधिकारात्साङ्ख्यतत्त्वपरत्वसिद्धिमाह— ( ते कतम इति ) आकाशेन "यस्मिन्" इति निर्दिष्टेनात्मना च सप्तविंशतितत्त्वप्रतीतिरपि न विरुद्धा , सत्त्वरजस्तमसां पृथग्द्रव्यत्वाभ्युपगमात् . आत्माकाशाभ्यां विना पञ्चविंशतिसङ्ख्यासिद्धेः , गुणत्रयमहदहङ्काराः पञ्च . वायुतेजोजलपृथिवीघ्राणाः पञ्च, तन्मात्राणि पञ्च , जिह्वादिज्ञानेन्द्रियाणि चत्वारि मन इति पञ्च, कर्मेन्द्रियाणि पञ्च, इति पञ्चविंशतिसङ्ख्यान्वयसिद्धिरिति । यद्वा आत्मनः स्वस्मिन्नवस्थितत्वादाकाशस्यादरेण भूयः कीर्त्तनादविरोध इति पञ्चविंशतिपदार्थास्तदन्तर्भूताः आत्मनि प्रतिष्ठिताः, किमपरैस्तदन्तर्गत आकाशोऽपि

* भावप्रकाशिका *

भावात् छान्दसत्वमिति भावः । एतच्चोपलक्षणम्, 'उकालोऽज्झ्रस्वदीर्घप्लुतः' इत्यत्र छान्दसत्वेन 'स नपुंसकम्' इति नपुंसकलिङ्गाभाववदिहापि छान्दसत्वेन 'सनपुंसकम्' इति नपुंसकलिङ्गाभावोऽपि द्रष्टव्यः । ननु "यस्मिन् पञ्च पञ्चजना" इतिमन्त्रे आत्माकाशव्यतिरेकेणापि पञ्चविंशतिपदार्थप्रतीतेः, ताभ्यां च सह सप्तविंशतिसङ्ख्यासम्पत्तेः नैतत् साङ्ख्यदर्शनानुगुणमित्याशङ्क्य प्रकृतिद्रव्यस्य द्रव्यत्रयात्मकत्वेन सप्तविंशतिसङ्ख्याया अपि न तन्मते विरोध इति परिहरति, ( यस्मिन्निति निर्दिष्टेन आत्मना चेत्यादिना ) ( आत्मनः स्वस्मिन्नवस्थितत्वादिति ) स्वे महिम्नि प्रतिष्ठित इतिवदिति भावः; भाष्ये— मूलप्रकृतिरविकृतिरिति, मूलप्रकृतिः न कस्यापि विकृतिः, महदहङ्कारतन्मात्राणि सप्तापि किञ्चि-

त्यादय एव ज्ञायन्ते । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति हि कापिलानां प्रसिद्धिः; अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपरः ॥

इति प्राप्ते प्रचक्ष्महे,— "नसङ्ख्योपसङ्ग्रहादपी"ति । 'पञ्च पञ्चजना' इति पञ्चविंशतितत्त्वसङ्ख्योपसङ्ग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः कुतः ? नानाभावात्— एषां पञ्चसङ्ख्यविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात् । "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित" इत्येतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं

---

* श्रुतप्रकाशिका *

तस्मिन् प्रतिष्ठित इत्यादरातिशयादुक्तिर्हि सम्भवति । राद्धान्तं प्रारभते ( न सङ्ख्येति ) नानाभावादिति । नानाभावः— पृथक्त्वम् अन्यत्वं विवक्षितं न तु बहुत्वम् 'विना नानाहिरुक्पृथ'गिति नैघण्टुकाः, तन्त्रसिद्धतत्त्वेभ्यः पृथग्भावोऽन्यत्वं ब्रह्मात्मकत्वं यस्मिन्निति सप्तम्यर्थमभिप्रेत्याह ( यच्छब्दनिर्दिष्टब्रह्माश्रयतयेति ) यच्छब्दनिर्दिष्टस्य ब्रह्मत्वमुपपादयति ( तमेवमिति )

* भावप्रकाशिका *

दपेक्षया विकृतयः, किञ्चिदपेक्षया प्रकृतयश्च, पञ्च भूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेति षोडशापि तत्त्वानि विकृतिभूतान्येव, न प्रकृतिभूतानि, पुरुषस्तु न प्रकृतिर्नापि विकृतिश्चेति श्लोकार्थः । भाष्ये—तमिति परामर्शेनेति, 'तमात्मानं ब्रह्मामृतम् एवमन्यो विद्वानमृतो भवती'ति तच्छब्दनिर्दिष्टस्य मन्त्रवर्णे ब्रह्मत्वाविष्करणादिति भावः, ननु विश्वसृजामयने 'पञ्चपञ्चाशतस्त्रिवृत्सम्वत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशा" इत्यादौ पञ्चाशति पञ्चाशत्सहस्र अनुगतोपाध्यभावेऽपि तथा तथा निर्देशवत् . इहापि पञ्चसु पञ्चसु

हि प्रतीयते ; "तमेवं मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृत"मित्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते । अतस्तेभ्यः पृथग्भूताः 'पञ्च पञ्चजना' इति न तन्त्रसिद्धा एते । अतिरेकाच्च, तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति यच्छब्दनिर्दिष्ट आत्मा आकाशश्चात्रातिरिच्येते । अतः 'तं षड्विंशकमित्याहुः सप्तविंशमथापर' इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतः सर्वेश्वरेश्वरः परमपुरुषोऽत्राभिधीयते । न सङ्ख्योपसङ्ग्रहादपीत्यपिशब्दस्य 'पञ्च पञ्चजना' इत्यत्र पञ्चविंशतितत्वप्रतिपत्तिरेव न सम्भवतीत्यभिप्रायः । कथं पञ्चभिरारब्धसमूहपञ्चकासम्भवात् ; नहि तन्त्रसिद्धतत्वेषु पञ्चसु पञ्चस्वनुगतन्तत्तत्सङ्ख्यानिवेशनिमित्तं जात्याद्यस्ति, न च वाच्यं पञ्च कर्मेन्द्रियाणि पञ्च

---

* श्रुतप्रकाशिका *

नानाभावो व्याख्यातः । अथातिरेकं व्याचष्टे ( तन्त्रेति ) अतिरेकः— सङ्ख्याधिक्यम् अतस्तं षड्विंशकमिति कालस्य प्रकृतिविकाराणां विशेषणतयाऽन्तर्भावेन षड्विंशकत्वं कालस्य स्वतन्त्रवस्तुत्वाभिप्रायेण सप्तविंशकत्वमित्यर्थः । साङ्ख्यप्रसिद्धादपि श्रुतिप्रसिद्धं ग्राह्यम् अन्तरङ्गत्वादिति भाववानाह ( श्रुतिप्रसिद्धेति ) अपि शब्दाभिप्रेतमर्थमाह ( न सङ्ख्येत्यादिना ) ( पञ्चभिरारब्धसमूहपञ्चकाभावादिति ) अनेन पञ्चस्वनुगतोपाध्यभावादित्युक्तम्भवति , एकोपाधिगृहीतत्वं हि समूहत्वम् , पञ्चस्वनुगतानुपाधीनाशङ्क्याह ( न च वाच्यमिति ) आकाशस्य पृथक्करणात् घ्राणपञ्चमेषु वाय्वादिषु मनः-

छ भावप्रकाशिका छ

अनुगतोपाध्यभावेऽपि लक्षणया पञ्चविंशतिसङ्ख्याप्रतीतिः सम्भवतीति अस्वारस्यं

ज्ञानेन्द्रियाणि पञ्च महाभूतानि पञ्च तन्मात्राण्यवशिष्टानि पञ्च—इत्यवान्तरसङ्ख्यानिवेशनिमित्तमस्त्येवेति, आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः, अतः पञ्चजना इत्ययं समासो न समाहारविषयः, अयन्तु "दिक्सङ्ख्ये संज्ञाया"मिति संज्ञाविशेषविषयः, अन्यथा पञ्चजना इति लिङ्गव्यत्ययश्च। पञ्चजना नाम केचित्सन्ति ते च पञ्चसङ्ख्यया

---

* श्रुतप्रकाशिका *

पञ्चमेषु रसनादिषु गुणत्रयमहदहङ्कारेषु चानुगतोपाध्यभावादित्यर्थः । भूतसमूहासिद्धेरित्युपलक्षणं सत्त्वरजस्तमसां गुणत्वेन श्रुतिस्मृतिप्रसिद्धानां द्रव्यत्वाभावादात्माकाशाभ्यां सप्तविंशतितत्त्वप्रतीतिरपि परस्याऽनुपपन्ना । किञ्च "सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् । त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायत" इति महदहङ्कारयोश्च त्रिविधत्वावगमादेकत्रिंशत्सङ्ख्यात्वन्तत्त्वानां प्रसजेत् अतश्चैतन्मन्त्रप्रतिपन्नतत्त्वसङ्ख्याविरोधः, अतस्सत्त्वरजस्तमसां द्रव्यतया बहुत्वेन निर्वाहोऽनुपपन्नः, यस्मिन्निति निर्देशस्य स्वे महिम्नीतिवत् निर्वाहोऽनुपपन्नः, सप्तम्यन्तस्ववाचिपदाश्रवणेन स्वप्रतिष्ठितत्वकल्पनायोगात्, आकाशस्यादरातिशयात् पृथगुक्तिरित्यप्ययुक्तम्, ततोऽपि तत्कारणतत्त्वानां वैपुल्ये सति तदनादरेणाकाशस्य पृथगुक्त्यनुपपत्तेः । साक्षान्निर्वाहमाह ( अयं त्विति ) सञ्ज्ञाविषयत्वोपपादनाय समाहारविषयत्वे शब्ददूषणमाह ( अन्यथेति ) लिङ्गव्यत्ययश्च क्लिष्ट इत्यर्थः । अर्थदूषणं हि समूहासिद्धिलक्षणमुक्तं पञ्चजन—शब्दस्य तन्त्रसिद्धार्थविषयत्वे व्युदस्ते अर्थान्तरसद्भावमाह— ( पञ्चजनानामिति ) पञ्चशब्दस्य च तेष्वर्थवत्त्वमाह ( ते चेति ) ननु सञ्ज्ञात्वेऽप्यजहदवयवार्थैव पञ्चजनशब्दवृत्तिः, अन्यथा निरर्थकतत्त्वसङ्ख्यावाचित्वाभावेन समाससामर्थ्याभा-

* भावप्रकाशिका *

हृदि निधायाह, ( भूतसमूहासिद्धेरित्युपलक्षणमित्यादिना ) ( तेष्वर्थवत्त्वमाहेति ) समस्तपञ्चजनशब्देनैव पञ्चत्वसङ्ख्यायाः प्रतीतत्वात्पुनः पञ्चशब्देन विशेषणम् व्यर्थ-

**विशेष्यन्ते— पञ्च पञ्चजना इति, सप्त सप्तर्षय इतिवत् ॥ ११ ॥**

* श्रुतप्रकाशिका *

वात्, न हि निरर्थकशब्दस्य समाससामर्थ्यम्, ततश्च सङ्ख्याविशिष्टार्थप्रतिपत्तौ पुनः सङ्ख्ययाविशेषणमनुपपन्नमिति शङ्कां निराचिकीर्षुराह ( सप्त सप्तर्षय इतिवदिति ) सप्त सप्तर्षयोऽमला इति श्रीमद्वैष्णवपुराणप्रयोगोऽभिप्रेतः, तत्राऽयमभिसन्धिः, सञ्ज्ञिपदप्रतिपन्ना सङ्ख्या शाखावदुपलक्षणभूता सञ्ज्ञिप्रतिपत्त्यर्था, न तु सञ्ज्ञिनि ज्ञाप्ये विशेषणतयाऽन्तर्भूता, अतो यथा गच्छतीति गौरिति व्युत्पत्तावपि गमनस्य तटस्थत्वात्तात्पर्याविषयतया वाक्यार्थान्वयित्वाभावेन गौर्गच्छति गौस्तिष्ठतीत्यत्र न पुनरुक्तिर्व्याघातो वा, तटस्थस्यास्य वाक्यार्थान्वये अविवक्षितेऽ प्रतिपादनस्याकाङ्क्षितत्वाच्च गच्छतीति पुनरुक्तिः, अवयवोवस्थापितस्य गमनस्याऽविवक्षितत्वान्न तिष्ठतीति व्याघातः। एवं सञ्ज्ञिपदप्रतिपन्नसङ्ख्याया व्युत्पत्तिसमये तटस्थत्वेनावगतायास्तात्पर्याविषयत्वात् पुनर्वाक्यार्थान्वयित्वज्ञापनाय पञ्चशब्देन सङ्ख्याया विशेषणत्वज्ञापनं युक्तम्,

७ भावप्रकाशिका ७

मितिशङ्कां व्युदसितुमर्थवत्त्वमाहेत्यर्थः, ( समाससामर्थ्याभावादिति ) समासस्य सामर्थ्यं नाम समर्थपदाश्रितत्वम्, पदानां सामर्थ्यं नाम परस्परसंसृष्टार्थत्वम्, ततश्च पञ्चशब्दस्य निरर्थकत्वे परस्परसंसृष्टार्थपदाश्रितत्वलक्षणसामर्थ्यं न स्यादिति भावः; अत्रायमभिसन्धिरित्यादेरयमर्थः, साधुत्वान्वाख्यानप्रवृत्ता वैयाकरणाः सन्तमसन्तं वा कञ्चिदर्थं परिकल्प्य व्युत्पादयन्ति, नच तावता तत्पदात्तदर्थप्रतीतिरस्ति, नहि गौरित्युक्ते गच्छतीति प्रतीतिरस्ति, ततश्च पञ्चजनशब्दस्य प्रत्यस्तमितावयवार्थकत्वात्पञ्चत्वसङ्ख्यया विशेषणमुपपन्नम्; किञ्च. वासस्वी देवदत्तपदवाच्यः यः पञ्जरस्थः स सिंह इत्यादौ व्युत्पत्तिग्रहकाले वासःप्रभृतीनामुपलक्षणत्वेऽपि नाभिधानकाले प्रतीतिरिति वासस्वी देवदत्त इत्यादौ न पौनरुक्त्यादिकम्. तथेहापीति पञ्चशब्दविशेषणोपपत्तिः। किञ्च. अभिधानदशायामवयवार्थप्रतिपत्तौ सत्यामपि यदा कदाचित् तदर्थसत्तामात्रं प्रतीयते, नतु प्रयोगकाले तत्सत्ताप्रतीतिरिति गौर्गच्छतीति प्रयोगसाफल्यम्, तद्वदिहापि तादात्विकपञ्चत्वसङ्ख्या-

के पुनस्ते पञ्च पञ्चजना इत्यत्राह—

प्राणादयो वाक्यशेषात् ॥ १२ ॥

"प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नम्मनसो मनो ये विदुः" इति वाक्यशेषात् ब्रह्म-

* श्रुतप्रकाशिका *

पदद्वयस्य सामर्थ्यं चेदमेव यद्विग्रहवाक्येऽर्थाभिधानशक्तिः, अत समास उपपन्नः, अतोऽर्थस्याविवक्षितत्वात् पुनस्तया सङ्ख्यया विशेषणं सफलमिति, अन्यैस्तु नानाभावादिति पदमेकीकारोपाध्यभावात् समूहासिद्धिपरं व्याख्यातन्तदानीं शब्दस्वारस्याभावः स्फुटतरः, अपि शब्दवैयर्थ्यं च स्यात्, अपिशब्दो हि पञ्चविंशतितत्वप्रतिपत्त्यभ्युपगमेन दूषणोक्तिं द्योतयति, अतः पञ्चभिरारब्धसमूहपञ्चकासम्भवकं पञ्चविंशतितत्वाप्रतिपत्तिहेतुमभिप्रेत्य पुनस्तदभ्युपगमेऽपि तन्त्रप्रसिद्धतत्वपरत्वं यथा व्युदस्तं भवति तथा भाष्ये दर्शितैव योजना युक्ता शब्दानुरोधिनी च ॥ ७ ॥ उत्तरसूत्रस्याकाङ्क्षां दर्शयति (के पुनरिति) सङ्ख्यापूर्वसमासत्वमयुक्तमस्मिन्वाक्ये सङ्ख्येयविशेषाप्रतिपत्तेरित्यर्थः। प्राणादयो वाक्यशेषात् ॥ ननु किमनेन सूत्रेण. कर्ममीमांसायां "सन्दिग्धे तु वाक्यशेषादिति" वाक्यशेषात्सन्देहनिरासस्य कर्तव्यत्वं हि निर्णीतं शास्त्रैक्य-

* भावप्रकाशिका *

न्वयप्रतीतिसिद्ध्यर्थं पञ्चेति विशेषणं सफलमेव, अत एव 'पञ्चजनादुपसङ्ख्यान' मिति वार्तिके कथमत्रैकवचनमित्याक्षिप्य पूर्वेषुकामशम्यादिवत्समुदायवृत्तस्यावयवेऽपि वृत्त्यैकवचनम्. यथा सप्तर्षिरिति, ततश्च 'द्वौ पञ्चजनौ त्रयः पञ्चजनाः पञ्च पञ्च जनाः' इत्यादिसङ्ख्यासामानाधिकरण्यं विरुद्धम्। यथा द्वौ सप्तर्षिः त्रयः सप्तर्षयः' इति कैय्यटपदमञ्जर्यादौ अभिधानान्न व्याख्यानपौनरुक्त्यादिकमिति द्रष्टव्यम् (यद्विग्रहवाक्येर्थाभिधानशक्तिरिति) ततश्च विग्रहवाक्याभिधाने स्वरूपयोग्यत्वमस्ति, ततः समाससामर्थ्यमप्यस्तीति भावः। (पञ्चविंशतितत्वाप्रतिपत्तिमभिप्रेत्येति) पञ्चविंशतितत्वाप्रतिपत्तिहेतौ समूहपञ्चकासम्भवेपि प्रतिवर्तमान एवेत्यर्थः ॥ (सन्दिग्धे तु वाक्यशेषादिति) ननु पञ्चजनशब्दरू-

श्रयाः प्राणादय एव पञ्च पञ्चजना इति विज्ञायन्ते ॥१२॥

अथ स्यात्काण्वानां माध्यन्दिनानाञ्च "यस्मिन्पञ्च पञ्चजना" इत्ययं मन्त्रः समानः, 'प्राणस्य प्राण'मित्यादिवाक्यशेषे काण्वानामन्नस्य पाठो न विद्यते, तेषां

* श्रुतप्रकाशिका *

स्त्राभिमतम्, अत एव हि स्मृत्यधिकरणादिषु कर्मविचारोक्तन्यायैः कृतकरत्वमाशङ्क्य भाष्ये परिह्रियत इति. नैवं वाक्यशेषात्सन्देहव्युदासः कार्य्य इत्येतावन्मुपजीव्येऽपि वाक्यशेषयोरेव निर्णीतार्थत्वानिर्णीतार्थत्वरूपवैषम्यात् "तेजो वै घृत"मिति वाक्यस्य घृतसमर्पकत्वे हि न सन्देहः, इह तु अनिन्द्रियवाचिप्राणान्नशब्दसमभिव्याहारात् वाक्यशेषस्येन्द्रियपरत्वे सन्देहानपगमात्, प्राणादिषु पञ्चसङ्ख्यानिवेशनिमित्तैकोपाध्यभावात् प्राणादीनामेव पञ्चजनशब्दवाच्यत्वानुपपत्तेः, इन्द्रियत्वरूपैकोपाधिसिद्ध्युपपादनेन वाक्यशेषार्थनिर्णयाय सूत्रप्रणयनं प्रयोजनवत् संदेहव्युदासकश्चात्राग्र्यप्रायन्यायोऽभिप्रेतः, प्राणान्नशब्दौ द्वौ चक्षुश्श्रोत्रमनःशब्दास्त्रयः. अतस्तदनुगुणतया प्राणान्नशब्दयोरपीन्द्रियपरत्वात् प्राणादयः पदार्था इन्द्रियाणीति त एव पञ्चजना इत्यर्थः ॥

अनन्तरसूत्रस्य शङ्कामाह ( अथ स्यादिति ) पञ्च पञ्चजनाः प्राणादय इति न शक्यं वक्तुमिति काण्वानामन्नपाठवैकल्येन प्राणादिषु पञ्चसङ्ख्यानिवेशा-

* भावप्रकाशिका *

ढ्या मनुष्याणामेव निश्चयसम्भवान्न सन्देहोदय इति चेत्. न, अध्यात्मप्रकरणे पञ्चमनुष्याः प्रतिष्ठिता इत्यर्थपरिग्रहे वाक्यस्य निस्तात्पर्यत्वप्रसङ्गात् पञ्चशब्दस्य वृत्तिसङ्ख्यापरत्वं विहाय ब्राह्मणत्वाद्यवान्तरोपाधीनादाय पञ्चविधा मनुष्या इति वाक्यार्थः समाश्रयणीयः, उत वाक्यशेषगताः प्राणादयो वेति सन्देहे सति 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनो ये विदुः ते निश्चिक्युः ब्रह्म पुराणमग्र्यम्' इति प्राणादीनां ब्रह्माधीनप्राणनादिव्यापारसामर्थ्यप्रतिपादकवाक्यशेषवशेन निर्णयसम्भवादिति भावः, ( पञ्चसङ्ख्यानिवेशनिमित्तैकोपाध्यभावादिति ) यद्यपि प्राणादीनामिन्द्रियत्वरूपैकोपाध्यभावेऽपि ब्रह्मा-

पञ्च पञ्चजनाः प्राणादय इति न शक्यं वक्तुमिति ; अत्रोत्तरम्—

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानां पाठे असत्यन्ने ज्योतिषा पञ्च-

* श्रुतप्रकाशिका *

नुपपत्तेः पञ्चजनत्वमयुक्तमितिभावः । ननु सर्वशाखाप्रत्ययन्यायेन माध्यन्दिन-पाठस्य काण्वपाठेऽप्युपजीव्यत्वात् पञ्चसङ्ख्योपपत्तेर्न सूत्रान्तरापेक्षा, सत्यम्, मा भूच्छाखान्तरीयं वाक्यमिति कृत्वा स्वप्रकरणेनैव प्राणादीनां पञ्चसङ्ख्योपपत्त्या पञ्चजनत्वसिद्धिप्रतिपादनार्थं सूत्रमग्र्यप्रायन्यायतिरस्कारकानुपपत्त्यन्तर-शङ्कापरिहारश्चार्थोत्सिध्यति ; सर्वशाखाप्रत्ययन्यायेन अनुक्तस्यान्नपाठस्याऽन्यतो ग्रहणेऽपि कैश्चिद्धेतुभिः प्राणादीनामिन्द्रियत्वनिश्चयदौस्थ्येन पञ्चशङ्ख्या-निवेशनिमित्ताभावात् पञ्चजनत्वमनुपपन्नमिति शङ्काऽवतिष्ठते । प्राणादीनामि-न्द्रियत्वे हि प्राणान्नशब्दयोरस्वारस्यद्वयं स्यात्. प्राणशब्दश्चोपक्रमस्थो न भञ्ज-नीयः, अन्नशब्दस्य तन्त्रेणार्थद्वयपरत्वं च क्लिष्टम्, अतोऽग्र्यप्रायन्यायस्यानेक-हेत्वभिभूतस्याकिञ्चित्करतया प्राणादीनामिन्द्रियत्वमशक्यनिश्चयम्, अतः काण्वपाठेऽपि माध्यन्दिनाधीतान्नपाठोपजीवनमनपेक्षितं स्यात्, प्राणा-दीनामिन्द्रियत्वानिश्चयात्तन्निश्चये सति ह्यनुक्तेन्द्रियग्रहणापेक्षा, एवमिन्द्रिय-त्वानिश्चयेन पञ्चसङ्ख्यानिवेशनिमित्तैकोपाध्यभावात् क्वचिन्न्यूनतया च पञ्च-सङ्ख्यानिवेशायोगात्, न प्राणादीनां पञ्चजनत्वमिति शङ्कापरिहारार्थं सूत्रम् । नन्विन्द्रियत्वानिश्चयहेतवः शङ्काग्रन्थेऽनुक्ताः, सत्यम्. उत्तरत्र परिहारादिहाभिप्रेत-त्वमवगम्यते, यथाऽन्तरादित्याधिकरणे सिद्धान्ते परिहारदर्शनात् पूर्वपक्षे-ऽप्यभिप्रेतत्वावगमः ॥छ॥ ज्योतिषैकेषामसत्यन्ने ॥ ज्योतिषा षष्ठ्यन्तज्योतिश्शब्दे-

छ भावप्रकाशिका छ

धीनस्वव्यापारतया 'प्राणस्य प्राण'मितिवाक्यशेषप्रतिपाद्यत्वमेकोपाधिरिति शक्यते वक्तुम्, तथापि सति गत्यन्तरे प्रसिद्धोपाधेरेव स्वीकरणार्हत्वादिति भावः (अन्तरादित्याधिकरण इति) शरीरस्य त्रिगुणात्मकत्वप्रकृतिपरिणामित्वशङ्कापरि-

जना इन्द्रियाणीति विज्ञायन्ते; तेषां वाक्यशेषः प्रदर्शनार्थः। एतदुक्तम्भवति—'यस्मिन् पञ्च पञ्चजना' इत्यस्मात् पूर्वस्मिन्मन्त्रे "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति। ज्योतिषां ज्योतिष्ट्वेन ब्रह्म-

* श्रुतप्रकाशिका *

नेत्यर्थः, सूत्रेऽपि ज्योतिश्शब्दः—शब्दस्वरूपार्थः, श्रुतिवाक्यस्वारस्यसिद्ध्यौपयिकत्वात्, सूत्रस्थज्योतिश्शब्दास्वारस्यं सोढव्यमिति भावः। परैर्हि 'तन्देवा ज्योतिषां ज्योति'रिति द्वितीयान्तज्योतिश्शब्दनिर्दिष्टब्रह्मणा पञ्चसङ्ख्यासिद्धिरुक्ता, तदानीमेकस्य मन्त्रस्य शाखाद्वयगतस्य एकार्थत्वप्रत्यभिज्ञानभङ्गेन ब्रह्मपञ्चमतयाऽन्नपञ्चमतया च पञ्चजनशब्दनिर्वाहस्वारस्यमवर्जनीयं स्यात्। किञ्च यस्मिन्नित्याधारतया ब्रह्मणो निर्दिष्टत्वेन प्राणादिषु पञ्चमस्यापि प्राणादिचतुष्टयवत् ब्रह्मव्यतिरिक्तत्वप्रतीतेश्च ब्रह्मणः पञ्चमत्वमयुक्तं, 'स्वे महिम्नि प्रतिष्ठित' इतिवन्निर्वाह इति चेन्न. सप्तमीप्रतिष्ठितशब्दयोर्मुख्यार्थे सम्भवत्यमुख्यार्थस्वीकारायोगात्, अतः पञ्चजनशब्दसप्तमीविभक्तिप्रतिष्ठितशब्दानामर्थवैरूप्यास्वारस्यप्रसङ्गात्, ज्योतिःपञ्चमत्वपरत्वमनुपपन्नमिति मन्वानेन भगवता भाष्यकारेण षष्ठ्यन्तज्योतिश्शब्दस्वरूपपरतया ज्योतिःपदं व्याख्यातम्, इन्द्रियाणीति ज्ञायन्ते चेत्कथं वाक्यशेषेचतुष्टयकीर्त्तनमित्यत्राह (तेषामिति) ज्योतिश्शब्दस्य कोऽर्थः तेनेन्द्रियाणीति कथं ज्ञायन्ते ततः किमन्नपाठवैकल्यचोद्यस्येत्यत्राह (एतदुक्तमिति) ब्रह्माधीनस्वकार्याणीत्यनेन प्राणस्य प्राणमित्यादेरर्थ उक्तः, पवित्राणाम्पवित्रमितिवदिति भावः। ज्योतींषीत्यनेन प्रकाशकत्वमभिप्रेतन्ततश्च कर्मेन्द्रियादिव्यावृत्तिसिद्धिः. तेषां प्रकाशकत्वाभावात्

* भावप्रकाशिका *

हारदर्शनाद् यथा पूर्वपक्षेऽपि तच्छङ्काया अभिप्रेतत्वावगम इति भावः। ननु परमतवद्द्वितीयान्तज्योतिश्शब्दार्थपरामर्शित्वं किन्न स्यादित्याशङ्क्याह (श्रुतिवाक्यस्वारस्येति) (अस्वारस्यं सोढव्यमिति) तच्चानुपदमेव स्फुटीभविष्यति (परैर्हीति) ननु परैः षष्ठ्यन्तज्योतिश्शब्दनिर्दिष्टेनादित्यादिज्योतिषा इव सङ्ख्यापूर्णमित्येवोक्तम्, असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसङ्ख्या पूर्येत,

एयभिधीयमाने ब्रह्माधीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि ; तानि च विषयाणां प्रकाशकानीन्द्रियाणीति "यस्मिन्पञ्च पञ्चजना" इत्यनिर्द्धारितविशेषनिर्देशेनावगम्यन्त इति । प्राणस्येति प्राणशब्देन स्पर्शेन्द्रियङ्गृह्यते । वायुसम्बन्धित्वात्स्पर्शेन्द्रियस्य मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात् । चक्षुष

* श्रुतप्रकाशिका *

( कानिचिदिति ) आदित्यादिज्योतींषि न वेति संशयविशेषनिर्धारणाकाङ्क्षा तिष्ठतीति भावः । ततः किमित्यत्राह– ( तानि चेति ) अनिर्धारितविशेषनिर्देशेनेति सङ्ख्येयविशेषोपस्थापकवाक्यान्तरसाङ्काङ्क्षत्वं द्योतितम् , ततश्च तत्र श्रुतपञ्चसङ्ख्याविशेषितत्वात् पञ्चसङ्ख्याज्योतिरन्तरप्रसिद्ध्यभावाच्च परिशेषेणेन्द्रियत्वावगमः, एवं वाक्यशेषस्याप्युपक्रमभूतेन परस्परसाकाङ्क्षेण मन्त्रद्वयेनेन्द्रियाणाम्प्रतिपादितत्वात् षष्ठ्यन्तज्योतिश्शब्दोक्तानां तेषां चक्षुषः श्रोत्रस्य मनस इति षष्ठ्यन्तैः पदैः प्रत्यभिज्ञायमानत्वाच्च वाक्यशेषस्येन्द्रियपरत्वमभिप्रेत्य प्राणशब्दं व्याचष्टे ( प्राणस्येतीति ) वायुसम्बन्धित्वाद्वाय्वाप्यायितत्वात् प्रसिद्धः प्राणः कस्मान्न गृह्यत इत्यत्राह ( मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगादिति ) ज्योतिश्शब्देन ज्योतिरित्यत्र षष्ठ्यन्तज्योतिश्शब्देनेत्यर्थः, अनेन मुख्यान्नस्य च ज्योतिश्शब्देन प्रदर्शनायोगो विवक्षितः, स्पष्टार्थानामपि

ॐ भावप्रकाशिका ॐ

तेऽपि हि 'यस्मिन् पञ्च पञ्चजना' इत्यतः पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते, 'तं देवा ज्योतिषां ज्योतिः' इतीति भाष्यम्– व्याकुर्वता आनन्दगिरिणाऽस्मिन् मन्त्रे षष्ठ्यन्तज्योतिषा पञ्चपूर्णान्नत्वात्मज्योतिषा, तस्यैकस्य नाधाराधेयत्वादिति व्याख्यातत्वादिति चेन्न, यदि षष्ठ्यन्तज्योतिश्शब्दार्थग्रहणं तदा 'ज्योतिर्भि'रिति सूत्रं प्रणेतव्यम् स्यात् , यदि च द्वितीयान्तज्योतिश्शब्दार्थः तदाधाराधेयत्वाद्यनुपपत्तिरिति विकल्पमभिप्रेत्य दूषणमुक्तमिति द्रष्टव्यम् , ( परस्परसाकाङ्क्षेणेति ) 'पञ्च पञ्चजना' इति मन्त्रेण लभ्यते' नापि 'तं देवा' इति

इति चक्षुरिन्द्रियम्, श्रोत्रस्येति श्रोत्रेन्द्रियम्, अन्नस्येति घ्राणरसनयोः तन्त्रेणोपादानम् , अन्नशब्दोदितपृथिवीसम्बन्धित्वात् घ्राणेन्द्रियमनेन गृह्यते । अद्यतेऽनेने-

* श्रुतप्रकाशिका *

चक्षुश्श्रोत्रादिपदानां व्याख्यानं किमर्थम्. षष्ठ्यन्तज्योतिश्शब्दाभिहितानां षष्ठ्यन्तपदैरेकैकश उच्यमानत्वज्ञापनार्थम्, तेन हि पूर्वसूत्राभिप्रेतसाम्यप्रायन्यायस्य हेत्वन्तराभिभूतस्य पूर्वमन्त्रद्वयसाहचर्योत्तम्भितत्वेन इदानीं प्राबल्यं ज्ञायते , एवञ्च सति प्राणशब्दस्य उपक्रमस्थत्वमकिञ्चित्करं तस्याप्युपक्रमभूतमन्त्रद्वयप्राबल्यादतो न प्राणान्नशब्दमुख्यार्थानुगुणमितरपदानि व्याख्येयानि, पदत्रयस्वारस्यानुगुणपदद्वयस्य व्याख्येयत्वात् , न ह्यनेकपदस्वारस्यभङ्ग उचित इत्यभिप्रायेण चक्षुःश्रोत्रमनांसि त्रीण्यपि स्वशब्दैनैव व्याख्यातानि, एवमुपक्रमैकार्थ्यात् प्राणादीनामिन्द्रियत्वे निश्चिते सत्यनुक्तेन्द्रियस्वीकारस्याऽपेक्षितत्वात् सर्वशाखाप्रत्ययन्यायेन काण्वपाठेऽप्यन्नपाठः सिद्ध इति उभयसाधारणमन्नशब्दं व्याचष्टे ( अन्नस्येति ) ननु 'यस्मिन्' इत्यादिमन्त्रे पञ्चसङ्ख्यावगमाद्धि ज्योतिषामिन्द्रयत्वमध्यवसितम् अतो वाक्यशेषस्येन्द्रियपरत्वनिश्चय उपक्रममन्त्रसापेक्षः, मन्त्रश्च विशेषकीर्तनाय वाक्यशेषसापेक्ष इत्यन्योन्याश्रय इति. नैवम्, उपक्रमस्थमन्त्रद्वयस्येन्द्रियपरत्वनिश्चयो वाक्यशेषानाकाङ्क्षत्वात्. वाक्यशेषस्येन्द्रियपरत्वनिश्चय एव ह्युपक्रमसाकाङ्क्षः , एवमुपक्रमादेवेन्द्रियत्वेऽवगते प्रत्येककीर्तनं वाक्यशेषस्थमिति न तावताऽन्योन्याश्रय इति , अन्नशब्दं व्याचष्टे ( अन्नस्येति ) अन्नशब्दस्य घ्राणरसनोपस्थापकत्त्वङ्कथमित्यपेक्षायाम् अन्नशब्दस्य घ्राणवाचित्वन्दर्शयति ( अन्नशब्दोदितेति ) पृथिवीसम्बन्धित्वात् पृथिव्याप्यायितत्वाल्लक्षणयेत्यर्थः । रसनावाचित्वमुपपादयति ( अद्यत इति ) लक्षणया बोधकत्वन्दर्शयितुमन्नशब्दवाच्यभोग्यवस्तुविनि-

७ भावप्रकाशिका ७

पूर्वमन्त्रेण , अतस्तदर्थनिर्णये परस्परसाकाङ्क्षेत्यर्थः , ( स्वशब्दैनैव व्याख्यातानीति ) चक्षुष इति चक्षुरिन्द्रियमित्येवं चक्षुरादिशब्दैरेव व्याख्यातानीत्यर्थः । अन्नशब्दं व्याचष्टे ( अन्नस्येतीति ) द्विः पठ्यते , न तस्य

त्यन्नमिति रसनेन्द्रियमपि गृह्यते, मनस इति मनः, घ्राणरसनयोस्तन्त्रेणोपादनमिति पञ्चत्वमप्यविरुद्धम् प्रकाशकानि मनः पर्य्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि, तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानम् । तदेवं "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित" इति

* श्रुतप्रकाशिका *

योगे कारणतया सम्बन्धः प्रदर्श्यते (अद्यतेऽनेनेति) अद्यतेऽनेनेत्येवंरूपसम्बन्धादन्नमिति रसनेन्द्रियं गृह्यते अन्नशब्देन रसनेन्द्रियं लक्ष्यत इत्यर्थः । अनेन घ्राणस्याऽऽप्याय्यतया सम्बन्धः तद्विनियोगकरणतया रसनायाः, अतोऽन्नसम्बन्धिवस्तुलक्षयताऽन्नशब्देन घ्राणरसनयोरेकव्यापारेण लक्षणा भवतीति भावः । न तर्हि पञ्चत्वसिद्धिः. मनसः षष्ठत्वादित्यत्राह (घ्राणरसनयोरिति) (पञ्चत्वमप्यविरुद्धमिति) पञ्चत्वं न निर्देश्यापेक्षया किन्तु निर्देशापेक्षयेत्यर्थः तन्त्रेणोपादानकल्पकं किमित्यत्राह (प्रकाशकानीति) प्रकाशकत्वं पञ्चसङ्ख्याविशिष्टत्वं मनः पर्यन्तमिन्द्रियाणामुक्तत्वेन पारिशेष्यञ्च घ्राणरसनयोस्तन्त्रेणोपादानकल्पकं घ्राणरसनसमुदायगतमेकत्वं पञ्चजनविशेषणभूतायाः पञ्चसङ्ख्याया अवान्तरसङ्ख्यात्वेन विवक्षितमित्यर्थः, अवयवगतद्वित्वानादरेण समुदायगतैकत्वविवक्षया पञ्चसङ्ख्यानिर्देशश्च श्रुतिसमाधिः, यथा द्वादशमासाः पञ्चर्तव इति षट्के सत्यपि हेमन्तशिशिरसमुदायगतैकत्वविवक्षया हि तत्र पञ्चत्वसङ्ख्याव्यपदेशः, 'वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामी'त्यादिना सर्वानृतून् प्रत्येकं निर्दिश्य हेमन्तशिशिरावृतूनां प्रीणामीति सह व्यपदेशाद्धेमन्तशिशिरसमुदायगतैकत्वं पञ्चर्तव इत्यत्र विवक्षितमिति ज्ञायते, एवमस्मिन्वाक्ये फलितमर्थमाह (तदेवमिति) पञ्चजनशब्दनिर्दिष्टानि प्रदर्शितानीत्यर्थः, अत एव हीन्द्रियाणीत्युक्तम् न तु ज्ञानेन्द्रियाणीति,

* भावप्रकाशिका *

प्रयोजनं पश्यामः (लक्षणाया बोधकत्वं दर्शयितुमिति) यौगिकार्थस्वीकारेऽन्नशब्दस्य वृत्तिद्वयविरोधप्रसङ्गादिति भावः (एकव्यापारेणेति) अन्नसम्बन्धित्वरूपैकव्यापारेणेत्यर्थः, (प्रदर्शितानीत्यर्थ इति) निर्दिष्टशब्दस्य प्रद-

पञ्चजनशब्दनिर्दिष्टानीन्द्रियाणि आकाशशब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः । अतः सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावे वा न कापिलतन्त्रसिद्धतत्त्वप्रतीतिरस्तीति स्थितम् । ॥ सङ्ख्योपसङ्ग्रहाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

महाभूतशब्देन भूततन्मात्राण्यपि विवक्षितानि सर्वतत्त्वानां सर्वाश्रयत्वप्रतिपादनादित्युक्तेः, एवं सङ्ख्याभ्युपगमात्तदनभ्युपगमाच्च द्विधा परिहृतम्, एवम्परिहारद्वयकथनस्याऽपि प्रयोजनं वदन्नुपसंहरति ( अत इति ) (सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावेचेति) अनेन ग्रन्थेन अनन्तरसूत्रस्य यादवप्रकाशमतयोजनाव्युदासो हेलया कृतो भवति, स खलु कारणत्वेनेत्यादिसूत्रं तदुत्तरसूत्रात्पृथगधिकरणत्वेन वर्णयन् "स वा एष पुरुषः पञ्चधा पञ्चात्मे"ति वाक्यं विषयमुदाहरत्, तदयुक्तं कृतकरत्वादित्यनेन दर्शितम्भवति, पञ्चसङ्ख्याभिनिवेशनिमित्तैकाकारासिद्ध्या समूहपञ्चकासिद्धेः पञ्चविंशतितत्त्वप्रतिपादनायोगस्तावत्स्थितः, पञ्चात्मेति मृदात्मा घट इतिवदर्थोनुपपन्नः. पुरुषस्य प्रकृतिप्राकृततत्त्वैः स्वरूपैक्यायोगात्. ततश्च प्रत्येकं पञ्चधाभूतपञ्चतत्त्वसङ्घातानामात्मेत्यर्थः स्यात् । तथा सति पञ्चविंशतितत्त्वातिरिक्तात्मा परमपुरुषः स्यात् . पञ्चविंशतितत्त्वानां तदात्मकत्वादब्रह्मात्मकेभ्यस्तन्त्रसिद्धतत्त्वेभ्यो विलक्षणत्वं च स्यादिदं चाभ्युपगम्योक्तम्, वस्तुतः एकैकशः शिरःपक्षादिरूपेण पञ्चविधान्नमयप्राणमयादिरूपतया सद्वारकमद्वारकञ्च पञ्च-

* भावप्रकाशिका *

र्शितत्वमर्थः, ततश्च 'पञ्च पञ्चजना' इत्येतत्सर्वेन्द्रियोपलक्षणमिति भावः ( प्रयोजनं वदन्निति ) सर्वथा साङ्ख्यमतप्रत्याशाभावरूपप्रयोजनं वदन्नित्यर्थः ( पञ्चधाभूतपञ्चतत्त्वसङ्घातानामिति ) ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च , तन्मात्राणि पञ्च , भूतानि पञ्च , अवशिष्टानि पञ्च तेषामात्मेत्यर्थः स्यादिति भावः । ( अद्वारकञ्चेति ) आनन्दमयांशे अद्वारकम्, अन्यत्र सद्वारकमित्यर्थः ॥ ( सङ्ख्या-

## कारणत्वेन चाकाशादिषु यथा-व्यपदिष्टोक्तेः ॥ १४ ॥

४ अधिकरणम्

**पुनः प्रधानकारणवादी प्रत्यवतिष्ठते—**

* श्रुतप्रकाशिका *

प्रकारत्वमुच्यत इति पूर्वाधिकरणसमर्थितादर्थान्न कश्चिद्विशेषः, तस्मादधिकरणान्तरवैयर्थ्यमिति; एवमन्यत्रापि सङ्ख्यासम्भवे तथा वर्णनीयम्, असम्भवे च सङ्ख्यानादरेण निर्वाह्यमिति ज्ञापनं प्रयोजनमित्यर्थः ॥ ७ ॥ .... .... ....

---

कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ सर्वतत्त्वानां यस्मिन्निति ब्रह्माश्रयत्वप्रतीत्या स्वातन्त्र्येण प्रधानस्य कारणत्वं निरस्तम्, अथ स्वातन्त्र्येण कारणत्वं प्रतीयते ब्रह्माश्रयत्वाप्रतीतेरिति शङ्कया सङ्गतिः, तामाह (पुनरिति) अवर्जनीयाचिद्बोधव्याकुलार्थशब्दोपलक्षितकारणवाक्यसमुदायो विषयः. व्याकुलत्वादेव संशयः किं जगत्कारणविषयवेदान्तवाक्यप्रतिपाद्यमव्यक्तम्? उत ब्रह्मेति। किम् 'असद्वा इदमग्र आसीत्' 'तद्धेदन्तर्ह्यव्याकृतमासीदित्यत्रासदव्यक्तशब्दाव्याकृतनामरूपावस्थब्रह्मपरौ? उताव्यक्तपरा? विति। तदर्थं किं तदप्येष श्लोको भवतीति साक्षित्वेन निर्देशोऽसच्छब्दस्य प्रकृतब्रह्मपरतामवगमयति नेति, स एष इह प्रविष्ट इति प्रकाशितुरनुकर्षश्चाव्याकृतशब्दस्य ब्रह्मपरतामवगमयति नेति संशयोऽर्थसिद्धः, यदा 'स एष' इत्यनुकर्षो नाव्याकृतशरीरब्रह्मपरतामवगमयति, यदा च 'तदप्येष' इति निर्देशः प्रकृतब्रह्मपरतामसच्छब्दस्य नावगममति, तदानीमसदव्याकृतशब्दयोरव्याकृतनामरूपावस्थब्रह्मपरत्वाभावात् कारणवाक्यप्रतिपाद्यमव्यक्तमिति प्राप्नोति, यदा "तदप्येष' इति निर्देशोऽसच्छब्दस्य ब्रह्मपरतामवगमयति. यदा च 'स एष' इत्यनुकर्षोऽव्याकृतशब्दस्याव्याकृतशरीरकब्रह्मपर-

७ भावप्रकाशिका ७

सम्भवे तथा वर्णनीयमिति ) ब्रह्मात्मकत्वेन तथा वर्णनीयमित्यर्थः ( असम्भवे-चेति ) अवतारसङ्ख्यानिवेशनिमित्तोपाध्याद्यसम्भवे चेत्यर्थः ॥ .... .... ....

( अवर्जनीयाचिद्बोधेति ) तत्राचित्प्रतिपत्तेरवर्जनीयत्वादेव व्याकुलत्वम्, तादृशकारणवाक्यानि विषयः, सर्वाण्यपि कारणवाक्यानि विषय इत्यर्थः,

न वेदान्तेष्वेकस्मात्सृष्टिराम्नायत इति जगतो ब्रह्मैककारणत्वं न युज्यते । तथाहि "सदेव सोम्येदमग्र आसी"दिति सत्पूर्विका सृष्टिराम्नायते । "असद्वा इदमग्र आसीत्" इत्यसत्पूर्विका च । अन्यत्र "असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्" इति च । अतो वेदान्तेषु सृष्टुरव्यवस्थितेर्जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम् ; प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यव्याकृते प्रधाने जगतः प्रलयमभिधाय "तन्नामरूपाभ्यां व्याक्रियत" इत्यव्याकृतादेव जगतः सृष्टिश्चाभिधीयते । अव्याकृतं ह्यव्यक्तम्, नामरूपाभ्यां न व्याक्रियते न व्यज्यत इत्यर्थः, अव्यक्तं प्रधानमेव । अस्य च

* श्रुतप्रकाशिका *

तामवगमयति तदानीमसदव्याकृतशब्दयोरव्याकृतनामरूपावस्थब्रह्मपरत्वजगत्कारणवाक्यप्रतिपाद्यं ब्रह्मेति सिध्यति, वेदान्तेषु कारणवाक्यानामैककण्ठ्येन हि ब्रह्मकारणत्वमुक्तं तदनुपपन्नम् ऐककण्ठ्याभावादित्याह (न वेदान्तेष्विति) एकस्मादेकरूपात् कारणात् सृष्टुरव्यवस्थितेः— ब्रह्मकारणवादे सृष्टिकारणस्याव्यवस्थितेरित्यर्थः । प्रधानकारणवादे सामञ्जस्यमाह (प्रत्युतेति) नन्वव्याकृतात् सृष्टिः प्रतीयते न प्रधानादित्यत्राह (अव्याकृतं हीति) अव्याकृतत्वं नामरूपविशिष्टतयाऽनभिव्यक्तत्वमस्तु ततः किमित्यत्राह (अव्यक्तं

* भावप्रकाशिका *

एकस्मादित्यस्यैकरूपात्कारणादितिव्याख्यानं दृश्यते न तस्य सामीचीन्यं पश्यामः, 'सत्पूर्विकासृष्टिराम्नायत इति' छान्दोग्ये इति शेषः 'असत्पूर्विका चेति' तैत्तिरीयके इति शेषः 'अन्यत्रेति' बृहदारण्यके इत्यर्थः, ब्रह्मकारणवाद इति निमित्तसप्तमी, ब्रह्मकारणवादौपयिकी सृष्टिकारणाव्यवस्थितिः वेदान्तेषु नास्तीत्यर्थः (सृष्टिकारणस्याव्यवस्थितेरित्यर्थ इति) ततश्च सृष्टिशब्दस्य-

स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवादि-वाक्यगतौ सदसच्छब्दौ ब्रह्मणीवास्मिन्न विरोत्स्येते। एवमव्याकृतकारणत्वे निश्चिते सति ईक्षणादयः कारणगताः सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः। ब्रह्मात्मशब्दावपि बृहत्त्वव्यापित्वाभ्यां प्रधान एव

* श्रुतप्रकाशिका *

प्रधानमेवेति ) परस्परप्रतिक्षेपकार्थविषययोः सदसच्छब्दयोः कथं प्रधानविषयत्वोपपत्ति ? रित्यत्राह ( अस्य चेति ) ब्रह्मणीवेति वैधर्म्यदृष्टान्तः, ननु तद्धेदमिति प्रकरण एव 'पश्यन् चक्षुः शृण्वन् श्रोत्रमि'त्यव्याकृतशब्दवाच्यस्य चेतनत्वमवगम्यते, असच्छब्दस्याप्यव्याकृतशब्दसमानयोगक्षेमत्वाचेतनविषयत्वमापतति. प्रकरणान्तरेषु वेक्षणं श्रूयते, परब्रह्मशब्दस्य चेतनविषयत्वं श्रुतिप्रसिद्धम्, आत्मशब्दस्य चेतनैकान्त इति शङ्कायामीक्षणधर्मयोगं प्रतिवक्ति ( एवमिति ) एवशब्देन कारणवाक्यस्थसदसदादिशब्दानां परमात्मन्यसामञ्जस्यं प्रधाने सामञ्जस्यञ्च पूर्वोक्तत्वात्परामृश्यते— ईक्षणादय इत्यादिशब्देन "स तपोऽतप्यत, इदं सर्वमसृजते" त्यादिवाक्यप्रतिपन्नौ पूर्वापरपर्यालोचनाप्रयत्नौ विवक्षितौ ( कारणगता इति ) अव्याकृतशब्देन प्रथमत एवाचेतनस्य प्रतिपन्नतया पश्चादवगतम्पश्यन् चक्षुरित्यादिवाक्योक्तं चेतयितृत्वं चक्षुराद्युत्पादनौन्मुख्याभिप्रायम्, एवं प्रकरणान्तरेऽप्यपीक्षणोक्तेर्धर्मिवाचिपदनिर्देशपूर्वकत्वाद्धर्मिवाचिपदानां च सर्वशाखाप्रत्ययन्यायेन अव्याकृत-

* भावप्रकाशिका *

कारणमात्रासाधारणतयोपादानस्यापि सङ्ग्रहो भवतीति भावः, ( पूर्वापरपर्यालोचनाप्रयत्नाविति ) 'तपोऽतप्यत' इति पूर्वापरपर्यालोचना, 'तप आलोचने इति हि धातुः, असृजतेति प्रयत्नश्चेति भावः ( चक्षुराद्युत्पादनौन्मुख्याभिप्रायमिति ) चक्षुरादिशब्दप्रवृत्तिनिमित्तभूतदर्शनौन्मुख्याभिप्रायमित्यर्थः, ततश्च 'पश्यत्यचक्षु' रित्यस्य वाक्यस्य दर्शनोत्पादनाभिमुखत्वात्कर्मनामभाग्भवतीत्यर्थः, तेन 'स प्राणन्नेव प्राणो नाम भवति, वदन्वाक्, पश्यन् चक्षुः, शृण्वन् श्रोत्रम्मन्वानो मन-

वर्तेते, अतः स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यते– इति प्राप्ते प्रचक्ष्महे–

* श्रुतप्रकाशिका *

शब्दतुल्यार्थत्वात्तद्गता ईक्षणादयः सृष्ट्यौन्मुख्याभिप्राया इत्यर्थः । यद्वा कारणगता इति– ब्रह्मकारणवादिनाऽपि प्रधानन्तस्यानादितया परमकारणत्वं चानुमतम्. तस्य वेदान्तवाक्यप्रसिद्धत्वात्, अतश्चिदचिदीश्वरसमुदायस्य कारणत्वादीक्षणस्यांशे मुख्यत्वभङ्गः स्वीकार्य्यः, ततश्चाचिदतिरिक्तवस्तुनि वेदान्तवाक्यानां सामञ्जस्याभावेन अमानतया वैपरीत्यभङ्गेन सर्वत्रेक्षणं गौणमास्थेयमित्यभिप्रायः, भूयसां बलीयस्त्वशङ्काऽप्यनेन निरस्ता, सर्वकारणवाक्येष्वपीक्षणस्यांशे गौणतयाऽर्द्धजरतीयप्रहाणेन गौणत्वावश्यम्भावात् । ब्रह्मात्मशब्दयोः प्रधानपरत्वमुपपादयति ( ब्रह्मात्मेति ) अनेन ईक्षत्यधिकरणाक्षेपः फलितः । अधिकयुक्त्यन्तरमाह ( स्मृतिन्यायेति ) नन्वयोगव्यवच्छेदनिषेधेनोत्थितस्याधिकरणस्य कथं त्रिपाद्यां सङ्गतिः ? असङ्गतस्य वा कथमयोगव्यवच्छेदप्रतिक्षेपेणोत्थानम् ? । किञ्च. न चात्र निरूपणीयमस्ति. पूर्वापरवाक्येषु समाकर्षणेन ह्यर्थो निष्कृष्यते , सिद्धान्ते पूर्वापरवर्णनं चासच्छब्दस्यानन्दमयाधिकरणे कृतम् , अतः संशयोत्थानाभावादनारम्भणीयत्वञ्चेति. नैवम्, प्रधानप्रतिपादनच्छायानुकारिवाक्यविषयत्वात्, न चानन्दमयाधिकरणेन चरितार्थता , असच्छब्दस्य प्रधानपरत्वशङ्कायास्तत्रानपाकृतत्वात् . पूर्वापरवाक्यानां परविषयत्वे निरूपितेऽपि प्रकरणाच्छ्रुतेर्बलीयस्त्वा-

* भावप्रकाशिका *

स्तान्यस्यैतानि कर्मनामान्येवे'ति श्रुतौ प्राणवाक्चक्षुःश्रोत्रमनश्शब्दा लावकपावकादिशब्दवत्प्राणनवदनदर्शनश्रवणमननक्रियायोगादात्मन एव क्रियानिबन्धनामानीत्येव प्रतीयते, ननु 'चक्षुः पश्यन्' इति चक्षुःकर्मदर्शनम् चक्षुरुपादानौन्मुख्यलक्षणं प्रतीयते, परैरपि तथा व्याख्यातञ्चेति शङ्का पराकृता, ननु-अव्याकृतशब्देन प्रथमत एवाचेतनप्रतिपत्तिरित्युक्तम्, अव्याकृतत्वस्य च चेतनैकान्तत्वाभावात्, अत एव तदुपजीवी तदुत्तरसन्दर्भः सर्वोऽपि न युक्त इत्यस्वरसादाह ( यद्वा कारणगता इतीति ) नन्वीक्षणस्य सर्वथा मुख्यत्वभङ्गापेक्षया

कारणत्वेन चाकादिषु यथाव्यपदिष्टोक्तेः ॥ चशब्दस्तु-शब्दार्थे; सर्वज्ञात् सर्वेश्वरात्सत्यसङ्कल्पान्निरस्तनिखिल-दोषगन्धात् परस्माद्ब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते। कुतः? आकाशादिषु कारणत्वेन यथाव्यपदिष्टस्योक्तेः– सर्वज्ञत्वादिविशिष्टत्वेन "जन्मा-

* श्रुतप्रकाशिका *

दसच्छब्दस्य ब्रह्मपरत्वं हि दुरवगमं तर्हि "अस्मिन्नस्य च तद्योगं शास्ती"ति सूत्रस्यानन्तरमेवानन्दित्वप्राप्तिनिमित्तस्य वस्तुनोऽसच्छब्दवाच्यतया प्रधान-त्वमाशङ्क्य तत्रैव निराकरणं कर्त्तव्यमिति चेन्न प्रधानप्रतिपादनच्छायानुका-रिवाक्यविचारस्य पादसङ्गत्यभावात्, अतोऽत्रैव निरूप्यत्वे सति पूर्वपक्षयु-क्तिवशादयोगव्यवच्छेदनिषेधः फलितः, कारणवाक्यानां ब्रह्मपरत्वे अनुपपन्ने सति पूर्वपक्षिणाऽपि वेदप्रामाण्यमभ्युपगच्छता तेषामानर्थक्यपरिहाराय कस्यचिदर्थस्य प्रतिपादकत्वेऽवश्याभ्युपगन्तव्ये सति प्रधानपरत्वे च समञ्ज-सेऽर्धजरतीयप्रसङ्गपरिहारायेक्षणाद्यमुख्यत्वे च न्याय्ये सति प्रधानातिरिक्त-कारणसद्भावानुपपत्तेः, अतस्त्रिपाद्यारम्भे तस्या अन्ययोगव्यवच्छेदपरत्वाभिधानं प्रायिकत्वाभिप्रायं मन्तव्यमिति ॥ (इति प्राप्त इति) त्वर्थेन चशब्देन फलितां प्रतिज्ञामाह (सर्वज्ञादिति) परस्माद्ब्रह्मण एवेत्येवकारेण नेतिपदानुषङ्गफलितप्र-धानप्रतिक्षेपः सूचितः, यथाव्यपदिष्टमित्युक्ते श्रुतौ व्यपदिष्टमिति शङ्काव्यावृत्त्यर्थ-

७ भावप्रकाशिका ७

अंशे मुख्यत्वभङ्ग एव स्वीकार्य्य इति वैपरीत्यमेव युक्तमित्याशङ्क्य चिदंशकारण-त्वस्यानन्यथासिद्धप्रमाणप्रतिपन्नतया सर्वत्र ईक्षणादिगौणत्वमेव युक्तमित्याह (तदतिरिक्ते वस्तुनीति) (नेतिपदानुषङ्गफलितेति) 'न सङ्ख्योपसङ्ग्रहादपी'तिसूत्रस्थनञनुषङ्गफलित इत्यर्थः। ननु 'कारणत्वेनेने' इत्यादिसूत्रे यथा व्यप-दिष्टस्य सर्वज्ञत्वादिगुणकस्य 'असद्वा इदमग्र आसीत्' इत्यत्रापि जगत्कारणत्वे-नोक्तेरिति हि वक्तव्यम्, तस्यैव पूर्वपक्षप्रत्यनीकत्वात्, ननु 'आत्मन आकाशः सम्भूतः' इत्यादिवाक्ये सर्वज्ञस्यैवाकाशादिकारणत्वेनोक्तेरिति प्रतिपादनं युक्तम्;

द्यस्य यत" इत्येवमादिषु प्रतिपादितं ब्रह्म यथाऽव्यपदिष्टमित्युच्यते, तस्यैकस्यैव आकाशादिषु कारणत्वेनोक्तेः। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "तत्तेजोऽसृजत" इत्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते। तथा हि "सत्यं ज्ञानमनन्तं ब्रह्म" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति प्रकृतं

* श्रुतप्रकाशिका *

माह ( जन्माद्यस्य यत इत्येवमादिष्विति ) अत्राऽयमभिसन्धिः, परैस्तु 'यथा व्यपदिष्टोक्तेरिति पदमेवं व्याख्यातम्. यथा श्रुत्यन्तरेषु व्यपदिष्टन्तथेहाप्युक्तेरिति तदयुक्तम्. श्रुत्यन्तरेष्वपि प्रधानमेवोक्तम् स्यादित्युक्ते किमुत्तरम् तेषु परब्रह्मणः परमकारणत्वेन प्रतिपादितत्वं प्राचीनन्यायैः समर्थितमिति वक्तव्यम्, तर्हि पूर्वप्रतिपादितप्रकारस्य कारणस्येहाऽपि प्रतिपादितत्वं हेतुतया वर्णनीयम्, अतः कत्यान्तरसापेक्षयुक्तिप्रतिपादकत्वादपि निरपेक्षहेतुप्रतिपादकत्वस्य समुचितत्वादिति, आकाशादिषु कारणत्वेन— आकाशादीनां कारणत्वेनेत्यर्थः, अर्थस्वारस्येनाऽत्र व्याख्यातम्, दीपे तु सप्तमीस्वारस्येनाऽऽकाशादिपदचिह्नितेषु तेषु वाक्येष्वित्युक्तम् (तस्माद्वा इति) स्वतश्चेतनैकान्तात्मशब्दोपेतप्रकरणस्वारणार्थमाकाशादिष्वित्युक्तमितिभावः, न त्वसच्छब्दोपेतप्रकरणम् विवक्षितम् तद्धि उत्तरसूत्रे विवक्षितम् भूयसां बलीयस्त्वमेवास्मिन् सूत्रे हेतुतया विवक्षितम्, अत एव हि सद्विद्यावाक्यमुपादीयते, तत्तेजोऽसृजतेति, आदिशब्देन मुण्डकोपनिषदादि विवक्षितम् धर्मिवाचिनोऽव्याकृतादिपदस्य प्रथमश्रुतत्वाच्चरमावगतमीक्षणादिकं तदाऽनुगुण्येन गौणमित्युक्तमिति शङ्कायां तेषु प्रकरणेषु सर्वज्ञत्वादिगुणकस्यैव कारणत्वेन प्रतिपादितत्वमुपपादयति ( तथा हीति ) कारणत्वप्रतिपादनात् प्रागेव कारणत्वधर्मिणः

* भावप्रकाशिका *

किञ्च 'तत्तेजोऽसृजत' इति सद्विद्यावाक्योपादानमप्ययुक्तम्, तत्राकाशादिकारणत्वाश्रवणादित्याशङ्क्याह ( स्वतश्चेतनैकान्तेति ) ( भूयसां बलीयस्त्वमेवेति ) आकाशादिपदविहितब्रह्मकारणत्वप्रतिपादकबहुवाक्यानुसारेण 'ब्रह्मकारणवाद-

विपश्चिदेव ब्रह्म, 'तस्माद्वा एतस्मा'दिति परामृश्यते। तथा "तदैक्षत बहु स्याम्" इतिनिर्दिष्टं सर्वज्ञं ब्रह्मैव "तत्तेजोऽसृजत" इति परामृश्यते। एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम्, अतो ब्रह्मैककारणं जगदिति निश्चीयते॥

ननु "असद्वा इदमग्र आसीत्" इत्यसदेव

* श्रुतप्रकाशिका *

प्रथमत एव चेतनत्वप्रतिपादनं दर्शयति (सत्यं ज्ञानमिति) सम्भव इति सृष्टिप्रतिपादनात्पूर्वमेव प्रयुक्तः स्वतश्चेतनैकान्त आत्मशब्दः प्रबलतरः, ततः पूर्वमेव तस्य कारणस्य विपश्चित्त्वप्रतिपादनादात्मशब्दस्य क्लिष्टनिर्वाहशङ्का दूरोत्सारितेत्यभिप्रायेणाह (प्रकृतं विपश्चिदेवेति) (तथेति) 'तत्तेजोऽसृजते'ति कारणत्वप्रतिपादनात् पूर्वमेव 'तदैक्षतेति' ईक्षितृत्वप्रतिपादनादीक्षणानुगुणकारणत्वम् नेयम्, न तु कारणत्वानुगुणमीक्षितृत्वं नेयमित्यर्थः, ततः पूर्वनिर्दिष्टं सदिति पदं तत्साधारणत्वात् न प्रधानपरतया स्वतः प्रतीयते. ईक्षणदर्शनात्, प्रधानविलक्षणकारणं निश्चीयत इति नोपक्रमविरोधः, सच्छब्दस्य इदंशब्दसामानाधिकरण्यं तु सम्भवतीत्ययमर्थः "ईक्षतेर्नाशब्द'मित्यत्र समर्थित इत्यभिप्रायः, (एवं सर्वत्रेति) "आत्मा वा इदमेक एवाग्र आसीत्, स ईक्षत लोकान्नु सृजा" इति "स इमान् लोकानसृजत" "यस्सर्वज्ञः सर्ववित् यस्य ज्ञानमयन्तपः तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते" "एको ह वै नारायण आसीत्" इत्यारभ्य "स एकाकी न रमेत

* भावप्रकाशिका *

विरोधी कश्चित्कोऽसदव्याकृतादिशब्दो यथा कथञ्चिन्नेतव्य इत्यस्य सूत्रस्यार्थः, पूर्वापरवाक्यपर्यालोचनयाऽपि असदादिशब्दस्य तथैव निर्वाह इति उत्तरसूत्रार्थ इति भावः (विपश्चित्वप्रतिपादनादिति) इदमुपलक्षणम्, 'सत्यम् ज्ञान'मिति ज्ञानत्वप्रतिपादनादित्यपि द्रष्टव्यम्, ननु सच्छब्दस्य चेतनपरत्वे जडवाचीदं शब्दसामानाधिकरण्यं कथमित्यत्राह (सच्छब्दस्येति) (समर्थित इत्यभिप्राय इति) तात्पर्यत इतीति शेषः (एको ह वै नारायण आसीदित्यारभ्येति) अत्र

कारणत्वेन व्यपदिश्यते, तत्कथमिव सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण एव कारणत्वं निश्चीयत इत्यत आह—

समाकर्षात् ॥ १५ ॥

"असद्वा इदमग्र आसीत्" इत्यत्रापि विपश्चिदानन्दमयं सत्यसङ्कल्पं ब्रह्मैव समाकृष्यते, कथं "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः" सोऽकामयत "बहु स्यां प्रजायेये"ति । "इदं सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत्

* श्रुतप्रकाशिका *

सोऽन्यं काममनसा ध्यायीत तद्धिरण्मयमण्डमभवत् तत्र ब्रह्मा चतुर्मुखोऽजायत। अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयमिति, "नारायणाद्ब्रह्मा जायते" इत्यादिषु सृष्ट्युक्तेः पूर्वमेव परमचेतनतदसाधारणेक्षणादिकमवगन्तव्यमित्यर्थः । उपक्रमस्थबहुश्रुतिविरोधादव्याकृतश्रुतिमात्रदौर्बल्यमर्थसिद्धम् ॥ उत्तरसूत्रशङ्कामाह ( नन्विति ) समाकर्षात्। 'असद्वा इद'मित्यादिना समाकर्षः प्रतिज्ञातः । 'ब्रह्मणा विपश्चिता अन्योऽन्तर आत्मानन्दमयः सोऽकायते'ति वाक्यान्यभिप्रेत्य विपश्चित्त्वादिकमुक्तम्, प्रतिज्ञातार्थविषयवाक्यबुभुत्सां दर्शयति ( कथमिति ) तस्माद्वा इत्यात्मशब्देन कारणविषयेण निर्दिष्टस्य विपश्चिदानन्दमयस्य स इति पुंल्लिङ्गान्तशब्देन सत्यसङ्कल्पादिगुणकस्य 'तदप्येष' इति तच्छब्देन च समाकर्ष उपपादितो भवति

७ भावप्रकाशिका ७

आरम्भसमानकर्तृकक्रियावाच्योचितपदाध्याहारेणान्वयो द्रष्टव्यः ( उपक्रमस्थबहुश्रुतिविरोधादिति ) यद्यप्यव्याकृतब्राह्मणोपक्रमवाक्यमिदमेव, तथापि पूर्वब्राह्मणेषु 'आत्मैवेदमग्र आसी' दित्यादिश्रवणादेवमुक्तमिति द्रष्टव्यम् ॥

( स इति पुंल्लिङ्गशब्देनेति ) उत्तरोत्तरवाक्यगतस्य तच्छब्दस्य स्वस्वपूर्ववाक्यप्रतिपन्नगुणविशिष्टसमाकर्षकत्वात् , 'सोऽकामयत' इति वाक्य-

तदनुप्रविश्य सच्च त्यच्चाऽभवत्" इत्यादिना ब्राह्मणेनानन्दमयं ब्रह्म सत्यसङ्कल्पं सर्वस्य स्रष्टृ सर्वानुप्रवेशेन सर्वात्मभूतमभिधाय "तदप्येष श्लोको भवती" त्युक्तस्यार्थस्य सर्वस्य साक्षित्वेनोदाहृतोऽयं श्लोकः, "असद्वा इदमग्र आसीत्" इति। तथोत्तरत्र "भीषाऽस्माद्वातः पवते" इत्यादिना तदेव ब्रह्म समाकृष्य सर्वस्य प्रशासितृत्वनिरतिशयानन्दत्वादयोऽभिधीयन्ते, अतोऽयम्मन्त्रस्तद्विषय एव। तदानीं नामरूपविभागाभावेन तत्सम्बन्धितयाऽस्तित्वाभावाद्ब्रह्मैवासच्छब्देनोच्यते "असदेवेदमग्र आसीत्" इत्यत्रा-

* श्रुतप्रकाशिका *

पूर्वस्माद्वाक्यादसद्वा इति वाक्ये समाकर्ष उक्तः, अनेन प्रकरणाच्छ्रुतिर्बलीयसीत्येतदपि परिहृतम्, ज्ञानविपश्चिदादिबहुश्रुतिप्राबल्यसिद्धेः तस्मादुत्तरत्र समाकर्षमाह (तथोत्तरत्रेति) भीषाऽस्मादित्यत्र अस्मादित्ययंशब्दो ब्रह्मण आकर्षकः प्रकृतपरामर्शित्वात्। असच्छब्दार्थमाह (तदानीमिति) श्रुत्यन्तरस्थस्याप्यसच्छब्दस्य उक्तार्थपरत्वमाह (असदेवेदमिति) तत्रापि 'असद्वा इद'मिति वाक्यस्थकारणविषया-

* भावप्रकाशिका *

प्रतिपन्नगुणविशिष्टसमाकर्षक इति भावः, (ज्ञानविपश्चिदादिबहुश्रुतिप्राबल्यसिद्धेरिति) ननु. ज्ञानविपश्चिदादिशब्दैः ब्रह्मणः प्रकृतत्वेऽपि 'असद्वा इदमग्र आसी' दित्यत्रासच्छब्दश्रुतिबलात्प्रकृतब्रह्मणोऽन्यदेव, प्रकरणात् श्रुतेर्बलत्वात्, ततश्च परस्परविरोधान्निर्णयासमर्थानां वेदान्तानां कापिलस्मृत्यनुसारेण निर्णयो वक्तव्य इति वदन्तं पूर्वपक्षिणं प्रतिज्ञानविपश्चिदादिबहुश्रुतिप्राबल्यकीर्तनस्य व्यर्थत्वात्, पूर्वपक्षिणा हि ज्ञानविपश्चिदादिश्रुतिप्राबल्यमभ्युपेत्यैव तदबाधेनैव प्रकरणमात्रबाधस्यैवोपन्यस्तत्वादिति चेत्. सत्यम्, श्रुत्या बलीयस्या प्रकरणमात्रबाधश्चेत्, सोऽभ्युपगन्तुं युक्तः,

व्ययमेव निर्वाहः । यदुक्तं "तद्धेदं तर्ह्यव्याकृतमासीत्" इति प्रधानमेव जगत्कारणत्वेनाऽभिधीयत इति; नेत्युच्यते, तत्राप्यव्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते, "स एष इह प्रविष्ट आनखाग्रेभ्यः पश्यंश्चक्षुःशृण्वन् श्रोत्रं मन्वानो मन आत्मेत्येवोपासीत" इत्यत्र 'स एषः' इति तच्छब्देनाव्याकृतशब्दनिर्दिष्टस्यान्तःप्रविश्य प्रशासितृत्वेनानुकर्षात् "तत्सृष्ट्वा तदेवानुप्राविशत्" 'अनेन जीवे-

---

* श्रुतप्रकाशिका *

सच्छब्दैकार्थ्यात् सत्यसङ्कल्पत्वादिकं सिद्धमित्यभिप्रायः, तत्रासच्छब्दोक्तस्य 'तत्सदासी'दित्यनुकर्षप्रदर्शनं सच्छब्दस्य चिदचित्साधारण्यनिबन्धनम्, सच्छब्दो हि तुच्छव्यावर्त्तकः, न त्वचिद्व्यावर्तकः। कारणावस्थायामसद्व्यावृत्तिर्ह्यारम्भणाधिकरणावसेया। तद्धेदमित्यादिश्रुतावप्यनुकर्षं दर्शयति (यदुक्तमिति) तद्धेदमितिश्रुत्युक्तानुप्रवेशनामरूपव्याकरणयोः परमात्मधर्मत्वेन प्रसिद्धिमाह (तत्सृष्ट्वेति) प्रधानस्यापि

❀ भावप्रकाशिका ❀

इह तु न तथा; असदादिशब्दश्रुतेर्बलवत्त्वे ज्ञानविपश्चिदादिशब्दार्थस्य जगत्कारणत्वप्रतिपादकश्रुतीनां 'सोऽकामयत 'तदप्येष श्लोको भवती'ति प्रकृताभिधायिसर्वनामश्रुतीनामपि बाधप्रसङ्ग इति भावः । ननु 'असदेव' मिति बृहदारण्यकश्रुतावपि 'तत्सदासी' दिति तत्सद्रूपताविधायकोत्तरवाक्ये तत्पदेनासच्छब्दोक्तस्यैव समाकर्षात् . अत्यन्तासतश्च सद्रूपतापत्त्ययोगादित्येव परमतवत् 'असदेवेदमग्र आसी' दित्यत्रापि समाकर्षे प्रदर्शयितुं शक्ये, भाष्ये तदनादरः किमर्थ इत्याशङ्क्याह (तत्रासच्छब्दोक्तस्येति) (तुच्छव्यावर्तक इति) परमतवत् असन्मतपूर्वपक्षे तुच्छकारणत्वशङ्काया अप्यनुद्घाटनात् तुच्छव्यावर्तकसच्छब्दसमाकर्षो युक्त इति भावः । ननु तुच्छकारणत्वशङ्काऽप्यस्मिन् पूर्वपक्षे उद्घाटयतामित्यत्राह (कारणावस्थायामिति) परमा-

नात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति स्रष्टुः सर्वज्ञस्य परस्य ब्रह्मणः कार्यानुप्रवेशनामरूपव्याकरणप्रसिद्धेश्च । "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवंरूपोऽनुप्रवेशो न सम्भवति; अतः अव्याकृतम्—अव्याकृतशरीरं ब्रह्म "तन्नामरूपाभ्यां व्याक्रियत" इति तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियत इत्युच्यते ।

* श्रुतप्रकाशिका *

स्वकार्यानुप्रवेशो युक्त इत्यत्राह (अन्तः प्रविष्ट इति) 'पश्यन् चक्षुः शृण्वन् श्रोत्रम्' इति वाक्यात् व्याकरवाणीति सङ्कल्पश्रवणाच्च प्रधानव्यावृत्तिसिद्धावप्यधिकहेतुज्ञापनार्थं परिहारान्तरमुक्तम्, वेदान्तवाक्यविशेषविवक्षितोऽनुप्रवेशविशेषो न सम्भवतीत्यर्थः । अनुप्रविश्य नियमनस्य पुरुषव्यावर्तनक्षमत्वेऽपि अत्रापेक्षितं प्रधानव्यावर्त्तनमात्रमिति प्रधानमात्रस्य तदसम्भवोक्तिः, अन्येन व्याकृतत्वशङ्काव्युदसनार्थं 'तन्नामरूपाभ्यां व्याक्रियते'तिवाक्यखण्डमुपादाय व्याचष्टे (तदेवेति) असच्छब्दोक्तकारणविषयेण 'तदात्मानं स्वयमकुरुत' इत्यनेनैकार्थ्यादिति भावः । असदव्याकृतादिशब्दानां ब्रह्मण्ययघटमानत्वेन पराभिमतानामुपपन्नतोक्ता । अथे-

७ भावप्रकाशिका ७

त्मस्वरूपे नामरूपव्याकृतत्वतदभावयोरभावात् . सद्वारके व्याकृतत्वाव्याकृतत्वे इत्यभिप्रेत्य व्याचष्टे, भाष्ये— अव्याकृतम्— अव्याकृतशरीरमिति । (तदात्मानं स्वयम- कुरुत इत्यनेनैकार्थ्यादिति भाव इति ) व्याक्रियत इति कर्मकर्तरि लकार इति भावः । ननु 'तद्धेदं तर्ह्यव्याकृतमासी' दित्यत्र कर्मणि निष्ठान्ततया व्याक्रियतेत्यत्रापि तदवैरूप्याय कर्मण्येव लकारो वक्तव्यः, न कर्मकर्तरि. नचाव्याकृतमित्यत्रापि कर्तर्य्येव कर्मवद्भावात् क्तप्रत्ययोऽस्त्विति वाच्यम्, 'लिङ्याशिष्यङ्' इत्यत्र ङ्लिकारकनिर्देशेन लान्तकार्यं प्रत्येव कर्मवद्भावविधानात् कर्मवद्भावेन कृत्यक्तादीनामससम्भवात्, ततश्च क्तप्रत्ययसारूप्याय

एवञ्च सतीक्षणादयो मुख्या एव भवन्ति । ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथञ्चिदुपपद्यते, अतो ब्रह्मैककारणं जगदिति स्थितम् ॥ ॥ कारणत्वाधिकरणं समाप्तम् ॥

## जगद्वाचित्वात् ॥ १६ ॥

५ अधिकरणम्

पुनरपि साङ्ख्यः प्रत्यवतिष्ठते—यद्यपि वेदान्तवाक्यानि चेतनं जगत्कारणत्वेन प्रतिपा-

---

* श्रुतप्रकाशिका *

क्षणादीनां ब्रह्मण्येवोपपन्नत्वं प्रधानेऽनुपपन्नत्वं चाह ( एवञ्चेति ) असदव्याकृतादिशब्दा ईक्षणादयश्च ब्रह्मण्युपपन्नाः, प्रधाने त्वीक्षणादयोऽनुपपन्ना इति वैषम्यं दर्शितं भवति । अधिकरणार्थमुपसंहरति ( अत इति ) ॥

---

॥ जगद्वाचित्वात् ॥ सङ्गतिमाह (यद्यपीति) "स वै वेदितव्यः' इत्यन्तं विषयवाक्यं दर्शितम् । करणवाक्यप्रतिपाद्यं किं प्रकृत्यधिष्ठाता पुरुषः ? उत परमात्मेति संशयस्वरूपमर्थसिद्धम् । तदर्थं बालाक्यजातशत्रुसम्वादे वेदितव्यतयोपदिष्टं ब्रह्म किं जीवः ? उत परमात्मेति । किम् 'एतेषां पुरुषाणां कर्ता'इति निर्दिष्टः कर्त्ता जीवः ? उत परः ? इति । 'यस्य वैतत्कर्मे'ति कर्मशब्दः किं पुण्यापुण्यवाची? उत जगद्वा-

७ भावप्रकाशिका ७

लकारोऽपि कर्मण्येव युज्यते, 'न कर्मकर्त्तरी'ति कथं नामरूपव्याकरणस्य स्वयं कर्तृकता सिद्ध्येदिति चेत्. न, अव्याकृतमित्यत्र कर्मणः कर्तृत्वविवक्षया धातोरकर्मकत्वात् 'गत्यर्थाकर्मके'ति कर्त्तरि क्तप्रत्ययसम्भवान्नानुपपत्तिरिति भावः ॥ इति कारणत्वाधिकरणम् ॥ .... .... .... ....

अत्रेयं विषयशुद्धिः, कौषीतकीब्राह्मणे अजातशत्रुर्नाम काशीराजः स्वसमीपमागत्य 'ब्रह्म ते ब्रुवाणी' त्युक्तवन्तं बालाकिम् "सहस्रं दद्मः एतस्यां वाचि जनको जनक इति वै जना धावन्ती'ति प्रशस्य बालाकिना 'य एष आदित्ये पुरुषस्तमेवाहमुपासे" इत्यादिभिर्वाक्यैर्ब्रह्मत्वेन उपदिष्टानादित्यचन्द्र-

दयन्ति, तथापि तन्त्रसिद्धप्रधानपुरुषातिरिक्तं वस्तु जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते। तथा हि भोक्तारमेव पुरुषं कारणं वेद्यतयाऽधीयते कौषीतकिनो

* श्रुतप्रकाशिका *

चीति ? किमेतच्छब्दसामानाधिकरण्येन कर्मशब्दस्य जगद्वाचित्वं युक्तम् ? उत 'एतेषां पुरुषाणां कर्ते'ति पृथङ्निर्देशवैयर्थ्याय पुण्यापुण्यवाचित्वं युक्तम् ? 'तौ ह सुप्तं पुरुष'मित्याद्यवगते जीवमुख्यप्राणलिङ्गे पुण्यापुण्यवाचितामुपोद्बलयतः नेति। किमेते लिङ्गे जीवबोधनार्थे ? उत 'क्व वा' इत्यादिप्रश्नप्रतिवचनाभ्यां जीवातिरिक्तब्रह्मबोधनपरे ? । यदा जीवबोधनार्थे तदा तयोः पुण्यापुण्यवाचित्वो-

* भावप्रकाशिका *

विद्युत्स्तनयित्नु—आकाशवाय्वग्न्यादिगतान् पुरुषान् अब्रह्मत्वेन तत्तत्पुरुषोक्त्यनन्तरमेव प्रत्याख्याय तत्र तूष्णींभूते बालाकौ किमेतावदेव तव परिज्ञानमिति पृष्ट्वा तेनैतावदेवेत्यभिहिते 'मृषा किल वै मा सम्बादयिष्ठाः' 'ब्रह्म ते ब्रवाणी' त्युक्त्वा 'यो वै बालक' इत्यादि पठ्यते। एवं हि श्रुतिक्रमः, 'सहोवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य इति तदुह बालाकिः समित्पाणिः प्रतिचक्रमे । उपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेतत् स्यात्। यत् क्षत्रियो ब्राह्मणमुपनयेत् , एहि व्येव त्वाद्य ज्ञापयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज। तौ ह सुप्तं पुरुषमीयतुः, तं हाजातशत्रुरामन्त्रयाञ्चक्रे, बृहन् पाण्डरवासस्सोमराजन्निति सह तूष्णीमेव शिश्ये तत उ हैवैनं यष्ट्या विचिक्षेप, स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागादिति तदुह बालाकिर्न विजज्ञौ तं होवाचाजातशत्रुः यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूत् यत एतदागात्। हिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतिष्ठन्ति यथा सहस्रधा केशस्यापि पातस्तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ते शुक्लस्य नीलस्य पीतस्य लोहितस्येति तासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति तदैवैनं वाक् सर्वैर्नामभिस्सहाप्येति चक्षुः सर्वैः रूपैस्सहाप्येति श्रोत्रं सर्वैश्शब्दैः सहाप्येति मनस्सर्वैर्ध्यानैः सहाप्येति स यदा प्रबुध्यते यथाग्नेर्विस्फुलिङ्गा विप्रतिष्ठे-

बालाक्यजातशत्रुसंवादे "ब्रह्म ते ब्रवाणि" इत्युपक्रम्य "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः" इति। उपक्रमे वक्तव्यतया बालाकिनोपक्षिप्तं ब्रह्माजानते तस्मा एवाजातशत्रुणा "स वै वेदितव्यः" इति ब्रह्मोपदिश्यते। "यस्य वैतत्कर्म' इति कर्म-

* श्रुतप्रकाशिका *

त्म्भकत्वेन पृथङ्निर्देशावैयर्थ्याय कर्मशब्दस्य पुण्यापुण्यवाचितोपपत्तेस्तत्सम्बन्धीकर्त्ता पुरुष इति बालाक्यजातशत्रुसंवादस्य जीवपरत्वात् सर्ववेदान्तवेद्यो भोक्ता पुरुष इति फलितं स्यात् । यदा ब्रह्मप्रतिबोधनपरे तदा तयोर्लिङ्गयोः पुण्यापुण्यवाचित्वोतम्भकत्वाभावादेतच्छब्दसामानाधिकरण्येन इह कर्मशब्दस्य जगद्वाचित्वात्तत्कर्त्ता जीवविलक्षण इति बालाक्यजातशत्रुसंवादस्य परमात्मविषयतया सर्ववेदान्तवेद्यः परमात्मेति सिध्यति । विशयेऽर्थसिद्धे सति पूर्वपक्षमाह ( उपक्रम इति ) प्रतिवचनस्य उपक्रमस्थब्रह्मविषयत्वेन ब्रह्मणोऽन्यस्य जीवस्य कर्मसम्बन्धपरत्वशङ्का निरस्ता। ततः किमित्यत्राह ( यस्येति ) नार्थान्तरम्, प्रकृतिवन्ने-

* भावप्रकाशिका *

रन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः तद्यथा क्षुरः क्षुरधानेव हितस्स्यात् विश्वम्भरो वा विश्वम्भरकुला ये एवमेवैष प्राज्ञ आत्मेदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्यस्तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा वा श्रेष्ठिनं स्वा भुञ्जत एवमेवैत आत्मानः एतमात्मानं भुञ्जन्ति, स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः, स यदा विजज्ञौ अथ हत्वासुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय यो ह वैनं विद्वान् सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्य्येति य एवं वेद य एवं वेद। ( स वै वेदितव्य इत्यन्तं विषयवाक्यमिति ) 'स वै वेदितव्य इत्यधीयत' इति पूर्वेणान्वय इति भावः। ( जीवस्य कर्मसम्बन्धपरत्वशङ्का निरस्तेति ) 'यो वै बालाके' इति वाक्ये जीवस्य कर्मसम्बन्धे बोधितेऽपि तदतिरिक्तस्य ब्रह्मणः प्रत्या-

सम्बन्धात्प्रकृत्यध्यक्षो भोक्ता पुरुषो वेदितव्यतयोपदिष्टं ब्रह्मेति निश्चीयते, नार्थान्तरम्, तस्य कर्मसम्बन्धानभ्युपगमात्। कर्म च पुण्यापुण्यलक्षणं क्षेत्रज्ञस्यैव सम्भवति। न च वाच्यम्; क्रियत इति कर्मेति व्युत्पत्त्या प्रत्यक्षादिप्रमाणोपस्थापितं जगदेतत्कर्मेति निर्दिश्यते, यस्यैतत्कृत्स्नं जगत्कर्म स वेदितव्य इति क्षेत्रज्ञादर्थान्तरमेव प्रतीयत इति; 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म' इति पृथङ्निर्देशवैयर्थ्यात्, कर्मशब्दस्य च लोकवेदयोः पुण्यपापरूप एव कर्मणि प्रसिद्धेः। तत्तद्भोक्तृकर्मनिमित्तत्वाज्जगदुत्पत्तेरेतेषां पुरुषाणां कर्तेति च भोक्तुरेवोपपद्यते। तदयमर्थः-- एतेषामादित्यमण्डलाद्यधिकरणानां क्षेत्र-

* श्रुतप्रकाशिका *

श्वरोऽपीत्यर्थः। यज्ञादिकं कर्म यस्य प्रीणनमित्येतदर्थपरत्वव्युदासायाह (कर्मचेति) कर्मशब्दोऽसङ्कुचितवृत्तिः पापमपि वक्तीति कर्माराध्यपरत्वमयुक्तमिति भावः। अत्रानन्दमयाधिकरणाक्षेपः फलितः। पादसङ्गतिः पूर्ववद्भोक्तृपुरुषप्रतिपादनच्छायानुसारिवाक्यविषयत्वात्. कर्तृत्वस्य जीवे सम्भवरूपपूर्वपक्षहेतुवशादयोगव्यवच्छेदाक्षेपः फलितः। सिद्धान्तमाशङ्क्याह (नचेति) पौनरुक्त्यापादनेन परिहरति (यो वा इति) हेत्वन्तरमाह (कर्मशब्दस्य चेति) रूढिर्हि योगाद्बलीयसीत्यर्थः। सर्वकर्तृत्वं कथमित्यत्राह (तत्तदिति) इह निर्दिष्टानां भोक्तॄणामनिर्दिष्टानां च तत्सजातीयानां ज्ञाततया नोपदेष्टव्यत्वं न च वेदितव्यत्वमित्यत्राह (तदयमर्थ इति) कर्तृत्वे हेतुः क इत्यपेक्षायां 'यस्य वैतत्कर्मे'ति कर्मित्वो-

* भावप्रकाशिका *

ख्यानाभावात्, नानेन सिद्धान्तिनः किञ्चिदनिष्टमापतितमिति शङ्का निरस्ता, ब्रह्मण एव कर्मसम्बन्धप्रतिपादनेन जीवातिरिक्तब्रह्मप्रत्याख्यानादिति भावः। (इह निर्दिष्टानामिति) अस्मिन् प्रकरणे निर्दिष्टानामादित्यपुरुषाणामित्यर्थः।

ज्ञभोग्यभोगोपकरणभूतानां पुरुषाणां यः कारणभूतः, एतत्कारणभावहेतुभूतं पुण्यापुण्यलक्षणं च कर्म यस्य स वै वेदितव्यः--तत्स्वरूपं प्रकृतेर्विविक्तं वेदितव्यमिति । तथोत्तरत्र "तौ ह सुप्तं पुरुषमाजग्मतुः तं यष्टिना चिक्षेप" इति सुप्तपुरुषागमनयष्टिघातोत्थापनादीनि च भोक्तृप्रतिपादन एव लिङ्गानि । तथोपरिष्टादपि भोक्तैव प्रतिपाद्यते "तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुजन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एनं भुञ्जन्ति" इति । तथा "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात" इति पृष्टमर्थमजानते तस्मै स्वयमेवाजातशत्रुरुवाच "हिता नाम नाड्यस्तासु

---

* श्रुतप्रकाशिका *

पपादनं शुद्धस्वरूपं चाविदितम्, कर्मसम्बन्धस्तूपलक्षणमित्यर्थः । एवं कर्मनिमित्तभोक्तृत्वात् जीवत्वमुक्तम्, तदेव यष्टिघातोत्थापनाच्छ्रेष्ठिदृष्टान्तात् सुषुप्तिप्रबोधादियोगाच्चोपपादयति (तथोत्तरत्रेत्यादिना) सुषुप्तिस्थानं नाड्यः, न परमात्मेत्यभि·

❀ भावप्रकाशिका ❀

(सुषुप्तिस्थानं नाड्य इति) पूर्वपक्षिणोऽयमभिप्रायः, क्वैष एतद्बालाके पुरुषोऽशयिष्टेति प्रश्न उत्थापितस्य जीवस्य सुषुप्तिस्थानविषयः, क्व वा एतदभूदिति प्रश्नस्तदुत्थापनात्पूर्वमुपरतव्यापारस्य तदनन्तरं व्याप्रियमाणतयानुभूयमानस्य एतच्छब्दनिर्दिष्टस्य करणग्रामस्य सुषुप्तिकालिकस्थितिविषयः, 'कुत एतदागा'दिति प्रश्नस्तस्यैव करणग्रामस्योद्गमनापादानविषयः, एवञ्च तासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यतीति प्रथमप्रश्नस्य प्रतिवचनम्, अथास्मिन् प्राण एवैकधा भवतीति द्वितीयप्रश्नस्य प्रतिवचनम्, 'तदेनं वाक्' इत्यादि तु तस्यैव

तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति मनस्सर्वैर्ध्यानैस्सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति सुषुप्त्याधारतया स्वप्नसुषुप्तिजागरितावस्थासु वर्त्तमानं वागादिकरणाप्ययोद्गमस्थानमेनमेव जीवात्मानम् 'अथास्मिन् प्राण एवैकधा भवति' इत्युक्तवान् । अस्मिन्-- जीवात्मनि । प्राणभृत्त्वनिबन्धनोऽयं प्राणशब्दः "स यदा-

* श्रुतप्रकाशिका *

प्रायेण 'हिता नाम नाड्यः' इति वाक्यमुदाहृतम्. तदानीं तदाशब्दः सुषुप्तिवेलापरः स्यात् । (सर्वैर्नामभिस्सर्वैर्ध्यानैरिति ) तत्तत्करणमुपरतस्वस्वव्यापारमित्यर्थः ।(एतस्मादात्मनः प्राणा इति ) प्राणशब्दः पञ्चवृत्तिप्राणपर इति पूर्वपक्षी मन्यते । देवाः—इन्द्रियाणि । लोकाः—ज्ञानं विषयो वा । सुषुप्त्याधारता—सुषुप्तिमत्त्वं, सुषुप्त्याधारतयोक्तवानित्यन्वयः । प्राणशब्दस्य प्रथमान्तत्वशङ्कां मुख्यप्राणपरमात्मपरत्वशङ्कां च निराकर्तुं व्याचष्टे ( अस्मिन् जीवात्मनीति ) तदुपपादयति ( स यदेति ) प्रबोधः

छ भावप्रकाशिका छ

विवरणम्, यदा प्रतिबुध्यत' इत्यारभ्य 'देवेभ्यो लोका' इत्येतदन्तं तृतीयप्रश्नस्य प्रतिवचनमिति । सिद्धान्तिनस्तु प्रथमप्रश्नो जीवस्य स्वप्नस्थानविषयः, द्वितीयस्तु जीवस्य सुषुप्तिस्थानविषयः , तृतीयस्तु जीवस्य प्रबोधकालोद्गमनापादानविषयः , तासु तदा भवतीति प्रथमप्रश्नप्रतिवचननम्, 'यदा सुप्त' इत्यारभ्य द्वितीयप्रश्नप्रतिवचनम्, 'यदा बुध्यत' इत्यारभ्य तृतीयप्रश्नस्य प्रतिवचनमित्यभिप्रायः (तदानीं तदाशब्द इति) नाडीनां सुषुप्तिस्थानत्वाभ्युपगमपक्ष इत्यर्थः । ( उक्तवानित्यन्वय इति) करणग्रामैकधाभावस्यैव सुषुप्तिरूपतया ' प्राण एवैकधा भवति '

प्रतिबुध्यते" इति प्राणशब्दनिर्दिष्टस्य प्रबोधश्रवणात् मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसम्भवात् । अथवा 'अस्मिन् प्राणे' इति व्यधिकरणे सप्तम्यौ; अस्मिन्नात्मनि वर्त्तमाने प्राण एवैकधा भवति वागादिकरणग्राम इति प्राणशब्दस्य मुख्यप्राणपरत्वेऽपि जीव एवास्मिन् प्रकरणे प्रतिपाद्यते, स्वतः प्राणस्य

---

* श्रुतप्रकाशिका *

श्रूयताम्, ततः किमित्यत्राह (मुख्यप्राणस्येति) प्रथमान्तत्वासम्भवोऽतिप्रसिद्ध इति न कण्ठोक्तः, तदा हि 'एकधा भवति' इत्यनेन वागादिकरणानामिव निवृत्तव्यापारतयाऽवस्थानं तूक्तं स्यात्, तच्च विरुद्धं स्वापेऽपि प्राणव्यापारोपलब्धेः । अवधारणानुपपत्तिश्च वागाद्युपरतेः प्रतिपाद्यमानत्वात् । न च वाच्यं प्राण एवानुपरतव्यापार एकरूपस्थित इत्यर्थ इति । प्रत्यक्षसिद्धार्थस्य प्रतिपादनवैयर्थ्यात् . प्राणस्य स्वाधीनेन्द्रियस्थितिप्रवृत्तित्वरूपं प्राधान्यं विवक्षितमिति चेत् तत्तु सर्वथा भवतीति स्वापदशायां तत्प्रतिपादनमसङ्गतं स्यात्, अतः सप्तम्यन्तत्वमङ्गीकृत्य जीवपरत्वमुपपादितम्, अस्यां योजनायां सप्तम्यन्तपदयोः सामानाधिकरण्यस्वारस्येऽपि प्राणशब्दस्य लाक्षणिकत्वम्. तद्व्यावृत्त्यर्थं योजनान्तरमाह (अथवेति) क एकधा भवतीत्यत्राह (वागादिकरणग्राम इति) प्राणाधिकरणवाचितया व्यधिकरणस्यास्मिन्निति पदस्य परमात्मपरत्वमाशङ्क्याह (प्राणशब्दस्येति) कुत इत्यत्राह (स्वत इति) धर्मान्तराणा-

❀ भावप्रकाशिका ❀

इत्यनेन सुषुप्त्याधारतया उक्तवानित्यन्वय इत्यर्थः । भाष्ये— स्वप्नसुषुप्तिजागरितावस्थास्विति । यद्यपि पूर्वपक्षे प्रश्नप्रतिवचनयोः स्वप्नसम्बन्धाभावात्स्वप्नावस्थायामनुवर्तमानत्वं न प्रतीयते, तथापि स्वप्नजागरणसुषुप्तीनां सामानाधिकरण्यमर्थसिद्धमिति भावः । यद्वा 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति' इतिवाक्यादिति द्रष्टव्यम् । (प्राधान्यं विवक्षितमिति चेदिति) यद्यपि 'सङ्ख्याया विधार्थे धा' इति सङ्ख्यायां विधीयमानो धाप्रत्ययः प्राधान्यवाचिन एकशब्दान्न सम्भवति, तथापि छान्दसत्वात् तथा शङ्कितमिति द्रष्टव्यम् । भाष्ये— अस्मिन्नात्मनि वर्तमाने

जीवोपकरणत्वात्; अतो वक्तव्यतयोपक्रान्तं ब्रह्म पुरुष एवेति तद्व्यतिरिक्तेश्वरासिद्धिः। कारणगताश्चेक्षणादयश्चेतनधर्म्मा अस्मिन्नेवोपपद्यन्त इत्येतदधिष्ठितं प्रधानमेव जगत्कारणम् ॥

* श्रुतप्रकाशिका *

मपि जीवे सम्भवं दर्शयन् पूर्वपक्षमुपसंहरति (अत इति) अस्मिन्नधिकरणे प्राणजीवपरमात्मविषयतया त्रिशिरस्को विचार इतरैः कृतः, तत्रेह वेदितव्यतयोपदिष्टपुरुषस्य प्राणनामभिरामन्त्रणाश्रवणादिना मुख्यप्राणवैलक्षण्यस्य स्फुटत्वात् द्विशिरस्को विचार उपपन्न इत्यभिप्रायेण जीवपरत्वमेव पूर्वपक्षीकृतम्। ननु समष्ट्यात्मा हिरण्यगर्भः प्राणशब्दविषयत्वेन शङ्कित इति त्रिशिरस्कत्वं युक्तं विचारस्य। परिस्पन्दलक्षणकर्मसम्बन्धस्य हेतुतयोपन्यासानुपपत्तेः। परिस्पन्दात्मकं कर्म हि मुख्यप्राणधर्मतया प्रसिद्धम्, न तु हिरण्यगर्भतया। प्राणसमष्ट्यभिमानित्वाद्धिरण्यगर्भस्य प्राणधर्मेण कर्मणा विशेष्यत्वं युक्तमिति चेत्; हिरण्यगर्भः किं भवत्पक्षे क्षेत्रज्ञोऽभिमतः? उत ईश्वर इति। ईश्वरत्वे हिरण्यगर्भपरत्वं सिद्धान्तीकर्त्तव्यम्, अतो न पूर्वपक्षतामर्हति। 'परमेश्वर एवायमेतेषां पुरुषाणां कर्त्ता स्या'दिति हि भवतां सिद्धान्तप्रतिज्ञा। यदि क्षेत्रज्ञोऽभिमतः तर्हि जीवपरत्वप्रतिक्षेपादेव तत्परत्वं प्रतिक्षिप्तं भवतीति प्राणो न पृथग्विचार्यः किं जीवमात्रपरः? उत जीवविशेषपरः? इति सन्देहो युक्त इति चेन्न; एकस्मिन् प्रकरणे सामान्यशब्देनाऽर्थप्रतिपादनेऽपि विशेषोपस्थापके सति तस्य तत्पर्यवसानस्य न्याय्यतया हिरण्यगर्भो वा परमात्मा वेति द्विशिरस्क एव संशयः स्यात्। ननु 'जीवमुख्यप्राणलिङ्गान्नेति चे'दितिसूत्रेण पूर्वपक्षद्वयद्योतनाद्युक्तं विचारत्रयमिति चेत्. न, जीवसाधकत्वेन मुख्यप्राणलिङ्गस्य शङ्कितत्वात्। जीवोपकरणाव-

* भावप्रकाशिका *

प्राण एवैकधा भवति वागादिकरणग्राम इतीति। ननु मुख्यप्राणस्यैकीभूतकरणग्रामाश्रयत्वे सुषुप्त्याश्रयत्वप्रसङ्गेन मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसम्भवादिति पूर्वभाष्यविरोध इति चेत्. न एकीभूतकरणग्रामाश्रयप्राणाश्रयत्वस्यैव सुषुप्तित्वविवक्षया एतत्पक्षेऽस्थितिसम्भवादिति द्रष्टव्यम्। (प्राणनामभिरामन्त्र-

इति प्राप्ते प्रचक्ष्महे— जगद्वाचित्वात् । अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः स्वस्मिन् प्रकृतिधर्माध्यासेन तत्परिणामहेतुभूतः पुरुषो नाभिधीयते, अपि तु निरस्तसमस्ताविद्यादिदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणनिधिः निखिलजगदेककारणभूतः पुरुषोत्तमोऽभिधीयते। कुतः? 'यस्य वैतत्कर्म' इत्यत्रैतच्छब्दान्वितस्य कर्मशब्दस्य परमपुरुषकार्यभूतजगद्वाचित्वात् । एतच्छब्दो ह्यर्थप्रकरणादि-

* श्रुतप्रकाशिका *

गमो हि जीवसाधकः, अतो मुख्यप्राणवैलक्षण्यस्य स्फुटत्वात् प्राणशब्दस्य हिरण्यगर्भवाचित्वे स्वारस्याभावाच्च जीवविषयः पूर्वपक्ष उपन्यस्तः ॥ राद्धान्तमाह ( इति प्राप्त इति ) पूर्वपक्षे कर्त्रादिशब्दानामस्वारस्यं स्वमते स्वारस्यं चाभिप्रेत्य तदुपपादकं जीवपरयोः स्वभावविशेषं वदन् प्रतिजानीते ( अत्रेत्यादिना ) प्रकृतिधर्माध्यासेन—स्वस्मिन् प्रकृतिगतकर्तृत्वाध्यासेनेत्यर्थः । नेतिपदानुषङ्गसिद्धार्थ उक्तो नाभिधीयते इत्यन्तेन। सौत्रहेतुबलसिद्धं प्रतिज्ञांशमाह ( अपि त्विति ) यादृशस्य कर्मशब्दस्य जगद्वाचित्वं युक्तं तादृशत्वं सूत्रकाराभिप्रेतमिति मन्वानः कर्मशब्दं विशिनष्टि ( एतच्छब्दान्वितस्येति ) नन्वेतच्छब्दः प्रकृतपरामर्शी तत्कथमप्रकृतजगत्परामर्श इत्यत्राह ( एतच्छब्दो हीति ) ( अर्थप्रक-

७ भावप्रकाशिका ७

रणाश्रवणादिनेति ) इदमुत्तरत्र स्पष्टम् । ( पूर्वपक्षे कर्त्रादिशब्दानामिति ) पूर्वपक्षिणः साङ्ख्यस्य मते कर्तृत्वादेरध्यस्तत्वेनास्वारस्यावश्यम्भावादिति भावः । ( स्ववाक्यस्थपदान्तरान्वययोग्यत्वं विवक्षितमिति ) यद्यपि 'चमसवदविशेषा'दिति सूत्रे अर्थप्रकरणादिभिर्विनेति भाष्यव्याख्यानावसरेऽर्थो वस्तुसामर्थ्यमित्युक्तम् । आलङ्कारिकैश्च अर्थः प्रयोजनं यथा 'स्थाणुं भज भवभञ्जनाय' इति भञ्जनरूपप्रयोजनवशात् हरदारुसाधारणस्थाणुशब्दस्य हरे पर्य्यवसानम्। प्रकरणम्— प्रस्तावः, यथा चक्रवर्तिसन्निधौ सर्वं जानाति देव इतिप्रयुक्तस्य देव

भिरसङ्कुचितवृत्तिरविशेषेण प्रत्यक्षादिप्रमाणोपस्था-
पितनिखिलचिदचिन्मिश्रजगद्विषयः । न च पुण्या-

* श्रुतप्रकाशिका *

णादिभिरिति ) अर्थशब्देन स्ववाक्यस्थपदान्तरान्वययोग्यत्वं विवक्षितम् । प्राचीन-वाक्यनिचयः प्रकरणम्, आदिशब्देन उपरितनवाक्यानि विवक्षितानि, यद्वा पूर्वा-परवाक्यजातं प्रकरणम्, आदिशब्देन तात्पर्यलिङ्गानि विवक्षितानि ( असङ्कुचि-तवृत्तिरिति ) लिङ्गवचनविरोधात् पुरुषपरामर्शोऽनुपपन्नः । पुण्यपापरूपं कर्माप्र-कृतम् । अप्रकृतमपि कर्तृत्वकारणतया परिकल्प्यधीस्थत्वापादनमत्यन्त-विलम्बितम् । पुरुषनिर्माणरूपव्यापारम् 'एतत्कर्मे'ति निर्दिश्य यस्येति तत्सम्बन्धे विवक्षिते पुनरुक्तिः स्यात्, निर्माणव्यापाराश्रयत्वस्य कर्तृशब्देनैवाभिहितत्वात्; अतः सङ्कोचकाभावादसङ्कुचितवृत्तिरिति भावः । तर्ह्यप्रकृतं जगत् कथमुपस्था-प्येतेत्यत्राह ( प्रत्यक्षादीति ) एतच्छब्दः सन्निहितपरामर्शी, सन्निधिश्च बुद्धिस्थितिः, सा च प्रकरणतो वा प्रकृतार्थान्तरसम्बन्धित्वेन वा प्रसिद्धितो वा भवति । तत्र प्रकरणादिना सङ्कोचानुपपत्तेः परिशेषात् प्रसिद्धार्थपरामर्शित्वे सति तत्रापि सङ्कोचकाभावात् निखिलचिदचिन्मिश्रजगद्विषय इत्यर्थः । ( चिदचिन्मिश्रेति ) जगदेकदेशभूतस्यादित्यादेः प्रकृतत्वादेकदेशि च जग-च्चद्द्वारा बुद्धिस्थम्, अतश्च जगत्परामर्शो युक्त इति भावः । रूढेर्योगात्

* भावप्रकाशिका *

इतिपदस्येन्द्राद्यनेकार्थसाधारणस्य युष्मदर्थे पर्यवसानं प्रकरणात्, लिङ्गं—वस्तु-सामर्थ्यम् । यथा कुपितो मकरध्वज इत्यत्र समुद्रमन्मथसाधारणस्य मकरध्वजशब्दस्य कोपरूपलिङ्गवशान्मन्मथे पर्यवसानमित्युक्तम्, तथाप्यनतिविरोधादेवमुक्त-मिति द्रष्टव्यम् । ननु एतच्छब्देन कर्मशब्दसमभिव्याहृतेन एतेषां पुरुषाणां कर्त्तेति पूर्वनिर्दिष्टपरामर्शित्वं किन्न स्यादित्यत आह ( लिङ्गवचनविरोधादिति ) नन्वेतेषां पुरुषाणां कर्त्तेत्यनेनोपस्थापितस्य पुरुषकर्मनिर्माणस्यैतच्छब्देन परा-मर्शोऽस्त्वित्यत आह ( पुरुषनिर्माणरूपव्यापारमिति ) (प्रकरणतो वा प्रकृतार्थान्तर-सम्बन्धित्वेन वेति ) साक्षात् परम्परया वा शब्दोपस्थापितत्वेनेत्यर्थः । ( प्रसि-द्धितो वेति ) प्रत्यक्षादिमानान्तरतो वेत्यर्थः । ( प्रकरणादिना सङ्कोचानुपपत्तेरिति )

पुण्यलक्षणं कर्मात्र कर्मशब्दाभिधेयं 'ब्रह्म ते ब्रवाणि' इत्युपक्रम्य ब्रह्मत्वेन बालाकिना निर्दिष्टानामादित्यमण्डलाद्यधिकरणानां पुरुषाणामब्रह्मत्वेन 'मृषा वै खलु मा संवादयिष्ठाः' इति तमब्रह्मवादिनमपोद्य तेनाविदितब्रह्मज्ञापनायाजातशत्रुणेदं वाक्यमवतारितं 'यो वै बालाके' इत्यादि । पुण्यापुण्यलक्षणकर्मसम्बन्धिन आदित्याद्यधिकरणास्तत्सजातीयाश्च पुरुषास्तेनैव विदिता इति तदविदितपुरुषविशेषज्ञापनपरोऽयं कर्मशब्दो न पुण्यापुण्यमात्रवाची, क्रिया-

* श्रुतप्रकाशिका *

प्राबल्यमेतच्छब्दस्वारस्यं च तुल्यम्, तत्कस्यानुरूपोऽर्थनिश्चय इत्यपेक्षायामाह (न च पुण्येति) तुल्यत्वनिवारकबलीयस्त्वसिद्धये हेत्वन्तरमाह (ब्रह्म त इति) ततः किमित्यत्राह (पुण्यापुण्येति) क्रियामात्रवाची वेति दृष्टान्ततयोक्तम् । यथा वेदितव्यतया प्रकृतस्य प्राणनामभिरामन्त्रणाश्रवणादिना प्राणवैलक्षण्यस्य स्फुटत्वात्प्रकरणस्य बालाक्यविदितपुरुषविशेषज्ञापनप्रवृत्तत्वाच्च मुख्यप्राणस्य लोकविदितत्वाच्च कर्मशब्दो न मुख्यप्राणव्यापारभूतक्रियामात्रवाची, एवमेव पुण्यापुण्यमात्रवाची न भवतीत्यर्थः । (आदित्यमण्डलाद्यधिकरणानां पुरुषाणामिति) अस्य वाक्यस्य 'यः कर्त्ता' इत्यनूद्य वेदितव्यविधिपर-

७ भावप्रकाशिका ७

नपुंसकैकवचनान्तनिर्देशार्हस्य प्रकृतस्याभावेनैतच्छब्दस्य सङ्कुचितवृत्तित्वकल्पकाभावादित्यर्थः। प्रकृतार्थान्तरसम्बन्धित्वेनापि केषाञ्चिद्बुद्धिस्थत्वं दर्शयति (चिदचिन्मिश्रेतीति) (हेत्वन्तरमाहेति) ननु पूर्वं बलीयस्त्वहेतोः कस्यापि अनुपन्यासात् कथं हेत्वन्तरोक्ति'रिति चेत् न, अत्रान्तरशब्दो विशेषवचनः 'अन्यदेवेदं परिभाषान्तर'मितिभाष्यं व्याचक्षाणेन कैय्यटेनान्तरशब्दो विशेषवचन इति व्याख्यातत्वात्। केचित्तु—कर्मशब्दस्यादृष्टवच्चलनेपि रूढतया रूढ्योः परस्परकल-

मात्रवाची वा; अपि तु कृत्स्नस्य जगतः कार्यत्ववाची। एवमेव खल्वविदितोऽर्थ उपदिष्टो भवति। पुरुषस्य कर्मसम्बन्धोपलक्षितस्वाभाविकस्वरूपस्याज्ञातस्य वेदितव्यत्वोपदेशे च लक्षणा, कर्मसम्बन्धमात्रस्यैव वेदितव्यस्वरूपलक्षणत्वाद्यस्य कर्म स वेदितव्य इत्येतावतैव तत्सिद्धेः, "यस्य वैतत्कर्म" इत्येतच्छब्दवैयर्थ्यं च। 'य एतेषां कर्ता यस्य वैतत्कर्म' इति पृथङ्-

* श्रुतप्रकाशिका *

त्वात् 'चक्षोस्सूर्यो अजायत' नाभ्या आसीदन्तरिक्षम् ' सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीं च" इत्यादि प्रापकवाक्येषु आदित्यादिपुरुषाणां द्युपृथिव्यादिजगतश्च पृथक् सृष्टिप्रतिपादनादिहापि पुरोवादानुरोधेनादित्यादिभिस्सह जगन्निर्देशाश्रयणं युक्तमिति भावः। क्रियत इत्यवयवार्थस्य प्रवृत्तिनिमित्तत्वज्ञापनाय जगतः कार्य्यत्ववाचीत्युक्तम्, कार्य्यभूतजगद्वाचीत्यर्थः। जगद्वाचित्वे सति अविदितार्थोपदेशपरत्वोपपत्तिमाह (एवमेवेति) अनेकहेत्वपेक्षया एको हेतुर्दुर्बलः, अतः सङ्कोचरहितैतच्छब्दस्वारस्यादविदितपुरुषविशेषोपदेशोपक्रमाच्च पुरोवादानुरोधाच्च कर्मशब्दस्य जगद्वाचित्वं युक्तमित्यर्थः। अविदितत्वं कर्मसम्बन्धरहितस्वरूपस्य पुरुषस्य भवतीत्यत्राह (पुरुषस्येति) कर्मसम्बन्धिवाचिपदस्य कर्मरहितोपस्थापकत्वममुख्यम्, न चावस्थाद्वयसाधारणात्मशब्दोऽपि प्रयुक्तः, यस्य कर्म स वेदितव्य इति हि निर्देशः, अतो लक्षणेत्यर्थः। एतच्छब्दस्य तदुक्तार्थपरत्वेऽनिष्टमाह (यस्य कर्मेति) त्वन्मतेऽपि वैयर्थ्यं तुल्यमित्यत्राह (य एतेषामिति) य एतेषां पुरुषाणां कर्त्तेति

७ भावप्रकाशिका ७

ह्रायमानत्वेन रूढ्युन्मेषाभावरूपहेतोः न च पुण्यापुण्यलक्षणं कर्मेति पूर्वभाष्येऽभिप्रेतत्वात् ब्रह्म ते ब्रुवाणीत्युपक्रम्येत्यादेर्हेत्वन्तरत्वमुपपद्यत इति वदन्ति। युक्त्यन्तरमाह (आदित्यमण्डलाद्यधिकरणानां पुरुषाणां [कर्तेतिवाक्यस्ये]ति) आदित्याद्यधिकरणानां पुरुषाणां कर्तेतिवाक्यस्येत्यर्थः। (आत्मशब्दोपि प्रयुक्त इति)

देशस्य चायमभिप्रायः, ये त्वया ब्रह्मत्वेन निर्दिष्टाः पुरुषाः तेषां यः कर्ता ते यत्कार्यभूताः किं विशिष्याभिधीयते कृत्स्नं जगद्यस्य कार्यम्, उत्कृष्टा अपकृष्टाश्चेतना अचेतनाश्च सर्वे पदार्था यत्कार्यत्वे तुल्याः स परमकारणभूतः पुरुषोत्तमो वेदितव्य इति ॥ जगदुत्पत्तेर्जीवकर्मनिबन्धनत्वेऽपि न जीवः स्वभोग्यभोगोपकरणादेस्स्वयमुत्पादकः, अपि तु स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्ते; अतो न तस्य

---

* श्रुतप्रकाशिका *

निर्देशो बालाकिनोक्तानां कार्य्यत्वेनाब्रह्मत्वज्ञापनार्थम्, तेषां कर्त्तेति प्रतिपादनमात्रेण तदुक्तादित्यादिभ्योऽपि अधिकहिरण्यगर्भादिदेवताविशेषसमन्वितकृत्स्नजगत्कारणत्वं न सिध्यतीति यस्य वैतत्कर्मेत्युक्तम्। जगत्कर्तृत्वस्य सन्निहितविषयतयाऽवच्छिन्नत्वव्यावृत्त्यर्थमेतेषां कर्तेत्युक्तमित्यर्थः। विपक्षे दूषणान्तरमाह (जगदुत्पत्तेरिति) (स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्त इति) न हि घटादिकर्तृत्वं विनियोगादृष्टवतः पुरुषस्य, अपि तु कुलालस्येति भावः। मुक्तपरत्वे कर्मवाचिपदलक्षणा एतच्छब्दवैयर्थ्यं कर्तृशब्दास्वारस्यं चोक्तम्।

* भावप्रकाशिका *

यदि हि 'आत्मा वा अरे द्रष्टव्यः' इतिवत् 'य आत्मा स वेदितव्यः' इति निर्देशः स्यात् तदा साधारणस्यात्मशब्दस्य विवक्षितविशेषपर्यवसानं स्यात्; न चात्र तथा निर्देशोऽस्तीति भावः। (एतच्छब्दस्येति) केचित्तु कर्मसम्बन्धित्वस्यैवेतिभाष्यं यस्य वैतत्कर्मेतीत्युत्तरभाष्यैकवाक्यं मन्वाना एतच्छब्दस्योक्तार्थपरत्वाभावेऽनिष्टमाह, कर्मसम्बन्धित्वमात्रस्यैवेतीति पाठमाद्रियन्ते। ननु यस्य वैतत्कर्मेत्यनेनैव हिरण्यगर्भादिदेवताविशेषसमन्वितकृत्स्नजगत्कारणत्वं सिध्यतीत्येतेषां कर्तेत्यस्य वैयर्थ्यमाशङ्क्याह (जगत्कर्तृत्वस्येति) ततश्च परस्परसाहित्यादसङ्कोचसिद्धिरिति भावः। (विनियोगादृष्टवत इति) भोजनादृष्टवत इत्यर्थः। (कर्मवाचिपदलक्षणेति) कर्मसम्बन्धिवाचिपदलक्षणेत्यर्थः॥

पुरुषान्प्रति कर्तृत्वमुपपद्यते। अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चे-
त्तद्व्याख्यातम् ॥ १७ ॥

अथ यदुक्तम्— जीवलिङ्गान्मुख्यप्राणसङ्कीर्त्तनाच्च

* श्रुतप्रकाशिका *

चरमं हेतुद्वयं बद्धपरत्वेऽपि तुल्यम्। ( अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धमिति ) एतेषां यः कर्त्ता यस्य वैतत्कर्मेति यच्छब्देनानुवादरूपत्वप्रतिपत्तेः 'यतो वा इमानी'त्यादिष्विव सर्ववेदान्तप्रसिद्धः परमपुरुष एवात्र कारणमनूद्यत इति भावः ॥ एवं प्रथमवाक्यगतहेतुः परिहृतः, अथोपरितनवाक्यगतहेतुमनूद्य परिहरति— ॥ जीवमुख्यप्राणलिङ्गान्नेतिचेत्तद्व्याख्यातम् ॥ ( जीवलिङ्गान्मुख्यप्राणसङ्कीर्त्तनाच्चेति ) समासान्तर्गता जीवमुख्यप्राणयोरिति षष्ठी सम्बन्धसामान्यविषया, ततश्च जीवस्य लिङ्गत्वेन सम्बन्धः, मुख्यप्राणस्य च वाच्यतया सम्बन्धः इत्यर्थवशात्सिध्यतीति भावः। यद्वा लिङ्गम्- ज्ञापकम्। उभयोरपि विज्ञाप्यतया ज्ञापकेन सम्बन्ध इति भावः। जीवस्य लिङ्गं ज्ञापकम्, मुख्यप्राणस्य सङ्कीर्त्तनं ज्ञापकं, मुख्यप्राणसङ्कीर्त्तनाच्च लिङ्गादिति ह्युक्तम्। कर्मशब्दस्य स्पन्दरूपक्रियावाचित्वानुपपत्तेः परिशेषात्कीर्त्तनमेव प्राणलिङ्गमित्यभिप्रायः। उपकरणभूतमुख्यप्राणज्ञापकं तत्कीर्त्तनमपि तदुपकरणिनो जीवस्य प्रतिपाद्यत्वे हेतुरित्यभिप्रायेण सूत्रे मुख्यप्राणलिङ्गमुपात्तम्, न तु प्राधान्येन मुख्यप्राणस्य प्रतिपाद्यत्वसाधकतयोक्तम्. तत्प-

* भावप्रकाशिका *

ननु नहि देवदत्तयज्ञदत्तपुत्र इत्युक्ते देवदत्तं प्रति पुत्रत्वेन यज्ञदत्तं प्रति जामातृत्वेन सम्बन्धः प्रतीयत इत्यस्वरसादाह ( यद्वा लिङ्गं ज्ञापकमिति ) ( सूत्रे मुख्यप्राणलिङ्गमुपात्तमिति ) ननु प्राणलिङ्गस्यापि जीवलिङ्गतया विवक्षितत्वे जीवलिङ्गादित्येव सूत्रणीयम्, ननु जीवमुख्यप्राणलिङ्गादिति चेन्न; गोब-

लिङ्गाद्युक्तैवास्मिन् प्रकरणे प्रतिपाद्यते, न परमात्मेति ; तद्व्याख्यातम्— तस्य निर्वाहः प्रतर्दनविद्यायामभिहितः । एतदुक्तं भवति ; यत्रोपक्रमोपसंहारपर्यालोचनया ब्रह्मपरं वाक्यमिति निश्चितं तत्रान्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तत्र प्रतिपादितम् । अत्राप्युपक्रमे 'ब्रह्म ते ब्रुवाणि' इति ब्रह्मोप-

* श्रुतप्रकाशिका *

तिपादकशङ्कानुत्थानस्य दर्शितत्वात् । निर्वाहः—परिहारः । प्रतर्दनविद्यायां कथं परिहृतम्? तत्रातिदेष्टव्यांशः कः ? स चात्र कथं घटत इत्यत्राह ( एतदुक्तं भवतीति ) तदनुरोधेन वर्णनीयानीत्यन्तेनातिदेष्टव्यांश उक्तः, न तूपासनार्थत्वमप्यतिदेष्टव्यमिति भावः । तस्यात्र सङ्घटितत्वं दर्शयति ( अत्राप्युपक्रम इति )

७ भावप्रकाशिका ७

लीवर्दन्यायेन जीवलिङ्गत्वाविशेषेपि प्राणसङ्कीर्तनस्य जीवलिङ्गान्तरापेक्षया प्राधान्यं दर्शयितुं पृथगुक्त्युपपत्तेः । अयं वह्निमान् धूमज्ञापकादित्युक्ते धर्मज्ञापकस्यापि धूमद्वारा वह्निज्ञापकत्वेपि प्राधान्यविवक्षया पृथङ्निर्देशदर्शनादिति भावः । ननु न प्राणसङ्कीर्तनमात्रं जीवलिङ्गम्, अपि तु प्राणोपकरणित्वेन सम्बन्धः । न चात्र प्रकरणे स श्रुतः । 'अथास्मिन् प्राण एवैकधा भवति' इति प्राणस्य करणग्रामैकधाभावाश्रयत्वस्यैव प्रतीत्या प्राणस्य जीवोपकरणत्वस्याप्रतीतेरिति चेन्न, अथास्मिन् प्राण इति व्यधिकरणे सप्तम्याविति पक्षे अस्मिन्निति सप्तम्या इदंशब्दनिर्दिष्टस्य प्राणाश्रयत्वप्रतिपादनात् प्राणभृत्त्वेन जीवस्यैव प्रसिद्धत्वात्प्राणाधारत्वकीर्तनं लिङ्गं भवतीति नानुपपत्तिः , अत एव द्युभ्वाद्यधिकरणे प्राणाधारत्वं जीवलिङ्गतयोपवर्णितम् . ननु 'यथा श्रेष्ठी स्वैर्भुङ्क्ते' इति प्रतिपादितभोक्तृत्वादिरूपजीवलिङ्गापेक्षया 'अथास्मिन् प्राण' इति प्रतिपाद्यस्य प्राणाधारत्वकीर्तनस्य किं प्राधान्यम् ? प्रत्युत द्युभ्वाद्यधिकरणोक्तरीत्या अन्यथासिद्धं चेति चेत्, सत्यम् ; स्थितस्य गतेर्वक्तव्यतया केनचिदाकारेण विशेषस्य समर्थनीयत्वात् जीवप्राणयोस्सम्बन्धस्यातिप्रसिद्धत्वाच्च । ( न तूपासनार्थत्वमप्यतिदेष्टव्यमिति

क्षिप्तम्; मध्ये च 'यस्य वैतत्कर्म' इति निर्दिष्टं न पुरुषमात्रम्, अपि तु निखिलजगदेककारणं ब्रह्मै-वेत्युक्तम्। उपसंहारे च "सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति ब्रह्मोपासनैकान्तं सर्वपापापहति-पूर्वकं स्वाराज्यं च फलं श्रुतम्; अतोऽस्य वाक्यस्य

---

* श्रुतप्रकाशिका *

( ब्रह्मोपक्षिप्तमिति ) ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात्तत्परत्वं स्वतःप्राप्तमुपक्र-मावगतत्वात्प्रबलञ्चेति भावः । ( ब्रह्मैवेत्युक्तमिति ) मध्यगतवाक्यस्य परमा-त्मपरत्वस्योपपादितत्वान्मध्येऽपि परमात्मपरत्वं प्रतिपन्नमित्यर्थः। ( उपसंहारे चेति ) ( सर्वपापाहतिपूर्वकं स्वाराज्यमिति ) अनेन श्रैष्ठ्याधिपत्यशब्दयोः स्वारा-ज्यविशेषणत्वमेव,न तु पृथक्फलवाचित्वम्, चशब्दाभावादित्यभिप्रेतम्। 'सर्वान् पाप्मनोऽपहत्ये'त्यनेन अपहतपाप्मत्वादिगुणाष्टकमुक्तम्, जरादीनामपि पाप्मान्तर्ग-तत्वात्, उक्तञ्च वाक्यकारैः 'स्युः पाप्मानः कालजरामृत्युशोकादयः सङ्ख्यातत्वात्' इति। स्वाराज्यम्—स्वाधीनत्वम् । अतः सत्यकामत्वं सत्यसङ्कल्पत्वं चोक्तम्भवति। तत्स्वाराज्यं संसारिभ्योऽस्य श्रैष्ठ्यरूपमाधिपत्यम्। अधिपतिः— परमात्मा "सर्वस्या-धिपतिः' इति श्रुतेः, तत्सम्बन्ध्याधिपत्यम्। गुणाष्टकं हि ब्रह्मसम्बन्धितया ब्राह्ममु-च्यते, "ब्राह्मेण जैमिनि"रिति; अतो ब्रह्मसम्बन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रैष्ठ्यरूपं स्वाराज्यमेतीति श्रुतेरर्थ इत्यभिप्रायः। अनेन ग्रन्थेन फलविशेषकीर्त्त-नस्य परमात्मपरत्वे हेतुतोपन्यासो ब्रह्माज्ञानवादिनामनुपपन्न इत्यर्थाद्दर्शितो भवति, अविद्यानिवृत्त्यतिरेकेण स्वाराज्यशब्दवाच्याभावाद्दुःखाभावाभिप्रायत्वे लक्षणा। सगुणप्राप्तिविषयं वाक्यमिति चेत्, सत्यम्; निर्गुणप्राप्तेरप्रामाणिकत्वाद्वि-शेषणवैयर्थ्यमेव। न हि ततःपरं प्राप्यान्तरमुक्तम्, उपनिषदः समाप्तत्वात्। स्वाराज्यं फलं श्रूयते, ततः किमित्यत्राह ( अतोऽस्येति ) अत्र निर्वाहप्रकारं दर्शयितुं तन्नो-

* भावप्रकाशिका *

भाव इति ) तल्लिङ्गानन्यथासिद्धावेव तद्विशिष्टोपासनार्थत्वसम्भवादिति भावः।

ब्रह्मपरत्वनिश्चयेन जीवमुख्यप्राणलिङ्गान्यपि तत्परतया वर्णनीयानीति । प्रातर्दने ह्युपासात्रैविध्येन जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम् ; अत्रापि 'अथास्मिन् प्राण एवैकधा भवति' इति सामानाधिकरण्यसम्भवे वैयधिकरण्यसमाश्रयणायोगात् ब्रह्मण्येव प्राणशब्दप्रयोगनिश्चयेन च प्राणशरीरकब्रह्मोपासनार्थं प्राणसङ्कीर्त्तनं लिङ्गं युज्यते ॥ १७ ॥

जीवलिङ्गानां पुनः कथं ब्रह्मपरत्वमित्यत्राह—

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

तुशब्दो जीवसङ्कीर्त्तनेन वाक्यस्य तत्परत्वसम्भा-

---

* श्रुतप्रकाशिका *

क्तं विशेषमाह ( प्रातर्दने हीति ) त्रैविध्येनेति हेतौ तृतीया । प्रयोजनता च हेतुत्वम्, उपासात्रैविध्यसिद्ध्यर्थमित्यर्थः । तस्मिन्निर्वाहेऽत्र सम्भवदंशमाह (अत्रापीति ) प्रातर्दनोपन्यासन्यायेन प्राणलिङ्गस्य ब्रह्मपरत्वमुक्तमित्यर्थः ॥ जीवलिङ्गस्य तु प्रकारान्तरेण निर्वाहप्रतिपादकमनन्तरसूत्रमवतारयितुं जीवलिङ्गनिर्वहणाकाङ्क्षां दर्शयति ( जीवलिङ्गानामिति )—॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ जीवप्राणलिङ्गयोरपि निर्वाहमुक्त्वा मतान्तरेण तयोर्निर्वाहमाहेतिशङ्काव्यावृत्त्यर्थमाह ( तुशब्द इति ) तुशब्दो न पूर्वोक्तनिर्वाहव्यावृ-

* भावप्रकाशिका *

ननु प्राणशरीरब्रह्मोपासनार्थं प्राणसङ्कीर्तनं लिङ्गं युज्यत इति भाष्यमयुक्तम्. अनन्यथासिद्धप्राणलिङ्गोपन्यासे हि एतादृशमुत्तरं वक्तुं युक्तम्. प्राणलिङ्गासद्भावस्य प्रदर्शितत्वादित्याशङ्क्याह ( प्राणलिङ्गस्य ब्रह्मपरत्वमुक्तमित्यर्थ इति ) अनन्यथासिद्धब्रह्मलिङ्गानुरोधात्प्राणशब्दो ब्रह्मपरतया व्याख्यातव्य इति भाष्यार्थः । इतरत्वविवक्षितत्वमिति भावः । ( जीवलिङ्गनिर्वहणाकाङ्क्षामिति ) प्राणशब्द-

वनाऽयावृत्त्यर्थः। अन्यार्थम्- जीवसङ्कीर्त्तनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति जैमिनिराचार्य्यो मन्यते। कुतः ? प्रश्नव्याख्यानाभ्याम्- प्रश्नस्तावत् "तौ ह सुप्तं पुरुषमाजग्मतुः" इत्यादिना सुप्तस्य प्रबुद्धप्राणस्यैव प्राणनामभिरामन्त्रणाश्रवणयष्टिघातोत्थापनाभ्यां प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य पुनर्जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरो दृश्यते :"क्वैष

* श्रुतप्रकाशिका *

त्त्यर्थः। अपि तु पूर्वपक्षव्यावृत्त्यर्थ इत्यर्थः। व्याख्येयं पदं सविशेष्यमाह (अन्यार्थमिति) अन्यः कः ? तदर्थत्वं कथमित्यत्राह (जीवातिरिक्तेति) प्रबुद्धप्राणस्यैव-अनुपरतव्यापारप्राणवत इत्यर्थः। (प्राणनामभिरिति) प्राणनामशब्देन बृहत्पाण्डरवासस्सोमराजशब्दा विवक्षिताः "तौ ह सुप्तं पुरुष-

* भावप्रकाशिका *

रूपलिङ्गस्य पूर्वसूत्रनिर्व्यूढत्वात्तदतिरिक्तजीवलिङ्गनिर्वहणाकाङ्क्षामित्यर्थः। जीवलिङ्गानां पुनः कथं ब्रह्मपरत्वमितिभाष्यस्याप्येवमेवार्थः। ननु तदुक्तमितिसूत्रखण्डेनैव प्राणसङ्कीर्तनरूपलिङ्गस्यैव लिङ्गान्तरस्यापि निर्वाहसम्भवाल्लिङ्गान्तरनिर्वाहाय सूत्रान्तरं किमर्थम् ? न च प्रकारान्तरेण निर्वाहार्थमन्यार्थमिति सूत्रम्, अत एव प्रकारान्तरेण निर्वाहप्रतिपादकमितिटीकाग्रन्थो युक्त इति वाच्यम्, जीवप्राणलिङ्गयोर्द्वयोरपि निर्वाहमुक्त्वेत्याद्युत्तरग्रन्थविरोधादिति चेन्नैवम्, उत्तरत्रानेन निर्वाहवैषम्यप्रदर्शनेनेत्यादिग्रन्थेनान्यार्थमिति सूत्रस्यातिदेशसूत्रानिवर्त्याधिकाशङ्कापरिहारार्थत्वस्य वक्ष्यमाणत्वेनादोषात्॥ प्राणस्य स्वापप्रबोधयोरसम्भवादाह (अनुपरतव्यापारप्राणवत इत्यर्थ इति) प्राणनामभिरामन्त्रणाश्रवणं न प्राणस्य भोक्तृत्वाभावकृतम्, अपितु प्राणव्यापारोपरतिकृतमिति शङ्कां व्युदसितुं प्राणव्यापारानुपरमकीर्तनमिति द्रष्टव्यम्। किञ्च सुषुप्तिदशायां शरीरेन्द्रियेभ्योऽन्यत्वं सुज्ञानमिति तदानीमप्यनुपरतव्यापारात्प्राणादन्यत्वं दुर्ज्ञानमिति तस्य ज्ञापनीयतां दर्शयितुं प्राणस्य व्यापारानुपरमोक्तिः।

एतद्बलाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्' इति । व्याख्यानमपि "यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति एतस्मादात्मनः प्राणाः यथाऽऽ-

* श्रुतप्रकाशिका *

मीयतुः तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासस्सोमराजन्' इति हि श्रुतिः "प्राणो वा व ज्येष्ठश्च श्रेष्ठश्च" इति ज्यैष्ठ्यश्रैष्ठ्यगुणबृहत्त्वात् बृहन्नित्यामन्त्रणम्, पाण्डरवासस्त्वञ्च प्राणधर्मः "किं मे वासः" इति प्राणेन पृष्टे "आपो वासः" इति अपां प्राणवासस्त्वोक्तेः "यच्छुक्लं तदपा'मित्यपां शुक्लवर्णश्रवणाच्च । सप्तान्नब्राह्मणे "अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रः" इति चन्द्रज्योतीरूपत्वदर्शनात् चन्द्रसम्बन्धेन सोमेत्यामन्त्रणं लक्षणया । 'प्राणो वै सम्राट् परं ब्रह्मे'ति सम्राट्त्वश्रवणात् राजन्नित्यामन्त्र्यते, अतः प्राणनामभिरित्युक्तम् । ननु कथमामन्त्रणस्य प्राणविषयत्वनिश्चयः ? तन्निश्चये सति ह्येवं निर्वाह इति । योग्यतासहकृतात् पारिशेष्यात् प्राणविषयत्वनिश्चय इति ब्रूमः, स्वापदशायां काष्ठकल्पत्वाद्देहस्यानात्मत्वं स्फुटम्, इन्द्रियाणान्तु पाण्डरवासस्त्वादिकमनुपपन्नम्, अतः स्वापेऽप्यनुपरतव्यापारस्य प्राणस्याचेतनत्वेनानात्मत्वख्यापनमपेक्षितम्, पाण्डरवासस्त्वादीनां तद्विशेषणत्वं श्रुतिसमाधियोग्यञ्च ; अतो यथोक्त एवार्थ इति । नन्वत्रैव बालाक्यजातशत्रुसम्वादे "स होवाच य एवासौ चन्द्रे पुरुषः" इति प्रकान्ते चन्द्रपर्याये 'बृहत्पाण्डरवासाः सोमो राजे'ति चन्द्रविषयतया श्रुतानामेषां [नामधेयानां] प्राणविषयत्वं कथम् ? उच्यते ; सुषुप्तपुरुषं गत्वा चन्द्रामन्त्रणस्याघटमानत्वाद्वाक्यस्य देहातिरिक्तात्मबोधनपरत्वावगमादर्थान्तरेषु पदानामनन्वयात् प्राणेऽन्वयार्हत्वाच्च तद्विषयत्वमिति । केचित्तु—एतानि चन्द्रनामान्येव, पाण्डरैरंशुभिर्जगच्छादकत्वात् पाण्डरवासस्त्वम् 'मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रोऽधिदैवत'मिति मनसश्चन्द्रदैवत्यत्वाल्लक्षणयेन्द्रियवर्गप्रधानस्य मनस

७ भावप्रकाशिका ७

( इति हि श्रुतिरिति ) ततश्च 'तौ ह सुप्तं पुरुषमाजग्मतुः' इति कचिद्ब्राह्मणकोशे

यतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति जीवादर्थान्तरभूतपरमात्मपरमेव। सुषुप्तस्य हि जीवस्य यत्रोषितस्य जागरितस्वप्नदशासम्बन्धिविचित्रसुख-दुःखानुभवकालुष्यविरहेण सम्प्रसन्नस्य स्वस्थता-पत्तिः, पुनरप्यस्य यस्माद्भोगाय निष्क्रमणं सोऽयं परमात्मा। तथाहि "सता सोम्य तदा सम्पन्नो

* श्रुतप्रकाशिका *

आमन्त्रणम्, तच्चेन्द्रियातिरिक्तत्वप्रतिबोधनार्थमित्याहुः, तत्रापि न दोषः, तदानीं भाष्ये प्राणनामभिरित्यत्र प्राणशब्दः इन्द्रियविषयो योजनीयः, न हि मुख्यप्राणनामभिरित्युक्तम्, अतः प्राणनामभिरिति निर्देशस्य इन्द्रि-याभिप्रायत्वं घटते. जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरः प्रश्नो दृश्यत इत्यन्वयः। क्वैष इति स्वप्नस्थानप्रश्नः। प्राणादिव्यतिरिक्तस्य जीवस्य यष्टिघातोत्थापनादिनाऽव-गतत्वात् प्रश्नस्य जीवातिरिक्तविषयत्वमित्यर्थः। अत एव प्रतिवचनस्यापि जीवातिरिक्तविषयत्वसिद्धिः, व्याख्यानम्— प्रतिवचनम्। सप्तम्यन्तः प्राणशब्दः प्राणशरीरकपरमात्मवाची। प्राणाः— जीवाः। देवाः—इन्द्रियाणि। लोकाः— लोक-नानि, ज्ञानानि। जीवादर्थान्तरपरमात्मपरत्वं दर्शयति (सुषुप्तस्य हीति) सुषु-प्तिस्थानत्वनिष्क्रमणापादानत्वाभ्यां परमात्मत्वं कथमित्यपेक्षायां श्रुत्यन्तरेण तदुप-पादयति (तथा हीति) सद्विद्यावाक्यस्य परमात्मपरत्ववैशद्याय. सुषुप्तिविषयं

* भावप्रकाशिका *

पाठो दृश्यते, सतु लेखकानवधानकृत इति भावः। (प्राणा जीवा इति) न च 'स यदा प्रतिबुध्यते' इत्येकवचनान्तनिर्दिष्टस्य जीवस्य तस्मिन्नेव वाक्ये 'एत-स्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' इतिबहुवचनान्तप्राणशब्देन कथं निर्देश इति वाच्यम्; 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदुच नार्चिषमेवाभिसम्भ-वन्ति' इत्यत्रास्मिन्नित्येकवचनान्तेन निर्दिष्टस्य अर्चिषमभिसम्भवन्तीति बहुवचना-न्तेन निर्देशवत् 'ते धूममभिसम्भवन्ति' इतिबहुवचनान्तनिर्दिष्टस्य 'एष सोमराजा' इत्येकवचनान्तं निर्देशवच्चेदृशवचनवैरूप्यस्य सोढव्यत्वादिति भावः। (श्रुत्यन्त-

भवति प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा । अतः प्रश्नप्रतिवचनाभ्यां जीवसङ्कीर्त्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते । यदुक्तं प्रश्नव्याख्याने जीवपरे सुषुप्तिस्थानं च नाड्य एव, करणग्रामश्च

* श्रुतप्रकाशिका *

श्रुत्यन्तरमुपादत्ते (प्राज्ञेनेति) जीवकीर्तनस्य तदतिरिक्तबोधनार्थत्वं निगमयति (अत इति) अनेन निर्वाहवैषम्यप्रदर्शनेन अतिदेशसूत्रस्याधिकशङ्कापरिहारौ दर्शितौ भवतः । प्रतर्दनविद्यायामुपक्रमे जीवलिङ्गावगमः, महावाक्यस्वारस्यन्तु परमात्मपरत्वे । इह तूपक्रमोपसंहारमध्येषु जीवलिङ्गावगमात्, अत एव परमात्मनश्चिद्विशिष्टतापरत्वाभावेन उपासात्रैविध्याप्रतिपत्तेः प्रातर्दनन्यायानवकाश इत्यधिकाशङ्का । त्रिविधोपासनाभावेपि जीवातिरिक्तब्रह्मबोधनरूपप्रयोजनान्तर-

ø भावप्रकाशिका ø

रेण तदुपपादयतीति ) यद्यपि निष्क्रमणापादानत्वे श्रुत्यन्तरं नोदाहृतम् । तथापि तदप्यभिप्रेतमिति भावः । (उपक्रमोपसंहारमध्येष्विति) यद्यपि ब्रह्म ते ब्रुवाणीत्युपक्रमस्य ब्रह्मपरत्वं सिद्धम् । यस्य वैतत्कर्मेत्यस्य च ब्रह्मपरत्वं 'जगद्वाचित्वा' दिति सूत्र एव साधितम् । सर्वान् पाप्मनोऽपहत्येति उपसंहारस्यापि ब्रह्मपरत्वं सिद्धमेव ; अतश्चोपक्रमोपसंहारैकरूप्यं ब्रह्मपरत्व एव । न जीवपरत्वे । तथापि 'एहि व्येव त्वा ज्ञापयिष्यामि तं पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीयतु' रित्युपक्रमस्य यष्टिघातोत्थापनप्रतिपादकमध्यमस्य 'इदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्यः 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते' इत्याद्युपसंहारस्य च जीवविषयत्वावगमात्प्रतर्दनविद्यायामिवोपसंहारे भूयसां लिङ्गानामश्रवणात्सर्वान् पाप्मानोऽपहत्येति उपसंहारस्य च स यदा विजज्ञौ अथ हत्वाऽसुरान्विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यं परीयाय' इति पूर्ववाक्यश्रुता-सुरजयस्वाराज्यादिवदापेक्षिकसर्वपापहतिस्वाराज्यपरतयाप्युपपत्तेः स्वतन्त्रेण जीवः

**प्राणशब्दनिर्दिष्टे जीव एवैकधा भवतीति । तदयुक्तम्**

* श्रुतप्रकाशिका *

सम्भवादस्त्यवकाश इत्यनन्तरसूत्रे विवक्षितोऽधिकः परिहार इति ह्यवगम्यते । अथ प्रतिवचनवाक्यस्य पूर्वपक्षितमर्थं यदुक्तमित्यादिनाऽनूद्य दूषयति ( तदयुक्तमिति ) ( नाडीनां स्वप्नस्थानत्वादिति ) 'तासु तदा भवती'त्यत्र तदाशब्दः स्वप्नावस्थापरः ''यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति' इत्यनन्तरवाक्ये अथशब्देन तदाशब्दनिर्दिष्टावस्थायाः सुषुप्तेश्च अवस्थान्तरत्वावगमादुत्तरवाक्ये स्वप्नप्रतिषेधेन पूर्ववाक्यस्य स्वप्नप्रसञ्जकतया तद्विषयत्वावगमाच्चेति भावः । ननु यदा स्वप्नं न पश्यति तदा तासु नाडीषु भवति, तदनन्तरमेवास्मिन् प्राण एवैकधा भवति करणग्राम इतीत्थं किं न स्यात्? नैवम् ; अथशब्दास्वारस्यप्रसङ्गात् प्रश्नप्रतिवचनवैषम्यप्रसङ्गाच्च । यदा स्वप्नं न पश्यति तदा तासु भवति, अथास्मिन्नेकधा भवति करणग्राम इत्युक्ते स्वप्नाभावावच्छिन्नकालादनन्तरं करणग्रामोपरम इति प्रतीयते, तथा सति प्रबोधदशायां करणग्रामाप्यय उक्तः स्यात् । तदनुपपन्नम् ; सुषुप्तिप्रथमक्षणादनन्तरं करणग्रामाप्यय इति चेत् तदानीं तदाशब्दस्य क्लिष्टता स्यात् । यदा न पश्यति तदेत्युक्ते हि स्वप्नाभावावच्छिन्नकृत्स्नकालपरत्वं तदाशब्दस्य प्रतीयते , नहि तत्र स्वापारम्भवाचिशब्दः श्रूयते, अतः 'तदा भवति' यदा सुप्त' इति प्रतिवचनवाक्यद्वयं स्वप्नसुषुप्त्यवस्थाद्वयपरम् । किञ्च 'क वा एतदभू'दितिप्रश्नस्य करणग्रामपरत्वमयुक्तम् ; एतच्छब्दस्य प्रकृतपरामर्शित्वात् करणग्रामस्य चाप्रकृतत्वात् 'पुरुषोऽशयिष्टे'ति पुरुषस्य प्रकृ-

* भावप्रकाशिका *

प्रतिपाद्यत इत्यभ्यधिकोत्थानसम्भवादिति भावः । वस्तुतस्तु वैयधिकरण्य निर्देशात्तन्न्यायो नावतरतीति शङ्काभिप्रायः । ( अस्त्यवकाश इति ) यद्यपि जीवप्रतिबोधनस्यान्यार्थत्वे प्रतर्दनविद्यान्यायोऽनपेक्षित एव , जीवलिङ्गस्य त्वाष्ट्रहननादिवज्जीवशरीरकपरमात्मनिष्ठतया योजनीयत्वात्, तथापि यथाकथञ्चित् जीवलिङ्गान्यथासिद्धिरेव प्रतर्दनविद्यान्याय इत्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । ( अवस्थान्तरत्वावगमादिति ) अथ यदा सुप्तः स्वप्नं न कथञ्चन पश्यतीत्यन्वयः । ततश्चाथशब्दोपक्रमं वाक्यमथशब्दश्च पूर्वप्रकृतादर्थान्तरवाची सन् अर्थान्तरद्योतकस्तदाशब्दश्चाध्याहार्य्य इति भावः । ( स्वप्नाभावा-

नाडीनां स्वप्नस्थानत्वात् उक्तरीत्या ब्रह्मण एव सुषु-

* श्रुतप्रकाशिका *

तत्वात् एतच्छब्दः पुरुषविषयः। लिङ्गव्यत्ययस्तु न पुरुषपरत्वविरोधी, प्रातिपदिकस्य प्रधानस्य प्रकृतपरामर्शित्वाद्विभक्तेरप्रधानत्वाच्च, तस्मात् 'क्वैष एतत्, क्व वा एतदि'तिप्रश्नयोः पुरुषविषयत्वे सति प्रतिवचनवाक्ये स्वप्नतदभावयोः प्रतिपाद्यमानत्वात् प्रश्नयोः स्वप्नसुषुप्तिविषयत्वं युक्तम्; अन्यथा सुषुप्तिमात्रप्रश्नस्य स्वप्नसुषुप्तिविषयप्रतिवचनस्य च वैघट्यं स्यात्, अपृष्टस्य प्रतिवचनायोगात्। प्रतिवचनस्यावस्थाद्वयविषयत्वमुपपादितम् । अपृष्टः करणग्रामाप्ययः कथमुच्यत इति चेन्न; तस्य पृथक् प्रश्नानपेक्षत्वात् । सुषुप्तेस्सकलबाह्यान्तःकरणोपरतिरूपतया सुषुप्त्यन्तर्भूतत्वात्तस्य; अत एव करणग्रामस्य सुषुप्तावप्ययो नाम व्यापारोपरतिरेव, न तु स्वरूपनाशः। करणग्रामाप्ययोक्तिश्च जीवस्यैकधाभावोपपादनरूपत्वात्कृता, तत्करणद्वारकनानाविधज्ञानप्रसराभावो हि तस्यैकधाभावः, अतो नाडीनां स्वप्नस्थानत्वम्। सुषुप्त्याधारस्य प्राणशब्दोक्तस्य परमात्मत्वे हेतुमाह ( उक्तरीत्येति ) उदाहृतश्रुत्यन्तरैकार्थ्यलक्षणयेत्यर्थः । ननु प्राणशब्दः प्रथमान्तो जीवविषयो मुख्यप्राणविषयो वा किं न स्यात् ? उच्यते; जीवविषयत्वे लक्षणा स्यात्, प्राणशब्दस्य तत्सहचारिणि वृत्तेः। परमात्मपरत्वे तु न लक्षणा, शरीरवाचिशब्दस्य शरीरिपर्यन्ततया मुख्यत्वात् । नन्वेकधाभवनस्य कर्ताऽध्याहार्य्य इति चेन्न; स्वप्नं यदा न पश्यति तदैकधा भवतीति यत्तदोर्नित्यसम्बन्धेन प्रत्यासत्त्यतिशयात् एकवाक्यतुल्यत्वात् सुषुप्तस्यैवैकधाभवनकर्तृत्वसिद्धेः, अस्मिन्निति पदस्य विशेष्यं चाकाङ्क्षितम्; अतः सप्तम्यन्तत्वं युक्तम्। अन्यथा अस्मिन्निति पदमासन्नजीवपरं स्यात् तदा जीवः स्वस्य स्वयमेवाधार इत्युक्तं स्यात् । तदयुक्तम्; श्रुत्यन्तरविरोधात्। तर्हि मुख्यप्राणस्याधारोऽस्त्विति चेन्न; तस्य सुषुप्तावेकधाभावस्य प्रत्यक्षविरुद्धत्वात् 'स यदा प्रतिबुध्यते' इत्यनन्तरोक्तप्रबोधस्यैकधाभवनसमानकर्तृकत्वस्वारस्यात् सुषुप्तस्यैव प्रबोधसम्भवात् मुख्यप्राणस्य स्वापाभावाच्च। तच्छब्दो हि स्वतः प्रथमानिर्दिष्टपरामर्शी, न तु

❀ भावप्रकाशिका ❀

वच्छिन्नकालादिति ) सुषुप्त्यनवच्छिन्नकालादित्यर्थः । ( अपृष्टः करणग्रामा-

प्तिस्थानत्वाच्च, प्राणशब्दनिर्दिष्टे ब्रह्मण्येव जीवस्य तदुपकरणभूतवागादिकरणग्रामस्य चैकतापत्तिविभागवचनाच्च । अपि चैवमेके– वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे सुषुप्ताद्विज्ञानमयाद्भेदेन तदाश्रयभूतं परमात्मानमामनन्ति "य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात् यत्रैष एतत्

* श्रुतप्रकाशिका *

तदनादरेणाधिकरणपरामर्शी । मुख्यप्राणः प्रथमान्तप्राणशब्दोक्तश्चेत्प्राण एवेत्यवधारणानुपपत्तिश्च, वागाद्यप्ययेऽपि प्रतिपाद्यमाने कथमवधारणं घटते ? अत एव प्रथमान्तत्वे प्राणशब्दस्य करणग्रामविषयत्वमप्ययुक्तम्, तस्य प्रबोधकर्तृत्वायोगात्, अत एव पूर्वपक्षिणोक्तमसिन्निति पदस्य जीवपरत्वं तद्वैयधिकरण्येन प्राणशब्दस्यापि सप्तम्यन्ततयैव करणग्रामाप्ययाधारत्वमपि निरस्तम् । वैयधिकरण्ये स्वतः प्राप्तसामानाधिकरण्यस्वारस्यभङ्गात् एकधाभवनकर्तृत्वेन करणग्राम इत्यध्याहारप्रसङ्गात् 'स यदा प्रतिबुध्यते' इत्युक्तप्रबोधस्य एकधाभवनस्य च समानकर्तृकत्वप्रतिपादकतच्छब्दस्वारस्यभङ्गाभावात् सामानाधिकरण्ये प्राणशब्दस्य लक्षणा पूर्वोक्ता ; अतः प्राणशरीरकतया तच्छब्दवाच्ये ब्रह्मणि सुषुप्तौ जीवावस्थितिपरम् 'अथास्मिन् प्राण एवैकधा भवती'ति वाक्यमित्यभिप्रायेणाह ( प्राणशब्दनिर्दिष्टे ब्रह्मण्येवेति ) सूत्रखण्डं व्याचष्टे ( अपि चैवमेक इति ) क्वैष तदाऽभूत्— क सुप्त इत्यर्थः । प्राणानां विज्ञानेन विज्ञानमादाय– प्राणशब्दवाच्येन्द्रियजन्यं ज्ञानं मनसा सहादायेत्यर्थः । उपरतव्यापारं मन इत्यर्थः । अनेनेन्द्रियाणामपि व्यापारोपरतिः फलिता ।

७ भावप्रकाशिका ७

प्ययः कथमुच्यत इति ) 'तदैनं वाक् सर्वैर्नामभिस्सहाप्येति' इत्यादिनेतिशेषः ।( क सुप्त इत्यर्थ इति ) यत्र यदा जीव एष सुप्तस्तदा क सुप्त इति श्रुत्यर्थ इति भावः । ( उपरतव्यापारं मन इत्यर्थ इति ) मनस आदानं नाम मनोव्यापारोपरमसम्पादनम्, अर्थान्तरस्यासम्भवादिति भावः । ( अनेनेति ) आदानस्य व्यापारोपर-

सुप्तोभूय एष विज्ञानमयः पुरुषस्तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिँच्छेते" इति । आकाशशब्दश्च परमात्मनि प्रसिद्धः 'दहरोऽस्मिन्नन्तर आकाशः' इति । अतोऽत्र जीवसङ्कीर्तनं तस्मादर्थान्तरभूतस्य प्राज्ञस्य

* श्रुतप्रकाशिका *

तेषां मनस्सापेक्षत्वात् । "य एषोऽन्तर्हृदय आकाश" इत्यत्राकाशशब्दस्य भूताकाशव्यावृत्तिसमानप्रकरणस्थप्राणशब्दश्रवणसिद्धा प्राणशब्दस्य च मुख्यप्राणव्यावृत्तिराकाशशब्देन न साध्येति नान्योन्याश्रयणम् । जीवलिङ्गनिर्वाहमुपसंहरति ( अत इति ) परमात्मगुणान्वयस्य परमात्मशब्दसामानाधिकरण्यस्य वा श्रवणे सति तत्तद्विशिष्टोपासनार्थत्वनिर्णयः, अतोऽत्र परमात्मधर्मान्वयश्रवणाभावात् वैयधिकरण्यनिर्देशाच्च अन्यथासिद्धत्वान्नोपासनार्थत्वं जीवलिङ्गस्य, अपि तु भेदज्ञापनार्थत्वमित्यर्थः । कृत्स्नवेदान्तस्य पुरुषप्रधान-

७ भावप्रकाशिका ७

मसम्पादनरूपतया इन्द्रियजन्यज्ञानानामप्यादानं तद्व्यापारोपरतिरूपमित्यर्थः । ( तेषां मनस्सापेक्षत्वादिति ) मनस आदाने मनोव्यापारोपरतिरूपे पर्यवसिते सति तत्साहित्येन निर्दिश्यमानानां वागिन्द्रियादिजन्यज्ञानानामप्यादानस्य तादृग्रूपस्यैव वक्तव्यत्वात् । इतरथा एकक्रियायां साहित्यभङ्गप्रसङ्गात् ततश्च मनोविषये यादृश आदानशब्दार्थस्तादृश एव प्राणविज्ञानेपीति भावः । यद्वा प्राणानां विज्ञानेनेति श्रुतेरयमर्थः । प्राणादीनां वागादिना यद्विज्ञानं स्वस्वविषयग्रहणसामर्थ्यापादनं मनोव्यापाररूपं सामर्थ्यम् । तेन सह मन आदाय—निर्व्यापारं मनः कृत्वेत्यर्थः । एतत्परतया प्राणशब्दवाच्येत्यादिग्रन्थोपि योजनीयः । ज्ञानेन सह मन आदायेति वक्तव्ये मनसा सहेत्युक्तिः फलितार्थकथनपरा, अतश्च श्रुत्या कण्ठोक्तेन्द्रियव्यापारोपरमे फलितत्वोक्तेर्न विरोध इति द्रष्टव्यम् । ( समानप्रकरणस्थप्राणात्मशब्देति) अथास्मिन्प्राण एवैकधा भवति एतस्मादात्मनः' इति कौषीतकीवाक्यस्थप्राणात्मशब्देत्यर्थः । ( वैयधिकरण्यनिर्देशाच्चेति ) तं मामायुर-

परस्य ब्रह्मणः प्रतिबोधनार्थमित्यवगम्यते । तस्माद-स्मिन् वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्का-रणस्य परस्यैव ब्रह्मणो वेदितव्यतयाऽभिधानान्न तन्त्रसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति सिद्धम् ॥ ५ ॥

* श्रुतप्रकाशिका *

परत्वासिद्धिमुपसंहरति ( तस्मादिति ) इह प्रधानोपादानं जीवस्य तेन विना कारणत्वानुपपत्त्यभिप्रायकृतम् । यद्वा अनेनाधिकरणद्वयेन ईक्षत्यानन्दमयाधिकरणाक्षेपद्वयस्य परिहृतत्वज्ञापनार्थम् ॥ जगद्वाचित्वाधिकरणं समाप्तम् ॥

* भावप्रकाशिका *

मृतमुपास्व' इतिवत्सामानाधिकरण्यनिर्देशाभावादित्यर्थः । ननु 'तदभावो नाडीषु तच्छ्रुतेः' इत्यत्र 'तद्यत्रैतत्समस्तस्संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवति' इति वाक्यवशान्नाडीनां सुषुप्तिस्थानत्ववर्णनात् 'अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य' इत्यस्येहापि प्रत्यभिज्ञानान्नाडीनामपि सुषुप्त्याधारत्वमेव । ततश्च 'क्वैष एतद्बालाके पुरुषोऽशयिष्टेति सुषुप्तिस्थानप्रश्नः 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति वाजसनेयके सुषुप्तौ शयनशब्दप्रयोगात् क्व वा एतदभूदिति एकधाभावप्रश्नः, तत्र प्रथमप्रश्नस्यासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यति' इति यदातदाशब्दयोरन्वयस्य युक्तत्वात् द्वितीयप्रश्नस्य प्राण एवैकधा भवतीत्युत्तरमिति किं न स्यादिति चेत् ; सत्यम् ; नाडीनां सुषुप्तिस्थानत्वं समर्थितम् , अथापि अत्र 'हिता नाम नाड्यः' इति श्रूयमाणा नाड्यस्ता इत्यत्र प्रमाणाभावात्, प्रत्युतास्मिन् प्रकरणे 'अथ यदा सुषुप्तो भवति यदा न कस्य न वेद हिता नाम नाड्यो द्वासप्ततिस्सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते । आभिः प्रत्यवसृप्य पुरीतति शेते' इति सुषुप्तिकाले पुरीततिशयनं तत्पूर्वकाले हितनामकनाडीसञ्चरणमिति स्पष्टं प्रतिपादनात् हितनामकनाडीप्राप्तेस्सुषुप्तिसमये असम्भवात् स्वप्नप्रश्नोत्तरमेव नाडीष्वित्यस्येति सिद्धम् । नन्वस्मिन्नधिकरणे पुरुषस्य वेदितव्यतयोपन्यासेन प्रधानपूर्वपक्षस्यैवानु-

## वाक्यान्वयात् ॥ १९ ॥

६ अधिकरणम्

अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं वाक्यं क्वचिद्दृश्यत इति तदतिरिक्त ईश्वरो नाम न कश्चित्सम्भवतीत्याशङ्क्य निराक-

* श्रुतप्रकाशिका *

॥ वाक्यान्वयात् ॥ बद्धासाधारणेन कर्मसम्बन्धवाचिना शब्देन कर्मरहितशुद्धस्वरूपप्रतिपादनं लाक्षणिकमिति जीवपरत्वं निरस्तम्, अत्र तु बद्ध-

७ भावप्रकाशिका ७

स्थानात्कथमुपसंहारे न तन्त्रसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्येति भाष्यमित्याशङ्क्याह ( प्रधानोपादानमिति ) ॥ इति जगद्वाचित्वाधिकरणम् ॥

बृहदारण्यके षष्ठे—"अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः । मैत्रेयी कात्यायनी चेति । तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव, स्त्रीप्रज्ञैव तर्हि कात्यायनी, अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्मैत्रीयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरे अहमस्मात्स्थानादस्मि हन्त ते अनया कात्यायन्या अन्तं करवाणीति स होवाच मैत्रेयी यन्नु म इयं भगोस्सर्वा पृथिवी वित्तेन पूर्णा स्यात् । कथं तेनामृता स्यामिति स्यान्न्वहं तेनामृता आहो नेति नेति होवाच याज्ञवल्क्यः । यथैवोपकरणवता जीवितं तथैव जीवितं स्यात् । अमृतत्वस्य तु नाशास्ति वित्तेनेति सा होवाच मैत्रेयी । येनाहं नामृता स्यां किमहं तेन कुर्याम् । यदेव भगवन्वेत्थ तदेव मे ब्रूहीति स होवाच याज्ञवल्क्यः प्रिया खलु नो भवती सती प्रियमाववर्धत्तर्हि भवति ते व्याख्यास्यामि व्याचक्षाणस्य मे निदध्यास्वेति । स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायाः कामाय जाया प्रिया भवति आत्मनस्तु कामाय जाया प्रिया भवति नवा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति +नवा अरे वित्तस्य +नवा अरे पशूनां +नवा अरे भूतानां +नवा अरे सर्वस्य+आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मन्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योन्यत्रात्मनो क्षत्रं वेद लोकास्तं परादु र्योऽन्यत्रात्मनो लोकान्वेद वेदास्तं+देवास्तं+भूतानि तं +सर्वं तं परा-

रोति । बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' इत्यारभ्य "न वा अरे

---

* श्रुतप्रकाशिका *

मुक्तसाधारणात्मशब्दनिर्देशात् मुक्तलिङ्गश्रवणाच्च शुद्धस्वरूपपरत्वं युक्तमिति शङ्कया सङ्गतिः । यद्वा कर्मशब्दस्य क्रियत इति व्युत्पत्त्या प्रकरणस्य ब्रह्मपरत्वमुक्तम्. कर्मफलभूतभोक्तृत्वश्रवणात् अस्य तथा व्युत्पत्तिविशेषप्रदर्शनासम्भवात् तन्त्रसिद्धपुरुषपरत्वमिति शङ्कया सङ्गतिः । 'उत्तराधिकरणे हि सेश्वरसाङ्ख्यप्रत्यवस्थानम्, तस्मादिदमपि निरीश्वरसाङ्ख्यनिराकरणपरमित्यभिप्रायेणात्रापीत्युक्तम् । (बृहदित्यादि) कर्मफलभोक्तृत्वकण्ठोक्तिमुमुक्षूपास्यत्वादिब्रह्म-

* भावप्रकाशिका *

दात् योऽन्यत्रात्मनस्सर्वं वेद इदं ब्रह्म इदं क्षत्रं इमा लोका इमे देवा इमे वेदाः इमानि भूतानि इदँ सर्वं यदयमात्मा स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः । स यथा शङ्खस्याध्मायमानस्य न बाह्याञ्छब्दान् शक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मानस्य वा शब्दो गृहीतः । स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय वीणायास्तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः । स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्ति एवं वा अरे अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदो अथर्वाङ्गिरस इतिहासपुराणं विद्या उपनिषदः श्लोकाः सूत्राणि च भूतानि अस्यैवैतानि सर्वाणि निश्वसितानि स यथा सर्वासामपां समुद्रमेकायनमेवं सर्वेषां स्पर्शानां जिह्वैकायनमेवं सर्वेषां गन्धानां घ्राणमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां वेदानां वागेकायतनं स यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघन एव तेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति अरे ब्रवीमीति होवाच याज्ञवल्क्यस्स होवाच मैत्रेयी अत्रैव मा भगवान् मोहान्तरमापिपत् न वा अहं विजानामीति स होवाच न वा

सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' इति । तत्र संशयः— किमस्मिन् वाक्ये द्रष्टव्यतयोपदिश्यमानः तन्त्रसिद्धपुरुष एव ? अथवा सर्वज्ञः सत्यसङ्कल्पः सर्वे-

---

* श्रुतप्रकाशिका *

लिङ्गवद्वाक्यं विषयः, पतिजायादिप्रियसम्बन्धप्रतिपादकोपक्रममैत्रेयीब्राह्मणं चतुर्थे षष्ठे च अध्याये श्रूयते, तदुभयमपि मैत्रेयीब्राह्मणशब्देन विषयवाक्यतया विवक्षितम्, यथा 'अन्तस्तद्धर्मोपदेशा'दित्यत्र 'य एषोऽन्तरादित्ये' अत्र 'य एषोऽन्तरक्षिणि' इति वाक्यद्वयं सर्वज्ञस्सत्यसंङ्कल्प इति सिद्धान्तानुगुणविशेषणम्, जीवकर्मविशेषाभिज्ञस्तत्फलदानशक्त इति भावः । किं जगत्कारणवादिवेदान्तप्रतिपाद्यं पुरुषाधिष्ठितं प्रधानम् ? उत ब्रह्म ? इति प्रथमविचारः । तदर्थं बृहदारण्यके मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्त आत्मा किं पञ्चविंशकः ? उत परमात्मा ? इति । किमुपक्रमे पतिजायापुत्रादिप्रियसम्बन्धः आत्मशब्दस्य पञ्च-

७ भावप्रकाशिका ७

अरे मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसयते तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्मा अगृह्यो नहि गृह्यते अशीर्यो न हि शीर्यते असङ्गो नहि सज्जते अव्यथतो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेयि एतावदेव खल्वरे अमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार" इति श्रूयते । एवं चतुर्थपाठके किञ्चिद्भेदेनायं सन्दर्भः पठितः । स्त्रीप्रज्ञा— इतरासां स्त्रीणां यादृशी तादृशी अस्याः प्रज्ञा, ब्रह्मवादिनी न भवतीत्यर्थः । अन्तं करवाणि

श्वर इति । किं युक्तम् ? पुरुष इति । कुतः ? आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः, उपक्रमे तावत्पतिजायापुत्रवित्तपश्वादिप्रियत्वयोगाज्जीवात्मैव प्रतीयते, मध्येऽपि "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति" इत्युत्पत्तिविनाशयोगात्स एवावगम्यते । तथान्ते च "विज्ञातारमरे केन विजानीयात्" इति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते, नेश्वरः, अतस्तन्त्रसिद्धपुरुषप्रतिपादनपरमिदं वाक्यमिति निश्चीयते। ननु "अमृतत्वस्य तु नाशाऽस्ति वित्तेन" इत्युपक्रमात् अमृतत्वप्राप्त्युपायोपदेशपरमिदं वाक्यमित्यवगम्यते, तत्कथं पुरुषप्रति-

* श्रुतप्रकाशिका *

विंशपुरुषपरतामवगमयति, नेति। किं वाक्यावयवानां सर्वेषां परमात्मन्यन्वयासामञ्जस्यम्, उत पञ्चविंश ? इति । यदा परमात्मन्यन्वयासामञ्जस्यं तदा पतिजायादिप्रियसम्बन्धेनात्मशब्दस्य पुरुषपरत्वावगमाद्द्रष्टव्यतयोक्तः पञ्चविंशक इति तदधिष्ठितं प्रधानं वेदान्तवेद्यमिति स्यात् । यदा पञ्चविंशे वाक्यावयवनां समन्वयासामञ्जस्यं तदा पतिजायादिप्रियसम्बन्धादात्मशब्दस्य पञ्चविंशपरत्वानवगमान्मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्तः पञ्चविंशातिरिक्त इति कारणवाक्यानां परमात्मपरत्वं स्यादिति । ( तथान्ते चेति ) आदिमध्यगतजीवहेत्वनुगृहीतो विज्ञातृशब्दस्तत्पर इति भावः । (नन्विति) पतिजायादिप्रियसम्बन्धप्रतिपादकवाक्यात् पूर्वमेवामृतत्वप्राप्त्युपायपरत्वमवगम्यत इत्यर्थः ।

* भावप्रकाशिका *

युवयोर्द्रव्यविभागं करवाणीत्यर्थः । शिष्टमाकरे स्पष्टम् ॥ ( कर्मफलभूतभोक्तृत्वश्रवणादिति ) पतिजायापुत्रादिसम्बन्धेन भोक्तृत्वस्याप्रतीयमानत्वादिति भावः । भाष्ये—मध्येपि विज्ञानघन एवेति । नचैतदुत्पत्तिविनाशवाक्यं प्रकृतद्रष्टव्यार्थ-

पादनपरत्वमस्य वाक्यस्य। तदुच्यते, अत एव ह्यत्र पुरुषप्रतिपादनम्, तन्त्रे ह्यचिद्धर्माध्यासवियुक्तपुरुषस्वरूपयाथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते, अतो जीवात्मनः प्रकृतिवियुक्तं स्वरूपमिहामृतत्वाय "आत्मा वा अरे द्रष्टव्यः" इत्यादिनोपदिश्यते। सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपमेकरूपमिति प्रकृतिवियुक्तस्वात्मयाथात्म्यविज्ञानेन सर्वे एवात्मानो विदिता भवन्तीत्यात्मविज्ञानेन सर्वविज्ञानमुपपन्नम्। देवादिस्थावरान्तेषु सर्वेषु भूतेष्वात्मस्वरूपस्य ज्ञानैकप्रकारत्वात् 'इदं सर्वं यदयमात्मा' इत्यैकात्म्योपदेशः, देवाद्याकारा-

---

* श्रुतप्रकाशिका *

परिहरति ( तदुच्यत इति ) अत एव– अमृतत्वप्राप्त्युपायोपदेशपरत्वादेवेत्यर्थः। ऐक्योपदेशफलभूतमेकविज्ञानेन सर्वविज्ञानं जीवप्रतिपादनपरत्वे कथं घटते? बहवो हि जीवाः, न च मिथः कार्य्यकारणभूताश्चेत्याशङ्क्य प्रकारैक्यादुपपद्यत इत्याह ( सर्वेषामित्यादिना ) ऐक्योपदेशश्च तन्निबन्धन इत्याह ( देवादिस्थावरान्तेष्विति ) ऐक्यविधिशेषभूतभेदनिषेधं प्रति विवक्षन् भेददर्शनेनानर्थप्रतिपादकवाक्यस्यार्थमाह ( देवाद्याकाराणामिति ) देवा-

❁ भावप्रकाशिका ❁

विषयं न भवति, किन्तु तत्प्रत्यगात्मविषय इति वाच्यम्, षष्ठे मैत्रेयीब्राह्मणे 'यथा सैन्धवघनोनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एव एतेभ्यो भूतेभ्यस्समुत्थाय' इत्यादिना प्रकृतस्य द्रष्टव्यात्मन एवायमात्मेति परामृष्टस्योत्पत्तिविनाशवर्णनात्, एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैभ्यो भूतेभ्यः' इति चतुर्थे मैत्रेयीब्राह्मणेपि प्रकृतपरामर्शीदंशब्दस्य सत्त्वेनोत्पत्तिविनाशप्रतिपादनं द्रष्टव्यात्मविषयमेवेति भावः। ननु कथमुपसंहारगतस्य विज्ञातारमरे इत्यस्य जीवप्रत्यायकत्वं तस्य जीवपरसाधारणत्वादित्यत आह ( जीवहेत्वनुगृहीत इति ) केचित्तु–'विज्ञा

श्वर इति। किं युक्तम्? पुरुष इति। कुतः? आदि-मध्यावसानेषु पुरुषस्यैव प्रतीतेः, उपक्रमे तावत्पति-जायापुत्रवित्तपश्वादिप्रियत्वयोगाज्जीवात्मैव प्रतीयते, मध्येऽपि "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति" इत्युत्पत्तिवि-नाशयोगात्स एवावगम्यते। तथान्ते च "विज्ञातार-मरे केन विजानीयात्" इति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते, नेश्वरः, अतस्तन्त्रसिद्धपुरुषप्रतिपाद-नपरमिदं वाक्यमिति निश्चीयते। ननु "अमृतत्वस्य तु नाशाऽस्ति वित्तेन" इत्युपक्रमात् अमृतत्वप्राप्त्युपायो-पदेशपरमिदं वाक्यमित्यवगम्यते, तत्कथं पुरुषप्रति-

* श्रुतप्रकाशिका *

विंशपुरुषपरतामवगमयति, नेति। किं वाक्यावयवानां सर्वेषां परमात्मन्यन्वया-सामञ्जस्यम्, उत पञ्चविंश? इति। यदा परमात्मन्यन्वयासामञ्जस्यं तदा पतिजायादिप्रियसम्बन्धेनात्मशब्दस्य पुरुषपरत्वावगमाद्द्रष्टव्यतयोक्तः पञ्च-विंशक इति तदधिष्ठितं प्रधानं वेदान्तवेद्यमिति स्यात्। यदा पञ्चविंशे वाक्या-वयवनां समन्वयासामञ्जस्यं तदा पतिजायादिप्रियसम्बन्धादात्मशब्दस्य पञ्च-विंशपरत्वानवगमान्मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्तः पञ्चविंशातिरिक्त इति कारणवाक्यानां परमात्मपरत्वं स्यादिति। (तथान्ते चेति) आदिमध्य-गतजीवहेत्वनुगृहीतो विज्ञातृशब्दस्तत्पर इति भावः। (नन्विति) पतिजायादिप्रि-यसम्बन्धप्रतिपादकवाक्यात् पूर्वमेवामृतत्वप्राप्त्युपायपरत्वमवगम्यत इत्यर्थः।

ॐ भावप्रकाशिका ॐ

युवयोर्द्रव्यविभागं करवाणीत्यर्थः। शिष्टमाकरे स्पष्टम्॥ (कर्मफलभूतभोक्तृत्व-श्रवणादिति) पतिजायापुत्रादिसम्बन्धेन भोक्तृत्वस्याप्रतीयमानत्वादिति भावः। भाष्ये—मध्येपि विज्ञानघन एवेति। नचैतदुत्पत्तिविनाशवाक्यं प्रकृतद्रष्टव्यार्थ-

पादनपरत्वमस्य वाक्यस्य । तदुच्यते, अत एव ह्यत्र पुरुषप्रतिपादनम्, तन्त्रे ह्यचिद्धर्माध्यासवियुक्तपुरुषस्वरूपयाथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते, अतो जीवात्मनः प्रकृतिवियुक्तं स्वरूपमिहामृतत्वाय "आत्मा वा अरे द्रष्टव्यः" इत्यादिनोपदिश्यते। सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपमेकरूपमिति प्रकृतिवियुक्तस्वात्मयाथात्म्यविज्ञानेन सर्वे एवात्मानो विदिता भवन्तीत्यात्मविज्ञानेन सर्वविज्ञानमुपपन्नम्। देवादिस्थावरान्तेषु सर्वेषु भूतेष्वात्मस्वरूपस्य ज्ञानैकप्रकारत्वात् 'इदं सर्वं यदयमात्मा' इत्यैकात्म्योपदेशः, देवाद्याकारा-

* श्रुतप्रकाशिका *

परिहरति ( तदुच्यत इति ) अत एव- अमृतत्वप्राप्त्युपायोपदेशपरत्वादेवेत्यर्थः । ऐक्योपदेशफलभूतमेकविज्ञानेन सर्वविज्ञानं जीवप्रतिपादनपरत्वे कथं घटते? बहवो हि जीवाः, न च मिथः कार्य्यकारणभूताश्चेत्याशङ्क्य प्रकारैक्यादुपपद्यत इत्याह ( सर्वेषामित्यादिना ) ऐक्योपदेशश्च तन्निबन्धन इत्याह ( देवादिस्थावरान्तेष्विति ) ऐक्यविधिशेषभूतभेदनिषेधं प्रति विवदन् भेददर्शनेनानर्थप्रतिपादकवाक्यस्यार्थमाह ( देवाद्याकाराणामिति ) देवा-

* भावप्रकाशिका *

विषयं न भवति, किन्तु तत्सृज्यात्मविषय इति वाच्यम्, षष्ठे मैत्रेयीब्राह्मणे 'यथा सैन्धवघनोनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एव एतेभ्यो भूतेभ्यस्समुत्थाय' इत्यादिना प्रकृतस्य द्रष्टव्यात्मन एवायमात्मेति परामृष्टस्योत्पत्तिविनाशवर्णनात्, एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैभ्यो भूतेभ्यः' इति चतुर्थे मैत्रेयीब्राह्मणेपि प्रकृतपरामर्शीदंशब्दस्य सत्त्वेनोत्पत्तिविनाशप्रतिपादनं द्रष्टव्यात्मविषयमेवेति भावः । ननु कथमुपसंहारगतस्य विज्ञातारमरे इत्यस्य जीवप्रत्यायकत्वं तस्य जीवपरसाधारणत्वादित्यत आह ( जीवहेत्वनुगृहीत इति ) केचित्तु-'विज्ञा

णामनात्माकारत्वात् "सर्वं तं परादात्" इत्यादिनाऽन्यत्वनिषेधश्च । "यत्र हिं द्वैतमिव भवति" इति च नानात्वनिषेधेनैकस्वरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं मिथ्येत्युच्यते । "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" इत्याद्यपि प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वाज्जगदुत्पत्तेरुपपद्यते । एवमस्मिन् वाक्ये पुरुषपरे निश्चिते सति तदैकार्थ्यात्

* श्रुतप्रकाशिका *

द्याकारस्यानात्माकारत्वात्तस्य तदनन्यत्वमुक्तम् ; तस्मादात्मनोऽन्यत्वदर्शनं नाम निष्कृष्टस्वरूपव्यतिरिक्तदेवाद्याकारदर्शनमिति तस्यानर्थहेतुत्वमुच्यत इत्यर्थः । प्रबुद्धस्य भेदानिषेधं प्रतिवदति ( यत्र हीति ) अनात्माकाराणां देवत्वादीनां बहुत्वादेकाकार आत्मनि देवत्वादीनि न सन्तीति निषिध्यत इत्यर्थः । एवमनर्थहेतुतया कदाचिन्निवृत्तिहेतुमत्तया च प्रतिपन्नं भेददर्शनं देवादिभेदर्शतनमेवेत्युक्तं भवति । कारणत्वं कथमित्यत्राह ( तस्य ह वा इति ) जीवाधिष्ठितप्रधानादाकाशगुणशब्दोत्पत्तिरिति ऋग्वेदादिकारणत्वमुपपद्यत इत्यर्थः । एवं पूर्वपक्षयुक्तिवशात् फलितमयोगव्यवच्छेदप्रतिक्षेपं दर्शयति ( एवमस्मिन्निति ) पादसङ्गत्यादिकं पूर्ववत् ॥ राद्धान्ते— समञ्जसो

७ भावप्रकाशिका ७

नं यज्ञं तनुते' 'विज्ञानमयः' इत्यादौ जीवस्यैव मनोवृत्तिविशेषत्वरूपविज्ञानमयत्वप्रसिद्ध्या विज्ञानघनशब्दस्य जीवलिङ्गवाचितया जीववाचित्ववत् विज्ञातृशब्दस्यापि तथात्वोपपत्तौ दोषाभावादिति वदन्ति । ( तस्य तदन्यत्वमुक्तमिति ) उत्तरमन्थार्थोपयुक्ततयेति भावः । ( अन्यत्वदर्शनं नामेति ) अन्यत्वनिषेध इति भाष्यस्य 'योन्यत्रात्मनस्सर्वं वेदे'तिश्रुत्यनुसारादन्यत्वदर्शननिषेध इत्यर्थं सिद्धवत्कृत्यैतदुक्तमितिद्रष्टव्यम् । ( निष्कृष्टस्वरूपेति ) अन्यत्त्वदर्शनं नामात्मस्वरूपे स्वान्यभूतदेवतादित्वदर्शनं निषिध्यत इत्यर्थः । ततश्च श्रुतेः पूर्वपक्षेऽयमर्थः, अन्यत्र द्वितीयार्थे त्रल्प्रत्ययः । आत्मनोऽन्यद्ब्रह्मक्षत्रादि सर्वं य आत्मत्वेन वेद तं सर्व-

सर्वे वेदान्तास्तन्त्रसिद्धं पुरुषमेवाभिदधतीति तदधिष्ठिता प्रकृतिरेव जगदुपादानम्, नेश्वरः— इति ॥

एवं प्राप्ते प्रचक्ष्महे— वाक्यान्वयादिति । सर्वेश्वर एवास्मिन्वाक्ये प्रतीयते । कुतः ? एवमेव हि वाक्यावयवानामन्योन्यान्वयः समञ्जसो भवति । "अमृतत्वस्य तु नाशाऽस्ति वित्तेन" इति याज्ञवल्क्येनाभिहिते "येनाऽहं नामृता स्यां किमहं तेन कुर्य्यां यदेव भगवान् वेद तदेव मे ब्रूहि" इत्यमृतत्वानुपायतया वित्ताद्यनादरेणामृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यतयोपदिष्टोऽयमात्मा परमात्मैव, "तमेवं विदित्वाऽतिमृत्युमेति" "तमेवं विद्वानमृत इह भवति नान्यः पन्थाः" इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात् । परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनः स्वरूपयाथात्म्य[विज्ञान]मपवर्गसाधनपरमपुरुषवेदनोपयोगितयाऽनग-

---

* श्रुतप्रकाशिका *

भवति— स्वारसिको भवतीत्यर्थः । अस्वरसान्वयो हि परैरुच्यते, श्रुतेः स्वारस्यं नाम सजातीयश्रुत्यैकार्थ्यम्, न तु बाह्यस्मृत्यैकार्थ्यमित्यभिप्रायेणाह ( तमेवं विदित्वेति ) श्रुतावपि प्रजापतिवाक्यादिषु जीवस्वरूपस्य प्रतिपाद्यमानत्वात्तदैकार्थ्यात्स्वारस्यमित्यत्राह ( परमपुरुष इति ) प्रधानभूतोपायपरवाक्यैकार्थ्यं स्वारसिकमित्यर्थः । श्रुत्यन्तरैकार्थ्यात् ब्रह्मवेदनस्यैवामृतत्वोपायत्व-

॥ भावप्रकाशिका ॥

मपि ब्रह्मक्षत्रादिलक्षणं पराकुर्यादिति । प्रबुद्धस्य—उत्पन्नतत्त्वज्ञानस्येत्यर्थः । (परैरुच्यत इति) साङ्ख्यैः पूर्वपक्षिभिरुच्यत इत्यर्थः । (अल्पशक्तित्वं मात्रचाऽभिप्रेत-

न्तव्यम् , न स्वत एवोपायत्वेन ; अतोऽत्र परमात्मै-
वामृतत्वोपायतया 'द्रष्टव्यः' इत्यादिनोपदिश्यते ।
तथा "तस्य ह वा एतस्य महतो भूतस्य निश्वसित-
मेतद्यदृग्वेदः" इत्यादिना कृत्स्नस्य जगतः कारण-
त्वमुच्यमानं परमपुरुषादन्यस्य कर्मपरवशस्य मुक्तस्य
निर्व्यापारस्य च पुरुषमात्रस्य न सम्भवति । तथा
"आत्मनो वा अरे दर्शनेन" इत्यादिना एकविज्ञानेन
सर्वविज्ञानमभिधीयमानं सर्वात्मभूते परमात्मन्येवावक-
ल्पते । यत्त्वेतदेकरूपत्वादात्मनामेकात्मविज्ञानेन
सर्वात्मविज्ञानमुच्यत इति , तदयुक्तम् ; अचेतनप्रपञ्च-

* श्रुतप्रकाशिका *

मित्युपपादितमुपसंहरति ( अतोऽत्रेति ) एवमुपक्रमवाक्यसामञ्जस्यं दर्शितम् । वाक्यान्तराणामप्यन्वयस्वारस्यं दर्शयन् कारणत्वं स्वपक्षोपपादकमेव सत्परपक्षप्रतिक्षेपकं चेत्याह ( तथा तस्येति ) बद्धस्य सर्वज्ञत्वाद्ययोगान्मुक्तस्य जगद्व्यापारशून्यत्वाच्च कृत्स्नजगत्कारणत्वं न सम्भवतीत्यर्थः । पुरुषमात्रस्य— जीवमात्रस्य । अल्पशक्तित्वं मात्रचा अभिप्रेतम् । यद्वा कर्मपरवशस्य मुक्तस्येतिपदाभ्यां स्वपक्षे सर्वावस्थस्य जीवस्य जगत्कारणत्वानुपपत्तिरुक्ता । साङ्ख्यमतेऽपि तदनुपपत्तिमाह ( निर्व्यापारस्य च पुरुषमात्रस्येति ) निमित्तोपादानभावानुगुणसङ्कल्पशक्तियोगाभावादिति भावः । कारणत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि राद्धान्तोपपादकमित्याह ( तथा आत्मन इति ) एकविज्ञानेन सर्वविज्ञाननिर्वाहं परोक्तं यत्त्वेतदित्यादिनाऽनूद्य तदयुक्तमित्यादिना दूष-

७ भावप्रकाशिका ७

मिति ) मात्रपदस्येतरव्यवच्छेदार्थस्य महाशक्तिव्यवच्छेदकत्वमिति भावः । निर्व्यापारस्येत्येतन्मुक्तस्यैतद्विशेषणतया व्याख्यायेदानीं पुरुषमात्रस्येत्येतत्परतया व्याचष्टे ( यद्वा कर्मपरवशस्येत्यादिना ) ( स्ववाक्यत्वज्ञापनायेति ) स्ववाक्यत्वात्प्रयुक्त

ज्ञानाभावेन सर्वविज्ञानाभावात् । प्रतिज्ञोपपादनाय च 'इदं ब्रह्मेदं क्षत्रम्' इत्युपक्रम्य' इदं सर्वं यदयमात्मा' इति प्रत्यक्षादिसिद्धं चिदचिन्मिश्रं प्रपञ्चमिदमिति निर्दिश्यैतदयमात्मेत्यैकात्म्योपदेशश्च परमात्मन एवोपपद्यते , न हीदंशब्दवाच्यं चिदचिन्मिश्रं जगत्पुरुषेणाचित्संसृष्टेन तद्वियुक्तेन स्वरूपेण वाऽवस्थितेन चैक्यमुपगच्छति ; अत एव "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' इति व्यतिरिक्तत्वेन सर्ववेदननिन्दा च ; तथा प्रथमे च मैत्रेयीब्राह्मणे "महद्भूतमन-

* श्रुतप्रकाशिका *

यति । ऐकात्म्योपदेशानुपपत्तिमाह ( प्रतिज्ञोपपादनायेति ) श्रुतिस्थेदंशब्दस्य स्थाने एतच्छब्दो भाष्ये स्ववाक्यत्वज्ञापनाय प्रयुक्तः, इदमयमात्मेति कार्यस्य कारणतादात्म्योपदेशः। जीवस्य तदनुपपत्तिमुपपादयति (न हीति) कार्य्यस्य कारणेन हि स्वरूपैक्यसम्भवः, सूक्ष्मस्थूलचिदचिच्छरीरकः परमात्मेति कार्य्येण जगतैक्यं तस्यैव हि सम्भवति, न तु बद्धस्य वा मुक्तस्य वा जीवस्याकारणभूतस्य सम्भवतीत्यर्थः। ( अत एवेति ) सर्वस्य परमात्मात्मकत्वादेवातदात्मकत्वानुसन्धाननिषेधः, न तु देवादिदृष्टिनिषेधः, प्रागुक्तहेतुनिबन्धनत्वात् भेदनिषेधस्येत्यर्थः। ( प्रथमे चेति ) मैत्रेयीब्राह्मणानामनेकत्वात्प्रथम इति

॥ भावप्रकाशिका ॥

इत्यर्थः। स्वतन्त्रस्यापर्यनुयोज्यत्वादिति भावः। ततश्च स्ववाक्यत्वज्ञापनस्य किं प्रयोजनमिति न चोदनीयम्। ( नतु देवादिदृष्टिनिषेध इति ) आत्मस्वरूप इति शेषः। ( प्रागुक्तहेतुनिबन्धनत्वादिति ) अब्रह्मात्मकत्वस्य प्रागुक्तत्वाद्भेदनिषेधः, अब्रह्मात्मकभेदनिषेध इत्यर्थः। यत्र हि देहात्मविवेकं प्रकृत्य ज्ञानैकाकारत्वेनात्मनामैक्यं प्रतिपाद्यते तत्र श्रूयमाणस्य भेदनिषेधस्यैव देवादिभेदनिषेधत्वमिति भावः। ( मैत्रेयीब्राह्मणानामनेकत्वादिति ) चतुर्थे षष्ठे च मैत्रेयीब्राह्मणस्य दर्शनादिति

न्तमपारम्" इति श्रुता महत्त्वादयो गुणाः परमात्मन एव सम्भवन्ति; अतस्स एवात्र प्रतिपाद्यते। यत्तूक्तं पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो जीवात्मन उपक्रमे त्वन्वेष्टव्यतया प्रतिपादनात्तद्विषयमेवेदं वाक्यमिति; तदयुक्तम्, 'आत्मनस्तु कामाय' इत्यात्मशब्देन जीवात्मसंशब्दने तस्य "आत्मा वा अरे द्रष्टव्यः" इत्यनेनानन्वयप्रसङ्गात्। "आत्मा वा अरे द्रष्टव्यः" इत्यात्मनो द्रष्टव्यत्वोपयोगितया 'आत्मनस्तु कामाय' इत्युपदिष्टमिति प्रतीयते। आत्मनस्तु कामाय—आत्मनः कामसम्पत्तये; काम्यन्त इति कामाः, आत्मन इष्टसम्प-

---

* श्रुतप्रकाशिका *

विशेषितम्। उत्तरमैत्रेयीब्राह्मणे 'महद्भूतमनन्तमपार'मिति विशेषणाश्रवणेऽपि 'अनुक्तमन्यतो ग्राह्य'मिति न्यायात् महत्त्वभूतत्वादिकमप्युक्तं भवतीति भावः। पतिजायादिभोग्यत्ववाचिवाक्यस्याप्यन्वयस्वारस्यं हि सूत्राभिप्रेतम् "वाक्यावयवेषु प्रधानभूतोपक्रमावयवस्य वाक्यशब्देनाविवक्षितत्वानुपपत्तेः, तस्मात्तदुपपादयितुं परोक्तार्थं यत्तूक्तमित्यादिनाऽनूद्य दूषयति (तदयुक्तमित्यादिना) अनन्वयस्यानिष्टत्वं कथम्, तस्य प्रसङ्गो वा कथमित्यत्राह (आत्मा वा इति) "आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः" इत्युक्ते 'आत्मनस्तु कामाये'त्युक्तस्य वाक्यस्यात्मनो द्रव्यतोपयोगित्वं हि स्वरसतः प्रतीयत इत्यर्थः। अतो मा भूदन्वय इति न वाच्यमिति दर्शितम्। अथ जीवपरत्वेऽनन्वयमुपपादयति (आत्मनस्त्वित्यादिना) इष्टसम्पत्तये— सुखादिसम्पत्तये। ततः

* भावप्रकाशिका *

भावः। मैत्रेयीब्राह्मणानामिति बहुत्वमविवक्षितम्। काण्वमाध्यन्दिनपाठभेदेन वा द्रष्टव्यम्। भाष्ये—प्रतिनियतदेशकालस्वरूपपरिमाणामिति। लोके हि किञ्चिद्वस्तु कस्मिंश्चिद्देशे कस्मिंश्चित्काले कञ्चित्पुरुषविशेषं प्रति तारतम्येन प्रियतमता-

त्तय इति यावत्। न च जीवात्मन इष्टसम्पत्तये पत्यादयः प्रिया भवन्तीत्युक्ते सति तस्य जीवस्य स्वरूपमन्वेष्टव्यं भवति। प्रियमेव ह्यन्वेष्टव्यम्, न तु प्रियं प्रति शेषिणः प्रियवियुक्तं स्वरूपम्; यस्मादात्मन इष्टसम्पत्तये पत्यादयः प्रिया भवन्ति तस्मात्पत्यादिप्रियं परित्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसङ्गतं भवति। प्रत्युत न पत्यादिशेषतया पत्यादीनां प्रियत्वम्, अपि त्वात्मनः शेषतया पत्यादीनां प्रियत्वमित्युक्ते स्वशेषतया त एवोपादेयाः स्युः। "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यस्य परेणानन्वये वाक्यभेदः प्रसज्यते, अभ्युपगम्यमानेऽपि वाक्यभेदे पूर्ववाक्यस्य न किञ्चित्प्रयोजनं दृश्यते; अतः पत्यादि सर्वं

* श्रुतप्रकाशिका *

किमनन्वयस्येत्यत्राह ( न चेति ) नेत्यस्यान्वेष्टव्यं भवतीत्युत्तरत्रान्वयः। कथमन्वेष्टव्यत्वासिद्धिरित्यत्राह ( प्रियमेव हीति ) पत्यादीनामात्मनः प्रियत्वे तेषामन्वेष्टव्यत्वं स्यात्, प्रियस्यैव पुरुषार्थत्वादित्यर्थः। एवकाराभिप्रेतमाह ( न त्विति ) प्रियवियुक्तम्— पुत्रपत्यादिवियुक्तम्। तद्विवृणोति ( यस्मादिति ) न केवलं स्वाभिमतार्थासङ्गतिः, अनभिमतार्थसङ्गतिश्चेत्याह ( प्रत्युतेति ) ( त एवोपादेयाः स्युरिति ) सकलेतरत्यागपूर्वकमात्मनो द्रष्टव्यत्वस्य विरोध एव स्यादित्यर्थः। जीवपरत्वेऽनन्वयश्चेन्माभूदन्वय इत्यत्राह ( परेणेति ) परेण— 'आत्मा वा अरे द्रष्टव्य' इति परेण वाक्येन। वाक्यभेदः— महावाक्यभेदः। एकवाक्यत्वेन निर्वाहे सुशकेऽपि वाक्ये भेदोऽनुपपन्नः "सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते" इति न्यायादित्यर्थः। वाक्यभेदाभ्युपगमेऽपि प्रयोजनाभावाच्च अन्वयोऽनुपपन्न इत्याह ( अभ्युपगम्यमानेऽपीति ) एवं परपक्षानुपपत्तेः परिशेषादर्थान्तरपरत्वं सिद्धमित्याह ( अत इति ) उपपन्नार्थः क इत्यत्राह

प्रियं परित्यज्यात्मन एवान्वेष्टव्यत्वं यथा प्रतीयते तथा वाक्यार्थो वर्णनीयः, सोऽयमुच्यते 'अमृतत्वस्य तु नाशाऽस्ति वित्तेन' इति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपायतामुक्त्वा वित्तपुत्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्यादिस्वरूपप्रयुक्तम्, अपि तु निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम्; अतो य एव स्वयं निरतिशयानन्दस्सन्नन्येषामपि प्रियत्वलेशास्पदत्वमापादयति स परमात्मैव द्रष्टव्य इत्युपदिश्यते। तदयमर्थः, न वा अरे पत्युः कामाय पतिः प्रियो भवति— न हि पतिजायापुत्रवित्ताद्यो मत्प्रयोजनायाहमस्य प्रियः स्यामिति स्वसङ्कल्पात्प्रिया भवन्ति, अपि त्वात्मनः कामाय, परमात्मनः स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तय इत्यर्थः। परमात्मा हि कर्मभिराराधितस्तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणः

---

* श्रुतप्रकाशिका *

( सोऽयमुच्यत इति ) ( स्वयं निरतिशयानन्दस्सन्नन्येषामपि प्रियत्वलेशास्पदत्वमापादयतीति ) अन्येषामानन्दो यदधीनस्तस्यानन्दोऽनवधिक इत्यर्थसिद्धम्। यथाऽन्येषां विद्यां धनं वा ददतः पुरुषस्य ज्ञानाधिकत्वं धनाधिकत्वं चार्थसिद्धम् "स एको ब्रह्मण आनन्दः" "यतो वाचो निवर्तन्ते" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिश्रुत्यन्तरेषु तत्स्पष्टमभिहितं चेत्यभिप्रायः। उपदिश्यत इत्यन्तेन श्रुतेस्तात्पर्यार्थ उक्तः। अस्यार्थस्य शब्दवाच्यत्वं कथमित्यत्राह ( तदयमर्थ इति ) परमात्मनः स्वाराधकाभिमतदानस्येष्टत्वं विवृणोति ( परमात्मा हीति ) ( प्रतिनियतेति ) स्वरूपनियमो नाम स्रक्चन्दनादिषु

भाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति "एष ह्येवानन्दयाति" इति श्रुतेः। न तु तत्तद्वस्तुस्वरूपेण प्रियमप्रियं वा। यथोक्तं "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते॥ तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्" इति। 'आत्मनस्तु कामाय' इत्यस्य जीवात्मप-

* श्रुतप्रकाशिका *

अस्येदमेव भोग्यं नान्यदिति नियमः। परिमाणनियमः भोग्यत्वपरिमाणनियमः। न हि मनुष्यभोग्यस्य स्रगादेर्देवभोग्यस्रगादितुल्यभोग्यत्वमस्ति। आश्रितप्रियप्रतिलम्भकत्वे श्रुतिमाह (एष ह्येवेति) (तदेव प्रीतय इति) कस्यचिद्वस्तुनः प्रियत्व तत्स्वरूपप्रयुक्तं चेत्सर्वदा सर्वेषां प्रियत्वं स्यात्। नच तदस्ति, कञ्चित्प्रति कदाचित्प्रियत्वमप्रियत्वं च परसङ्कल्पाधीनमित्यर्थः। ननु "आत्मनस्तु कामाय सर्वं प्रियं भवति" "आत्मा वा अरे द्रष्टव्यः" इति वाक्ययोर्जीवपरत्वेऽप्यन्वयस्सम्भवति। तथाहि; न हि तत्तत्परतन्त्रो भोक्ता भुङ्क्ते, अपि तु स्वातन्त्र्येण तत्स्वीकारपरित्यागक्षमः, तस्मात् प्रकृष्टानन्दरूपे निष्कृष्ट आत्मनि तेनैव स्वातन्त्र्येण प्रवर्तेतेतीति शङ्कायाम् 'आत्मनस्तु कामाय' इत्यस्य जीवपरत्वाभ्युपगमेऽपि 'आत्मा वा अरे द्रष्टव्यः" इतिवाक्यस्य परमात्मपरत्व एव स्वारस्यमुपपादयति (आत्मनस्तु कामायेत्यस्येति) येन स्वातन्त्र्येण स्वात्मदर्शने प्रवर्त्तते, तेनैवानवधिकातिशयानन्दरूपपरब्रह्मप्राप्तौ प्रवर्त्तते, तस्यैव स्वाभाविकनिरतिशयानन्दयोगादित्यर्थः। प्रकृष्टानन्दस्यैव प्रेप्सितव्यतारूपार्थौचित्यातिशयादात्मशब्दार्थवैरूप्यं सोढव्यम्, मुण्डोपनिषदि "तपसा चीयते ब्रह्म'

* भावप्रकाशिका *

मनुभवतीत्यर्थः। (परतन्त्रो भोक्ता भुङ्क्त इति) स्वेष्टनिवृत्त्यर्थं प्रीतिं कुर्वन् स्वातन्त्र्यं लभते, परेष्टनिवृत्त्यर्थं प्रीतिमतः पारतन्त्र्यमवश्यम्भावीति भावः। भोक्ता भुङ्क्त इति प्रियशब्दस्य भोग्यत्वार्थकत्वाद्भोक्तृत्वमपि सिद्धमेव, पत्युः कामाय पतिर्भोग्य इत्युक्ते पत्युः कामाय पतिर्भुङ्क्त इत्यस्य लाभादिति भावः।

रत्वेऽपि "आत्मा वा अरे द्रष्टव्यः" इति तु परमात्मविषयमेव। तत्राप्ययमर्थः, यस्मात्पत्यादीनामिष्टसम्पत्तये तत्परवशेन पत्यादयः प्रियत्वेन नोपादीयन्ते, अपि त्वात्मेष्टसम्पत्तये स्वतन्त्रेण स्वप्रियत्वेनोपादीयन्ते; तस्माद्य एवात्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा; स एव हि द्रष्टव्यः, न दुःखमिश्राल्पसुखदुःखोदर्काः परायत्ततत्तत्स्वभावाः पतिजायापुत्रवित्तादयो विषया इति। अस्मिंस्तु प्रकरणे जीवात्मवाचि-

* श्रुतप्रकाशिका *

'तस्मादेतद्ब्रह्म' इतिवाक्यद्वयस्थब्रह्मशब्दवैरूप्यवदितिभावः। एवं तर्ह्ययमेव निर्वाहः स्यादिति शङ्कायामस्मादप्यर्थात् पूर्वोक्तार्थ उपपन्नः। आत्मशब्दवैपरीत्याभावादित्यभिप्रायेणाह (अस्मिंस्तु प्रकरण इति) वक्ष्यमाणसूत्रोक्तप्रकारेण जीववाचिशब्दानां परमात्मपर्यन्ताभिधायित्वमुपजीव्योक्तं परमात्मन एवाभिधानादिति। अयमर्थः 'महद्भूतमनन्तमपारम्', 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इत्यत्र विज्ञानघनशब्दो जीवविषयः, भूतानुविनाशित्वावगमात्। अत्रामृतत्वप्राप्त्युपायत्वसर्वजगत्कारणत्वसर्वज्ञत्वतदेकविज्ञाननिबन्धनसर्वविज्ञानव्यतिरिक्तवेदननिन्दादिभिः प्रकरणस्य परमात्मपरत्वदार्ढ्यावगमात् महद्भूतमनन्तमपारमितिपदैः सामानाधिकरण्याच्च जीववाचिनोऽप्यस्य विज्ञानघनशब्दस्य परमात्मपरत्वमवर्जनीयम्, तस्माज्जीववाचिशब्दस्यापि परमात्मपरत्वनिश्चयानुगुणबहुवाक्यस्वारस्यभङ्गेन अन्यतरात्मशब्दस्यार्थकथनात् आत्मशब्दद्वयस्य अर्थैकरूप्यवर्णनादपि तादृशबहुवाक्यस्वारस्या-

* भावप्रकाशिका *

(आत्मशब्दवैपरीत्याभावादिति) आत्मशब्दवैरूप्याभावादित्यर्थः। (तस्माज्जीववाचिशब्दस्यापीति) 'प्रतिज्ञासिद्धे'रित्यादिसूत्रत्रयानुरोधेन जीववाचिशब्दमपि परमात्मपर्यन्तं प्रापयितुं समर्थपरमात्मानुगुणबहुवाक्यस्वारस्यं भङ्क्त्वा अन्यतरात्मशब्दस्य वा आत्मशब्दद्वयस्य वा जीववाचित्वाश्रयणापेक्षया आत्मशब्दद्वयस्यापि

**शब्देनापि परमात्मन एवाभिधानात् "आत्मनस्तु कामाय' 'आत्मा वा अरे द्रष्टव्यः" इति पूर्वोक्तप्रक्रिययोभयत्रात्मशब्दावेकविषयौ ॥ १६ ॥**

* श्रुतप्रकाशिका *

नुगुणं परमात्मपरतयैव 'आत्मनस्तु कामाय' 'आत्मा वा' इति वाक्यद्वयस्थात्मशब्दयोरर्थैकरूप्यवर्णनं युक्तमिति । 'प्रतिज्ञासिद्धे'रित्यादिसूत्रत्रयम् 'आत्मनस्तु कामाय पतिः प्रियो भवती'त्यारभ्य 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यती'ति जीवोपक्रमनिर्वाहपरं परैर्व्याख्यातम्, तदयुक्तम्; पूर्वसूत्रेणोपक्रमस्य कृतनिर्वाहत्वात्,

* भावप्रकाशिका *

परमात्मपरत्वसमर्थनस्वरसस्य तत्परत्वाश्रयणमेव युक्तमिति भावः । ( अर्थैकरूप्यवर्णनं युक्तमिति ) ननु परमात्मसङ्कल्पनिर्वृत्तये पत्यादयः प्रिया भान्तीति पतिजायादिषु प्रियत्वापादकत्वेनानन्दरूपत्वसमर्थनपरत्वमात्मनः कामायेतिवाक्यस्य न युज्यते, पतिजायादिषु कदाचित्प्रियत्वापादनेनानन्दरूपत्ववत् कदाचिदप्रियत्वापादनेनानानन्दरूपत्वस्यापि प्रसङ्गात् । किञ्च 'न वा अरे पत्युः कामाये'तिवाक्यानां परमात्मविषयत्वे प्रसिद्धिद्योतको वैशब्दोपि न सङ्गच्छते, नहि परमात्मेच्छाधीनं पतिजायादीनां प्रियत्वमिति लोकसिद्धम्, नच श्रुतिप्रसिद्धं तदिति वाच्यम्; अनधीतिनीम्—अविज्ञातश्रुत्यर्थाम् मैत्रेयीं प्रति लोकप्रसिद्धेरेव द्योतनीयत्वात्, ततश्चात्मनः कामायेत्यात्मशब्दस्य जीवपरत्वमेवोचितम् । तथाहि सर्वेषामपि स्वात्मा प्रियः पतिजायादयोपि प्रिया इति अनुभवसाक्षिकमेतत्, तत्र पतिजायादीनां स्वात्मव्यतिरिक्तानां सर्वेषां प्रियत्वं पतित्वादिप्रयुक्तं न भवति । अपितु स्वात्मप्रयुक्तमेव, तेषां स्वेष्टसम्पादकत्वदशायामिव स्वानिष्टसम्पादकत्वदशायां प्रियत्वादर्शनात्, स्वात्मनस्तु पतिजायादीन् प्रति इष्टसम्पादकत्वदशायामनिष्टसम्पादकत्वदशायां चाविशेषेण स्वप्रियत्वदर्शनात् पतिजायाद्यपेक्षया आत्मनोऽतिशयितपुरुषार्थत्वात् जीवात्मैव द्रष्टव्य इत्ययमेवार्थो युज्यत इति । अत्र केचित्— अस्त्वेवमात्मनस्तु कामायेतिवाक्ये आत्मशब्दस्य जीवपरत्वम्, अमृतत्वप्राप्त्युपायत्वादिभिः प्रकरणस्य परमात्मपरत्वदार्ढ्यावगमात् द्रष्टव्यत्वं परमात्मनः एवेति एतावदिह नस्सिसाधयिषितम् । आत्मनः कामायेति सन्द-

**मतान्तरेणापि जीवशब्देन परमात्माभिधानोपपादनायाह –**

* श्रुतप्रकाशिका *

वाक्यान्वयो नाम वाक्यावयवानां मिथोऽन्वयः, न तु वाक्यान्तरेणान्वयः, सूत्रस्यैकप्रकरणविषयत्वात्प्रकरणस्य महावाक्यरूपत्वात्; उपक्रमश्च वाक्यावयवेषु प्रधानभूतः, स कथं वाक्यावयवानामन्वयं परमात्मविषयतयैव प्रतिपादयता सूत्रेणाविवक्षितः स्यात्॥ अतो जीवशब्देन परमात्माभिधाननिर्वाहपरमुत्तरसूत्रत्रयं मन्वानस्तत्रापि चरमसूत्रस्यैव सूत्रकाराभिमतनिर्वाहपरत्वं हृदि निधाय ततः पूर्वस्य सूत्रद्वयस्य मतान्तरपरत्वं वदन् सूत्रत्रयमवतारयति (मतान्तरेणापीति) मतान्तरेण सूत्रकारानभिमतेनेत्यर्थः। अनेन यादवप्रकाशोक्तयोजनाव्यावृत्तिः। (जीवशब्देन परमात्माभिधानोपपादनायेति) अनेन सर्वव्याख्यात्राभिमतनिर्वाहव्या-

* भावप्रकाशिका *

भेस्य जीवपरत्वे का नः क्षतिः, नच पूर्ववाक्यस्य जीवपरत्वेऽनन्वयः शङ्कनीयः। यस्मात्स्वयमेव स्वस्य परमप्रेमास्पदं तस्मात्स्वस्य महापुरुषार्थसिद्धौ परमात्मा द्रष्टव्य इत्यर्थसम्भवाददोषात्, नचात्मशब्दवैरूप्यं दोषः। 'स्याच्चैकस्य ब्रह्मशब्दव'दितिन्यायेन वैरूप्यस्य सोढव्यत्वात्। (सूत्रस्यैकप्रकरणविषयत्वात्प्रकरणस्य महावाक्यरूपत्वादिति) सूत्रस्य प्रकृतमहावाक्यविषयत्वादिति निष्कृष्टार्थः। (सूत्रेणाविवक्षितस्स्यादिति) नन्वेवं विज्ञानघन एवेत्यादिमध्यवाक्यान्वयोपि तुल्यन्यायतया कथमविवक्षितस्स्यादिति चेत्. सत्यम्; उपक्रमस्य प्रधानत्वात् तद्विवक्षणमावश्यकम्, अत एवोक्तम् 'उपक्रमश्च महावाक्यावयवेषु प्रधानभूत' इति। (जीवशब्देन परमात्माभिधाननिर्वाहपरमिति) ननु जन्मविनाशवत्त्वरूपजीवलिङ्गस्य परमात्मपरत्वनिर्वाहपरत्वमित्येव वक्तव्यम्. जीववाचिशब्दस्य तत्राभावात्, विज्ञानघनशब्दस्य जीववाचित्वे प्रमाणाभावादिति चेत्, विज्ञानघनशब्दस्य जीववाचित्वाभावेपि मनोवृत्तिविशेषरूपविज्ञानघनत्वस्य जीवलिङ्गतया जीवलिङ्गवाचिनां विज्ञानघनोत्थानविनाशादिशब्दानां जीववाचिशब्देन ग्रहणोपपत्तिरिति भावः। (यादवप्रकाशोक्तयोजनाव्यावृत्तिरिति).. प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयार्थोपि सूत्रकाराभिमत इति

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गम्, यज्जीवात्मवाचिशब्दैः परमात्मनोऽभिधानमित्याश्मरथ्य आचार्यो मन्यते स्म । यद्ययं जीवः परमात्मकार्य्यतया परमात्मैव न भवेत्तदा तद्व्यतिरिक्ततया परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति । "आत्मा वा इदमेक एवाग्र आसीत्" इति प्राक्सृष्टेरेकत्वावधारणात्, "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावाः

---

* श्रुतप्रकाशिका *

वृत्तिर्दर्शिता । जीवशब्देन– उपरितनवाक्यगतेनेत्यर्थः ॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ ( एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गमिति ) एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादककार्य्यकारणभावकृतैक्यस्य लिङ्गं जीवात्मवाचिशब्देन परमात्माभिधानमित्यर्थः । हेतुवशात्साध्यप्रसिज्ञांशोऽध्याहृतः जीवात्मवाचीति । अयं यादवप्रकाशपक्षोऽस्मिन् सूत्र उपन्यस्तः, तत्र हि कार्या-

७ भावप्रकाशिका ७

यादवप्रकाशयोजनाख्यावृत्तिरित्यर्थः ॥ जीववाचिशब्देन परमात्माभिधानस्य जीवपरमात्मैक्यसूचकतया तल्लिङ्गत्वेपि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादकत्वाभावादाह ( एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादकेति ) ननु जीवात्मशब्देन परमात्माभिधानस्य प्रागप्रस्तुतया तल्लाभः कथमित्याशङ्क्याह (हेतुवशादिति) योग्यतावशादित्यर्थः । ततश्च एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादककार्यकारणभावकृत्यैक्यदृढीकरणाय जीववाचिशब्देन परमात्माभिधानमिति सूत्रार्थः । ( अयं यादवप्रकाशपक्ष इति ) आश्मरथ्यमतस्य सूत्रकारानभिमतत्वादेतत्पक्षस्याप्यनभिमतत्वमिति भावः । ( कार्यात्मनेति ). कार्यात्मना कारणात्मना च वर्तमानयोर्जीवब्रह्मणोः कार्यत्वकारणत्वात्मना भेदस्सत्त्वादिना अभेद इत्यर्थः ॥ "आमुक्ते-

प्रजायन्ते तत्र चैवापियन्ति" इत्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात्तस्मिन्नेव लयश्रवणाच्च जीवानां ब्रह्मकार्य्यत्वेन ब्रह्मणैक्यमवगम्यते, अतो जीवशब्देन परमात्माभिधानमिति ॥

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ २१ ॥

यदुक्तं जीवस्य ब्रह्मकार्य्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं ब्रह्मणो जीवशब्देन प्रतिपादनमिति, तदयुक्तम्; "न जायते म्रियते वा विपश्चित्" इत्यादिनाऽजत्वश्रुतेर्जीवात्मनां प्राचीनकर्मफलभोगाय जगत्सृष्ट्यभ्युपगमाच्च, अन्यथा विषमसृष्ट्यनुपपत्तेश्च ब्रह्मकार्य्यस्य जीवस्य ब्रह्मतापत्तिलक्षणो मोक्ष आकाशादिवदवर्जनीय इति तदुपायविधानानुष्ठानानर्थक्याच्च; घटादिवत्कारणप्राप्तेर्विनाशरूपत्वेन मोक्ष-

---

* श्रुतप्रकाशिका *

त्मना कारणात्मना च जीवब्रह्मणोर्भेदाभेदौ स्वाभाविकौ मतौ। उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः। विरुद्धमतान्तरं हि पूर्वतमनिरासेन विना नोदेति; तस्मात् सूत्राभिप्रेतमाश्मरथ्यमतदूषणमाह (यदुक्तमित्यादिना) अजत्वश्रुतिविरोधः अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गः फलभोगार्थसृष्टिविरोधः उपायानुष्ठानवैयर्थ्यम् अपुरुषार्थता च दूषणम्, 'तोयेन जीवान् विससर्ज' इत्यादयो जीवो-

७ भावप्रकाशिका ७

भेद एव स्याज्जीवस्य च परस्य च। मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः" इति पाञ्चरात्रकमतमस्मिन्सूत्रे उपन्यसत इति। यद्वा वाचस्पतिनोक्तं न तन्त्रमूलं पश्यामः। ननु यादवाभिमतस्य स्वाभाविकपक्षस्य पूर्वमेव भाषिततया शङ्करभास्करमतयोरेव दूषयिषितत्वात्, तन्मते स्वाभाविकभेदानङ्गीकारात्स्वाभाविकौपाधिकविकल्पोऽस्मिन्सूत्रेऽनुचित इत्याशङ्क्याह (सम्भावितयोः पक्षयोः पराभिमत-

स्यापुरुषार्थता च । जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरु-त्तरत्र प्रपञ्चयिष्यते; अतः "एष सम्प्रसादोऽस्माच्छरीरा-त्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनि-ष्पद्यते' 'यथा नद्यः स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इत्युत्क्रमिष्यतः परमात्मभावाज्जीव-शब्देन परात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यते ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

यदुक्तमुत्क्रमिष्यतो जीवस्य ब्रह्मभावाद्ब्रह्मणस्तच्छ-ब्देनाभिधानमिति, तदप्ययुक्तम् ; विकल्पासहत्वात् । अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवम्भावः किं स्वाभा-विकः, उतौपाधिकः ? तत्रापि पारमार्थिकः, अपारमा-र्थिको वेति । स्वाभाविकत्वे ब्रह्मभावो नोपपद्यते, भे-दस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात् ।

---

* श्रुतप्रकाशिका *

त्पत्तिप्रलयवादाः कथमित्यत्राह ( जीवात्मन इति ) सूत्रार्थमाह ( अत इति ) ॥

॥ अवस्थितेरिति काशकृत्स्नः ॥ अत्रापि पूर्ववदभिप्रेतं दूषणमाह ( यदुक्त-मित्यादिना ) सम्भावितयोः पक्षयोः पराभिमतं परिशेषयितुं स्वाभाविकौपाधि-कत्वविकल्पः कृतः । शङ्करभास्करोक्तपक्षद्वयस्यापि 'उत्क्रमिष्यत' इति सूत्रेणै-केन सूचितस्य एतेन निराचिकीर्षितत्वज्ञापनाय पारमार्थिकत्वापरमार्थिकत्ववि-कल्पः कृतः । ( स्वाभाविकत्व इत्यादिना ) मुक्तौ स्वरूपं किं विद्यमानम्, उता-विद्यमानमिति विकल्पमभिप्रेत्य ग्रन्थद्वयेन शिरोद्वयं दूषयति ( भेदस्येत्यादिना ) प्रथमविकल्पस्य द्वितीयं शिरो दूषयंस्तद्विशेषणीभूतद्वितीयविकल्पगतं प्रथमं

अथ भेदेन सह स्वरूपमप्यपैतीति, तथा सति विनष्टत्वादेव तस्य न ब्रह्मभावः, अपुरुषार्थत्वादिदोषप्रसङ्गश्च। पारमार्थिकौपाधिकत्वे प्रागपि ब्रह्मैवेति 'उत्क्रमिष्यत एवम्भावात्" इति विशेषो न युज्यते वक्तुम्। अस्मिन् पक्षे ह्युपाधिब्रह्मव्यतिरेकेण वस्त्वन्तराभावान्निरवयवस्य ब्रह्मण उपाधिना छेदाद्यसम्भवाच्चोपाधिगत एव भेद इत्युत्क्रान्तेः प्रागपि ब्रह्मैव। औपाधिकस्य भेदस्यापारमार्थिकत्वे कस्यायमुत्क्रान्तौ ब्रह्मभाव इति वक्तव्यम्; ब्रह्मण एवाविद्योपाधितिरोहितस्वस्वरूपस्येति चेन्न, नित्यमुक्तस्वप्रकाशज्ञानस्वरूपस्याविद्योपाधितिरोधानासम्भवात्। तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः। प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे तिरोधानाभावः स्वरूपनाशो वा स्यात्; अतो नित्याविर्भूतस्वस्वरूपत्वात्तस्यो-

* श्रुतप्रकाशिका *

शिरश्च दूषयति (पारमार्थिकेति) प्रागपि ब्रह्मत्वमुपपादयति (अस्मिन् पक्षे हीति) द्वितीयविकल्पे द्वितीयं शिरो दूषयति (औपाधिकस्येति) तिरोधानासम्भवः कथमित्यत्राह (तिरोधानं नामेति) तिरोधानं नाम एवं विधमस्तु, ततः किमित्यत्राह (प्रकाश एवेति) तिरोधानं न सम्भवति चेत् नित्याविर्भूतं स्यात्, ततः किमित्यत्राह (अत इति) ननु 'उत्क्रमिष्यत' इत्यत्र न तात्पर्य्यम्, सर्वदा ब्रह्मभावो विवक्षितः, अत उपाधेः पारमार्थ्यापारमार्थ्यपक्षद्वयेऽपि न दोष इति चेन्न; पूर्वं तथाभावे बन्धनिवृत्तिप्रयोजनस्य

* भावप्रकाशिका *

मिति) (अत उपाधेः पारमार्थ्यापारमार्थ्यपक्षद्वयेपीति) भास्करशङ्करपक्षद्वये-

त्क्रान्तौ ब्रह्मभावे न कश्चिद्विशेष इति 'उत्क्रमिष्यतः' इति विशेषणं व्यर्थमेव । "अस्माच्छरीरात्समुत्थाय" इति पूर्वमनेवंरूपस्य न तदानीं ब्रह्मतापत्तिमाह, अपि तु पूर्वसिद्धस्वरूपस्याविर्भावम्, तथाहि वक्ष्यते 'सम्पद्याविर्भावस्स्वेन शब्दात्' इत्यादिभिः । अतः

* श्रुतप्रकाशिका *

शास्त्रस्यानारम्भणीयत्वप्रसङ्गात् । औपाधिकहेयप्रहाणार्थमारम्भणीयतेति चेन्न ; औपाधिकहेयस्य ब्रह्मण्यच्छेद्ये सम्बन्धित्वादेकत्वप्रतिसन्धानेन जीवेश्वरविभागाभावप्रसङ्गात् । प्रदेशभेदादप्रतिसन्धानं चेत् एकस्योपाधौ गच्छत्येकस्यापि प्रतिसन्धानं न स्यादित्यादिदूषणजातं प्रदेशान्तरोक्तत्वादिह न प्रपञ्चितम् । अपरमार्थोपाधिकृतभेदवादे च 'उत्क्रमिष्यत' इति पदमविवक्षितं कृत्वा सर्वदा ब्रह्मभावाविर्भावाभ्युपगमे अध्यासानुपपत्तिः, तिरोधानाभावात् । न ह्यतिरोहितस्वरूपे तत्त्वतो भासमाने अध्याससम्भवः, तिरोधानाभ्युपगमे च दूषणं दर्शितम् । अतिरोहितस्वरूपस्यापि भेददर्शनं सम्भवतीति चेत्, आच्छादकाविद्याकल्पनवैयर्थ्यम्, मुक्तावपि भेददर्शनप्रसङ्गश्च ; स्वरूपयाथात्म्यावभासस्य भ्रमविरोधित्वाभावात् निवर्त्तकज्ञानेन दोषस्य निवृत्तत्वात् न भेददर्शनमिति चेन्न ; निवर्त्तकज्ञानस्यापि पूर्वमवभासमानात्स्वरूपादनतिरिक्तविषयकत्वेन भ्रमनिवर्त्तकत्वानुपपत्तेः, न हीदमिति शतशो विशदतरमुपजायमानमपि ज्ञानं रजतभ्रमं निवर्त्तयतीत्यादिकमनुपपत्तिशतं पूर्वोक्तत्वादिह लेशतः प्रदर्शितम् । तर्हि 'अस्माच्छरीरादि'त्यादिश्रुतेः कोऽर्थ इत्यत्राह (अस्मादिति) तर्हि कथमभिनिष्पत्तिश्रुतिरित्यत्राह ( तथाहि वक्ष्यत इति ) अथ सूत्रं व्याचष्टे ( अत इति ) अतः—मतान्तरेण निर्वाहानुपपत्तेरित्यर्थः । अवस्थितिशब्दस्य स्वतोऽधिकरणमाकाङ्क्षितम्, कुत्रेति,

॥ भावप्रकाशिका ॥

पीत्यर्थः । (ब्रह्मण्यच्छेद्य इति ) ब्रह्मस्वरूपोच्छित्त्वासम्बन्धाभावात् स्वरूपमात्रसम्बन्धित्वादुपाधेर्हेयोपाध्याश्रयैक्यप्रतिसन्धानस्य जीवपरयोरविशिष्टत्वात् जीवेश्वरविभागाभावप्रसङ्गादित्यर्थः । ( तर्हि कथमभिनिष्पत्तिश्रुतिरिति ) अभिनिष्पत्तिश-

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थितेर्जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्य्यो मन्यते स्म। जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचको न

* श्रुतप्रकाशिका *

न तु किम्भावेनेति। कथमवस्थानमित्याकाङ्क्षाऽस्तीति चेत् सा तूत्थाप्या, न तु स्वतः। किम्भावेनेत्याकाङ्क्षा न क्वचिदप्यस्ति, अतः सूत्रस्वारस्यानुगुणं वाक्यमादत्ते (य आत्मनीति) अचिदन्तःप्रवेशस्य स्पष्टत्वात् तज्ज्ञापनार्थं जीवसामानाधिकरण्यस्य स्फुटतरार्थश्रुत्यन्तरैकार्थ्येन शरीरशरीरिभावनिबन्धनत्वज्ञापनार्थञ्च 'अनेन जीवेनात्मने'तिवाक्यं प्रथममुपात्तम्। कारणावस्थायामपि शरीरत्वज्ञापनार्थं देवताविशेषनिर्णयार्थं चोदाहरति (योऽक्षरमन्तरे सञ्चरन्निति) अन्तस्स्थितिनियमनयोरनुप्रवेशप्रशासनशब्दाभ्यां प्रत्यभिज्ञाततयैकार्थत्वात् सर्वात्मत्वविवरणरूपत्वाच्चोपादत्ते (अन्तःप्रविष्ट इति) ससम्यन्तपदैः कुत्रेत्याकाङ्क्षा शमिता। नियन्तृत्वा [मृतत्वा]दिभिः कथमित्याकाङ्क्षा शमिता, तत्तदवेद्यत्वेन नियन्तृत्वेन निर्दोषत्वेन च तेष्ववस्थानमित्यर्थः। नन्ववस्थितिरस्तु, ततः कथं जीवशब्दस्य ब्रह्मवाचित्वमित्यत्राह (जीवशब्द-

* भावप्रकाशिका *

ब्दस्यापूर्वरूपप्रादुर्भावे प्रसिद्धत्वादिति भावः। (न क्वचिदप्यस्तीति) उत्कटतया नास्तीत्यर्थः। (अचिदन्तःप्रवेशस्य स्पष्टत्वादिति) 'हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य' इत्यचिदनुप्रवेशस्य स्पष्टं प्रतीतेस्स्पष्टतया तज्ज्ञा-

जीवमात्रस्येति पूर्वमेवोक्तं 'नामरूपे व्याकरवाणि' इत्यत्र । एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणोऽपहतपाप्मत्वसर्वज्ञत्वादिगोचराः जीवस्याविदुषः शोचतो ब्रह्मोपासनान्मोक्षवादिन्यो जगत्सृष्टिप्रलयाभिधायिन्यो जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्तीति काशकृ-

---

* श्रुतप्रकाशिका *

श्चेति) शरीरवाचिशब्देषु आकृतिनयावतारः समर्थित इत्यर्थः । कस्मिन् प्रदेश इत्यत्राह (नामेति) सूत्रार्थो व्याख्यातः । अस्य सूत्रस्य आश्मरथ्यौडुलोमिमतोक्तेः पूर्वमनिवेशितत्वात् अतःपरं मतान्तरानुपन्यासाच्च काशकृत्स्नमतेन निर्वाहस्य सूत्रकाराभिमतत्वमवगम्यते, अस्य सूत्रकाराभिमतत्वे हेतुभूतं पूर्वोक्तमतद्वयाद्वैषम्यमाह ( एवमात्मेति ) अपहतपाप्मत्वसर्वज्ञत्वशब्दौ उभयलिङ्गत्वप्रदर्शनार्थौ, आदिशब्दो विरजत्वसर्वशक्तित्वादिपरः, मोक्षवादिन्य इत्यन्तेन भेदश्रुतयो विवक्षिताः । अभेदश्रुत्यभिप्रायेणाह ( जगत्सृष्टीति ) ( सम्यगिति ) प्रत्यक्षादिविरोधः परस्परविरोधश्च यथा न भवति तथेत्यर्थः । सकलश्रुत्यविरोधमुख्यार्थत्वानुगुण्यमेतन्निर्वाहस्वीकारहेतुरित्यर्थः । अभेदनिर्देशस्यावस्थितिनिबन्धनत्वं सूत्रकारेणैव भगवता व्यासेन मोक्षधर्मे च याज्ञवल्क्यजनकसंवादे स्पष्टतरमभिहितम् "पश्यं तथैवापश्यं च पश्यत्यन्यस्तथाऽनघ । षड्विंशः पञ्चविंशञ्च चतुर्विंशञ्च पश्यति" इत्यादिना चिदचिदीश्वरवैलक्षण्यं बहुशः प्रतिपाद्य "यदा तु मन्यतेऽन्योऽहमन्य एष

* भावप्रकाशिका *

पनार्थमित्यर्थः । ( स्फुटतरार्थश्रुत्यन्तरेति ) 'य आत्मनि तिष्ठन्' इत्यादिः स्फुटतरार्थश्रुतिः । ( अभेदश्रुत्यभिप्रायेणेति ) जगत्सृष्टिप्रलयाभिधायिश्रुतीनामप्युपादानोपादेयभावप्रतिपादनमुखेनाभेदप्रतिपादनपरत्वाभावादिति भावः । ( एतन्निर्वाहस्वीकारहेतुरिति ) काशकृत्स्नीयनिर्वाहस्वीकारहेतुरित्यर्थः । ( याज्ञवल्क्यजनकसंवाद इति ) ततश्च मैत्रेयीब्राह्मणस्यापि याज्ञवल्क्यकर्तृकत्वात् 'अन्यश्च राजन् स परः' इत्यादियाज्ञवल्क्यकर्तृकश्लोकसमानार्थत्वं वक्तव्यमिति

* श्रुतप्रकाशिका *

इति द्विज । तदा स केवलीभूतः षड्विंशमनुपश्यति" इति प्रकृत्यात्मविवेकानन्तरं जीवविलक्षणपरमात्मदर्शनमुक्त्वा "अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः" इति शरीरशरीरिणोर्भेदेपि शरीरान्तःस्थितस्य शरीरिण एकत्वादयमेकः पुरुष इति व्यवहारवदन्तरवस्थितिनिबन्धनाः प्रकार्य्यैक्यविषया अभेदव्यवहारा इत्युक्त्वा "तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युतम्" इति तात्स्थ्यादेव हेतोः पञ्चविंशकस्याच्युतशब्दवाच्यस्य परमात्मनश्च स्वरूपैक्यं साधूनामनभिमतमित्युक्त्वा "जन्ममृत्युभयाद्भीता योगाः साङ्ख्याश्च काश्यप । षड्विंशमनुपश्यन्ति शुचयस्तत्परायणाः" इति संसारभयनिरासकं षड्विंशकत्वेन परमात्मनोऽभेदज्ञानमित्यत्राध्यात्मशास्त्रविदामैककण्ठ्यमित्युक्त्वा "यदा स केवलीभूतः षड्विंशमनुपश्यति । तदा सर्वत्र सिद्धत्वान्न पुनर्जन्म विन्दति" इति । षड्विंशज्ञानादपवर्गमुक्त्वा "एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ । बुद्धश्चोक्तो यथातत्त्वं यथाश्रुतिनिदर्शनात्" इति चिदचिदीश्वरवैलक्षण्येनोपसंहृतम् । तथा वैष्णवे पुराणे च स्फुटमिदमुच्यते, यथा भगवन्तं प्रति ध्रुवः "सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः । कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितम्" इति । अत्र ह्यवस्थितिनिबन्धनं सर्वात्मकत्वं स्पष्टम्, अवस्थानञ्च शरीरप्रतिसम्बन्धित-

* भावप्रकाशिका *

भावः । ( अन्यश्च राजन् स पर इति ) ननु पूर्वत्र 'अन्यश्च शश्वदव्यक्तं तथाऽन्यः पञ्चविंशकः । तत्स्थं समनुपश्यन्ति तमेक इव साधवः" इति लोके अन्यत्ति शब्दितदेहस्थमात्मानं लोकानुभवप्रवणबुद्धयो देहाभेदेन पश्यन्तीत्युक्तत्वात् अस्मिन्नपि श्लोके तदैकार्थ्यप्रत्यभिज्ञानात् 'अन्यच्च राजन् स परः' इतिश्लोकोपि देहात्मविवेकपर एव किं न स्यात् ? नच परशब्दः परमात्मन्येव प्रयोगार्हो न देह इतिवाच्यम्; 'महतः परमव्यक्त'मित्यादौ शरीरेपि परशब्दप्रयोगादिति चेन्न; एकप्रकरणगतयोः श्लोकयोरेकार्थत्वे अन्यतरवैयर्थ्यप्रसङ्गात् । 'अन्यच्च शश्वदव्यक्त'मितिश्लोको देहात्मविवेकपरः, 'अन्यश्च राजन्स पर' इति श्लोकस्तु 'जुष्टं यदा पश्यत्यन्यमीशम्' 'पृथगात्मानं प्रेरितारं च मत्वा' इत्यादिश्रुत्यनुसारात् जीवविलक्षणासंसारिपरमात्मप्रतिपादनपर इत्येव युक्त इति भावः । नन्ववस्थितिमात्रेण तदात्मकत्वे आकाशस्यापि तदात्मकत्वप्रसङ्ग

* श्रुतप्रकाशिका *

येति तत्रैव दृश्यते "सर्वेन्द्रियान्तःकरणपुरुषाख्यं हि यज्यगत्। स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति। न च विश्वरूपशब्दश्चारुरूपा सालभञ्जिकेतिवत् अमुख्यार्थतया नेयः, स्वारस्यापवादाभावात्। तत्रैव स्वारस्योत्तम्भकमपि दृश्यते प्रह्लादवचनेन "एतद्विजानता सर्वं जगत्स्थावरजङ्गमम्। द्रष्टव्यमात्मवत्तस्माद्यतोऽयं विश्वरूपभाक्" इति धार्य्यत्वधारकत्वरूपवैधर्म्यनिर्देशेन रूपतद्वतोर्हि भेद उपलभ्यते। तत्रैव ध्रुववचनादेव धार्य्यधारकभावोऽवगम्यते "सर्वस्मिन् सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक्। सर्वं त्वत्तस्ततश्च त्वं नमस्सर्वात्मनेऽस्तु ते" इति। सर्वस्मिन्—शरीरे सर्वचेतनभूतत्वसर्वत्वोपपादकं सर्वस्वरूपधृगिति। कारणत्वमपि तदुपपादकमाह सर्वं त्वत्त इति। ततश्च त्वमिति। ततः—तस्मात्, सर्वस्वरूपधृक्त्वात् सर्वकारणत्वाच्च सर्वं त्वमित्यर्थः। रूपत्वञ्च शरीरतयेति दर्शयता प्रह्लादेनोक्तं "सर्वगत्वादनन्तस्य स एवाहमवस्थितः" इति। शरीरं हि चेतनेन व्याप्यो द्रव्यविशेषः, तथा च भगवन्तं प्रति अर्जुनवचनम्, "सर्वं समाप्नोषि ततोऽसि सर्वः" इति। एषु श्रुतिस्मृतिवचनेषु "अनुक्तमन्यतो ग्राह्यम्" इतिन्यायाद्धारणव्यापनादिष्वन्यतमोक्तावप्यन्यतमान्तरसिद्धिरनुसन्धेया, ततश्च व्यापनमेव धारणनियमनयोरन्यतरसचिवं हि नृपनभोभृत्यकुटुम्बादिव्यावर्त्तनेन शरीरत्वमवगमयति, शरीरलक्षणं च भाष्य

* भावप्रकाशिका *

इत्यत आह (अवस्थानं च शरीरप्रतिसम्बन्धितयेति) ननु शरीरतया अवस्थानं हि आत्मतयाऽवस्थानम्। ततश्चात्मतयावस्थितिहेतुकं सर्वात्मकत्वं किं सर्वशरीरत्वम्? उत सर्वस्वरूपत्वम्?। नाद्यः, हेतुहेतुमतोरभेदात्। न द्वितीयः; सर्वस्यापि तत्स्वरूपत्वाभावादिति चेन्न; सर्वात्मकत्वं नाम सर्वसामानाधिकरण्यनिर्देशार्हत्वम्. तच्च सर्वात्मभावनिबन्धनमित्यदोषः। (सर्वेन्द्रियेति) 'सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत्। स एव' इति सामानाधिकरण्यं कृत्वा तत्र हेतुमाह (सर्वभूतात्मा विश्वरूपो यतोऽव्यय इति) (चारुरूपा सालभञ्जिकेति) तत्र रूपशब्दस्य स्वरूपपरत्वदर्शनादिति भावः। ततश्च त्वमित्यस्य ततस्त्वमुत्पन्न इति भ्रान्तिं व्युदस्यति (ततश्च त्वमितीति) ननु सर्वगत्वादित्यनेन व्याप्तिमात्रं सिध्येत्; कथं शरीरत्वमित्यत आह (शरीरं हीति) (नृपनभोभृत्येति) नृपप्रतिद्वन्द्वी भृत्यः; नभःप्रतिद्वन्द्वी कुम्भ इति द्रष्टव्यम्।

* श्रुतप्रकाशिका *

एव दर्शयिष्यते, अत एव 'तदनुप्रविश्य सच्च त्यच्चाभव'दित्यत्रापि शरीरशरीरिभावनिबन्धनं तत्तच्छब्दवाच्यत्वमवगम्यते, अन्तःप्रवेशनेन प्रशासनादीनामर्थसिद्धत्वात्। श्रूयते ह्यन्तःप्रवेशसहचारितया प्रशासनादिकम् "अन्तःप्रविष्टः शास्ता जनानाम्, 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति। तथा 'सर्वं खल्विदं ब्रह्म तज्जला'नित्यत्राननशब्दवाच्या स्थितिर्धारणनिबन्धना, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः' इति सदायतनशब्देन स्थितिहेतुत्वाभिधानात्। धारणं चानुप्रविश्य प्रशासनेन, उदाहृतश्रुत्यैकार्थ्यात् "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति स्मरणात् "तत्सृष्ट्वा तदेवानुप्राविशत्" इति सृष्ट्यनन्तरं स्थित्यर्थोनुप्रवेशदर्शनाच्च। उत्पत्तिलयौ च न निष्कृष्टस्वरूपे निर्विकारे सम्भवतः, अतो जन्मादिकारणत्वस्य हेतुत्वोपन्यासाच्छरीरशरीरिभाव एव सामानाधिकरण्ये हेतुरिति श्रुत्यैव दर्शितम्। अस्य सूत्रस्य न केवलं सर्वश्रुत्यविरोधमुख्यत्वोपपत्तेः, किन्तु प्रबन्धान्तरस्थसूत्रकारवचनैकार्थ्यात् तदुपबृंहणैकार्थ्यात् प्रत्यक्षश्रुतावेव हेतुहेतुमद्भावदर्शनाच्चान्तरात्मतयाऽवस्थानस्यैव अभेदनिर्देशहेतुत्वपरत्वं सिद्धम्। इह जीववाचिशब्दः कः? तस्य परमात्मपर्यन्तत्वे किं कारणम्? तस्मिन् सति हि

* भावप्रकाशिका *

तच्छब्दवाच्यत्वस्य शरीरशरीरिभावनिबन्धनत्वे 'तदनु प्रविश्य सच्च त्यच्चाभवत्' सर्वं खल्विदं ब्रह्म' इति श्रुत्योः प्रमाणतामाह (अत एव तदनुप्रविश्येति) ननु नास्मिन्वाक्ये तच्छब्दवाच्यत्वं शरीरशरीरिभावनिबन्धनमिति प्रतीयते, अपि तु अनुप्रवेशनिबन्धनमिति प्रतीयत इत्याशङ्क्याह (अन्तःप्रवेशनेनेति) ननु सर्वं खल्विदं ब्रह्मेति वाक्ये ब्रह्माधीनोत्पत्तिस्थितिलयत्वाद्ब्रह्म सर्वशब्दवाच्यमित्येव प्रतीयते, नतु शरीरशरीरिभावनिबन्धनमित्याशङ्क्याह (अननशब्दवाच्या स्थितिरिति) (सदायतनशब्देन स्थितिहेतुत्वाभिधानादिति) 'सन्मूलाः सत्प्रतिष्ठाः' इत्याभ्यां वाक्याभ्यामुत्पत्तिलययोस्सदधीनत्वमुक्त्वा स्थितेस्सदधीनत्वं वक्तुं प्रवृत्तं सदायतना इतिवाक्यं धारकत्वं दर्शयति, अतोऽवसीयते सदायतनशब्दनिर्दिष्टं धारणं स्थित्यर्थमिति भावः। (हेतुत्वोपन्यासादिति) 'सर्वं खल्विद'मितिवाक्य इति शेषः। (शरीरशरीरिभाव एवेति) हेतुत्वाद्विवक्षितशरीरशरीरिभाव एवेत्यर्थः। (न केवलं

त्स्नीयमेव मतं सूत्रकारः स्वीकृतवान् । अयमत्र वाक्यार्थः,— अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्यः "आत्मा वा अरे द्रष्टव्यः" इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा "आत्मनि खल्वरे दृष्टे" इत्यादिना उपास्यलक्षणं दुन्दुभ्यादिदृष्टान्तैश्चोपासनोप-

* श्रुतप्रकाशिका *

तत्पर्यन्तत्वनिर्वाहप्रकारापेक्षा, तत्पर्यन्तत्वे च किं फलमित्यपेक्षायामाह ( अयमत्र वाक्यार्थ इति ) 'अमृतत्वस्य तु नाशाऽस्ति वित्तेन "न वा अरे पत्युः कामाये'त्यादीनां वाक्यानाम् आद्यसूत्रव्याख्यानावसरे प्रपञ्चितार्थत्वादिह तदर्थोऽपि विस्तरेण न प्रतिपादितः । ( आत्मनि खल्वरे दृष्ट इत्यादिनेति ) आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम् इत्यात्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानं "ब्रह्म तं परादात् 'क्षत्रं तं परादात्" इत्यादिना व्यतिरिक्तवेदननिन्दनम् "इदं ब्रह्मेदं क्षत्रम्" इति सर्वात्मकत्वोक्तिश्च कारणत्वफलम्, अतः प्रतिज्ञादिभिर्लक्षणाभिधानं हि फलितं स्यात् । 'योऽन्यत्रात्मनः सर्वं वेदेति, अन्यत्र परमात्मानं विना, अब्रह्मात्मकं स्वनिष्ठं यो वेद तं सर्वं परादात् अभिभवेत् संसारयतीत्यर्थः । यद्वा अन्यत्र परमात्मानोऽन्यत्रस्थितम्, न तु परमात्मनि स्थितम्, स्वनिष्ठमित्यर्थः । दुन्दुभ्यादिदृष्टान्तैः करणनियमनमभिधायेत्यन्वयः । अत्रायमभिप्रायः "स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत' इति वाक्यस्य परैरेवमर्थ उक्तः, दुन्दुभिशब्देन दुन्दुभिशब्दसामान्यं लक्ष्यते, यत् खलु

७ भावप्रकाशिका ७

सर्वश्रुत्यविरोधमुख्यत्वोपपत्तेरिति ) हेतुत्वं सिद्धमित्युत्तरत्रान्वयः । 'आत्मनो वा अरे दर्शनेनेति 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदित'मिति षष्ठपाठो भाष्ये उदाहृतः, आत्मनो वा अरे दर्शनेनेति चतुर्थाध्यायपाठष्टीकायामुदाहृत इति द्रष्टव्यम् । ( लक्षणाभिधानमिति ) जगत्कारणत्वलक्षणाभिधानमित्यर्थः । अन्यत्रात्मन इत्यस्यात्मानं विनेत्यस्यार्थस्य क्लिष्टत्वादाह ( यद्वान्य-

* श्रुतप्रकाशिका *

यद्ग्रहणं विना गृहीतुं न शक्यते तत्ततो न व्यतिरिच्यते यथा रजतं शुक्तिकायाः। दुन्दुभिशब्दावान्तरविशेषा हि तत्सामान्यग्रहणेनैव गृहीताः स्युः। अयं दुन्दुभिशब्द इत्येव गृह्यन्ते, न दुन्दुभिशब्दतो व्यतिरेकेण; अतस्तदवान्तरविशेषाः यथा दुन्दुभिशब्देऽध्यस्ताः, एवं चिदात्मव्यतिरेकेण ब्रह्मक्षत्रादिजगदनवभासात् सर्वं चिदात्मन्यध्यस्तमिति। एवं "सहोपलम्भनियमादभेदो नीलतद्धियो"रिति बौद्धराद्धान्तप्रतिपादकमिदं वाक्यं व्याख्यातम्, तदनुपपन्नम्; मुख्यार्थे सम्भवति उपरितनयोर्दुन्दुभिशब्दयोर्लाक्षणिकार्थपरत्वायोगात्। लक्षणायां च 'दुन्दुभेर्हन्यमानस्ये'ति पूर्ववाक्यवैयर्थ्यञ्च, नहि गङ्गायामितिपदेनैव कूले लक्षिते गभीरायां गङ्गायामिति वाक्यं सफलम्, तथा 'दुन्दुभेस्तु ग्रहणेने'त्येतावताऽलम्, तेनैव दुन्दुभि-

* भावप्रकाशिका *

त्रेति) (परैरेवमर्थ उक्त इति) दुन्दुभेर्हन्यमानस्येत्यनेन हन्यमानदुन्दुभिप्रभवशब्दसामान्यं लक्ष्यते, दुन्दुभेस्त्वित्यनेनापि तदेव लक्ष्यते, दुन्दुभ्याघातस्सङ्ग्राममभूयिष्ठवीररसाद्यनुकूलो दुन्दुभिध्वनिविशेषः। ततश्चायमर्थः— यथा दुन्दुभिशब्दसामान्यस्य विशेषभूतान् शब्दान् दुन्दुभिशब्दसामान्याद्बाह्यत्वेन ततो निष्कृष्य न कश्चिदपि गृहीतुं शक्नुयात्, किन्तु दुन्दुभिशब्दसामान्यग्रहणेनैव तद्विशेषशब्दो गृहीतो भवति। दुन्दुभ्याघातसंज्ञिकस्य दुन्दुभिशब्दविशेषस्य ग्रहणेन वा तदवान्तरविशेषशब्दो गृहीतो भवति। दुन्दुभिशब्द इत्येव हि दुन्दुभिशब्दविशेषा गृह्यन्ते, ततश्च दुन्दुभिशब्दसामान्यात् दुन्दुभ्याघातशब्दसामान्याच्च यथा तद्विशेषा न भिद्यन्ते, एवं चिद्रूपात्मस्फुरणं विना स्फुरणशून्यं जगच्चिदात्मनो न व्यतिरिच्यत इत्याशयः। शङ्खवीणादिदृष्टान्ता अप्येवमेव योजनीया इत्युक्तमित्यर्थः। दुन्दुभिशब्देऽध्यस्ता इति पाठो दृश्यते, तस्यायमर्थः, दुन्दुभिशब्दादव्यतिरिक्ता इति। विशेषस्य सामान्येऽध्यासाभावादिति द्रष्टव्यम्। (उपरितनयोरिति) ननु दुन्दुभ्याघातशब्दस्य दुन्दुभ्याघातप्रभवशब्दे लक्षणा, नतु दुन्दुभिशब्दमात्रस्य, ततश्चोपरितनयोर्दुन्दुभिशब्दयोरित्युक्तम्। दुन्दुभिशब्ददुन्दुभ्याघातशब्दयोरित्येव वक्तव्यमिति चेन्न; अस्यापि वाक्यस्य तत्रैव तात्पर्यात् (पूर्ववाक्यवैयर्थ्यं चेति) यद्यपि दुन्दुभेर्हन्यमानस्येति वाक्यस्य दुन्दुभिशब्दसामान्यान्निष्कृष्य विशेष-

करणभूतमनःप्रभृतिकरणनियमनञ्च सामान्येना-

* श्रुतप्रकाशिका *

शब्दसामान्यग्रहणस्य प्रतिपन्नत्वात् आघातशब्दस्य न प्रयोजनं वाशब्दवैयर्थ्यं च; अत एवं योजनीयम्, दुन्दुभेरित्यनादरे षष्ठी. ग्रहणशब्द इह निरोधपरः, उपादाननिरोधयोरपि वाचकत्वात्, यथा गृहीतानि पुष्पाणि गृहीतश्चोर इति। यथा दुन्दुभौ हन्यमाने ततो बहिर्निस्सरतः शब्दान् न निरोद्धुं शक्नुयात् कथं तर्हि निरुणद्धीत्यत्राह—दुन्दुभेस्त्विति। परेणोपादीयमानदुन्दुभिनिरोधेन तदा हन्तृपुरुषनिरोधेन वा शब्दो निरुध्यते, एवमिन्द्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञानं दुर्निरोधम्, तस्मादिन्द्रियनिरोधेन तत्प्रवृत्तिमूलस्य मनसो निरोधेन च परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं विरुध्यत इति। एवं शङ्खवीणादृष्टान्तोपन्यासश्च योजनीयः। वीणाशब्दस्था चतुर्थी षष्ठ्यर्था, पूर्ववाक्यद्वयैकार्थ्यात्, अतो दुन्दुभ्यादिदृष्टान्तत्रयोपन्यासवाक्यत्रये 'द्रष्टव्य' इत्युक्तपरोपासनोपकरणभूतकरणग्रामनियमनमुक्तमिति। (मनःप्रभृतीति) दुन्दुभिनिरोधस्थानीयचक्षुरादिनियमनम्, तथा हन्तृपुरुषनिरोधस्थानीयं मनोनियमनमिति भावः। (सामान्येनाभिधायेति) निमित्तोपादानरूपविभागानभिधानात् कार्यविशेषानुपादानाच्चोपास्यलक्षणभूतं कारणत्वं सामान्येनोक्तम्, चक्षुरादिकरणविशेषाणां नियमनप्रकारविशेषानभिधानात् करणनियम-

छ भावप्रकाशिका छ

शब्दान् गृहीतुं शक्नोतीत्यर्थप्रतिपादकतया साफल्यमस्ति, तथापि नात्यन्तप्रयोजनम्। दुन्दुभेस्तु ग्रहणेनेत्यादिना दुन्दुभिशब्दसामान्यग्रहणेनैव विशेषशब्दो गृह्यत इत्यर्थप्रतिपादनाच्चैनैव तद्ग्रहणमन्तरेण विशेषशब्दो न गृह्यत इत्यर्थस्यापि सिद्धत्वादित्यत्र तात्पर्यात्, विवक्षितार्थलाभे पदान्तरेण सिद्धे तदधिकपदान्तरवैयर्थ्ये दृष्टान्तमाह (नहि गङ्गायामिति) (आघातशब्दस्येति) दुन्दुभ्याघातशब्दस्येत्यर्थः। न च दुन्दुभिशब्दावान्तरविशेषो दुन्दुभ्याघातसंज्ञितश्शब्दविशेषोऽस्तीत्युक्तमिति वाच्यम्; तत्र प्रमाणाभावात्। सत्यपि तस्मिन् दुन्दुभेस्तु ग्रहणेन विशेषा गृहीता भवन्तीत्यनेनैव चारितार्थ्यादिति भावः। (परेणोपादीयमानेत्यादि) दुन्दुभितदाहन्तृपुरुषान्यतरापसरणेनेत्यर्थः। (वाक्यत्रये द्रष्टव्य इति) समानार्थकमितिशेषः। (तृतीयान्तयोरित्यादिशब्दयोरिति)

भिधाय "स यथाऽऽर्द्रैधाग्नेः' इत्यादिना "स यथा सर्वासामपां समुद्र एकायनम्" इत्यादिना चोपास्य-भूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वं सकल-विषयप्रवृत्तिमूलकरणग्रामनियमनञ्च विस्तीर्णमुपदि-

* श्रुतप्रकाशिका *

नञ्च सामान्येनोक्तमित्यर्थः । ( स यथेति ) तृतीयान्तयोरित्यादिशब्दयोर्निखिलेत्या-दिपदद्वयेन यथायोगमन्वयः । एधशब्दोऽकारान्त इन्धनवाची, आर्द्रेन्धनाग्नि-ग्रहणं निमित्तोपादानयोर्ज्ञापनार्थम्, अग्निर्हि धूमोत्पत्तौ निमित्तम्, इन्धनमुपादानम्, 'ऋग्वेद यजुर्वेद' इत्यादिना वाचकसृष्टिमात्रमुक्तं प्रथममैत्रेयीब्राह्मणे, उत्तरे तु 'इष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि अस्यैवैतानि सर्वाणि निश्वसितानि" इति साधनसाध्यभोग्यभोगस्थानभोक्तृवर्गरूप-वाच्यजगत्सृष्टिरुक्ता, अनुक्तस्यान्यतो ग्राह्यत्वात् प्रथमे च वाच्यसृष्टिरुक्ता भवतीत्यभिप्रायेणाह ( निखिलजगदेककारणत्वमिति ) निखिलशब्दो वाच्य-वाचकभोग्यभोगस्थानादिपरः, एकशब्दो निमित्तोपादानैकत्वपरः, 'स यथा सर्वासामपा'मित्यादिवाक्यानामर्थमभिप्रयन्नाह ( सकलविषयेति ) यथा सर्वा-सामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनं सर्वेषां रसानां सर्वेषां गन्धा-नामिति तत्तदिन्द्रियाणां तत्तद्विषयायनत्वमुक्तम्, दृष्टान्तदार्ष्टान्तिकयोरनुवृत्तमय-नत्वं नाम तत्तदुपादातृत्वम्, तेनैकैककरणस्य एकैकजातीयस्पर्शाद्यवान्तरविशेषेषु वृत्तिविशेषा बहवो दर्शिता भवन्ति, सर्वेषां स्पर्शानामिति श्रवणात्. अस्य वृत्तिविशेष-प्रदर्शनस्य किं प्रयोजनमित्यपेक्षायामुपदेशस्य वैयर्थ्यायोगात् "आत्मा वा अरे द्रष्टव्यः' इति आत्मसाक्षात्कारस्य प्रकृतत्वात् दुन्दुभ्यादिदृष्टान्तैः सामान्येन करणनियमनस्योक्तत्वात् तन्नियमनविशेषकथनस्यापेक्षितत्वादुत्तरवाक्येन पूर्ववा-क्यविवरणस्य एतत्प्रकरणदृष्टत्वाच्च करणवृत्तिविशेषप्रदर्शनं तद्वृत्तिविशेषनिरोधे-नात्मसाक्षात्कारनिष्पादनार्थमित्यभिप्रायः । ( विस्तीर्णमिति ) कारणत्वं निमि-

* भावप्रकाशिका *

स यथार्द्रैधाग्नेरित्यादिना जगदेककारणत्वमेकायनमित्यादिना करणग्रामनियमनं चेत्यन्वय इति भावः । ( वृत्तिविशेषा बहवो दर्शिता भवन्तीति ) स्पर्शानामिति

श्य "स यथा सैन्धवघनः" इत्यादिनाऽमृतत्वोपाय-प्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकाकारतामुपपाद्य तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशायां भूतपरिणामानु-

* श्रुतप्रकाशिका *

चोपादानविभागकथनात् कार्य्यबाहुल्यप्रदर्शनाच्च विस्तृतम्, करणनियमनन्तु करणविशेषाणां निरोद्धव्यवृत्तिविशेषप्रदर्शनेन विस्तृतमित्यर्थः। (उपदिश्येति) न हि निष्प्रयोजनोपदेशस्सम्भवतीति भावः। 'स यथा सैन्धवघनः' इतिवाक्योपादानं "स यथा सैन्धवखिल्य" इतिवाक्यस्यापि प्रदर्शनार्थम्। (प्रोत्साहनायेति) आत्माभिमानविषयदेहस्य दौर्गन्ध्यादिदर्शनेऽपि आत्माभिमानविषयत्वादेव हि तत्संस्कारविषये प्रवर्त्तते, तस्यैवोद्बुद्धस्य स्वस्वरूपस्यैव प्राप्यत्वेऽवगते हि प्रवृत्त्याधिक्यं जायत इत्यर्थः। विज्ञानघनशब्दस्य 'महद्भूतमनन्तमपार'मिति सामानाधिकरण्यं प्रथममैत्रेयीब्राह्मणप्रतिपन्नमुपजीव्योक्तं जीवात्मस्वरूपेणावस्थितस्येति। भगवान्नृसिंहः श्वेतः ब्राह्मणश्चतुर्वेदाभिज्ञो गौर इत्यत्र श्वैत्यादिवद्विशेषणद्वारा परमविशेष्यविशेषणं ज्ञानैकाकारत्वमित्यर्थः। अनेन पूर्वोक्तस्य जीववाचिशब्देन परमात्माभिधाननिर्वाहस्योपयोगस्थलं विज्ञानघनशब्द इति दर्शितम्, तत्पर्यन्तत्वस्यैव निर्वाह्यत्वे हेतुः परमात्मधर्मवाचिमहद्भूतानन्तापारशब्दसामानाधिकरण्यमित्यर्थः सिद्धम्। न चाव्यवधानेन परमात्मपरो विज्ञानघनशब्दः, 'उत्थाय विनश्यति' 'प्रेत्ये'तिश्रवणात् सर्वावस्थास्वपि जीवस्वरूपस्य परमात्मनिष्ठतया स्वातन्त्र्याभावज्ञापनं जीवशब्देन तत्पर्यन्तनिर्देशस्य प्रयोजनमिति फलितम्। उपपाद्य— दृष्टान्तमुक्त्वेत्यर्थः। तान्येवानुविनश्यतीत्यत्रानुशब्दार्थमाह (भूत-

* भावप्रकाशिका *

बहुवचनेनैव शीतोष्णवैविध्ये सिद्धे सर्वग्रहणं शीतोष्णाद्यवान्तरवैविध्यप्रदर्शनार्थमित्येव वक्तव्ये वृत्तिविशेषा बहवो दर्शिता भवन्तीति कथमुच्यते? नहि स्पर्शादिशब्दा वृत्तिविशेषपराः, तथाहि सति अनुवृत्तमयनत्वं नाम तदुपादातृत्वमिति क्लेशो नाश्रयणीयस्स्यादिति चेत्. सत्यम्; वृत्तिविशेषा बहवो दर्शिता भवन्तीत्येतस्य फलितार्थकथनरूपतया अदोषात्। (सैन्धवखिल्य इतिवाक्यस्यापीति)

वृत्तिं 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्ये-वानुविनश्यति" इत्यभिधाय "न प्रेत्य संज्ञास्ति" इति मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचा-भावेन भूतसङ्घातेनैकीकृत्यात्मनि देवादिरूपज्ञाना-

* श्रुतप्रकाशिका *

परिणामानुवृत्तिमिति ) भूतेषु नश्यत्सु एष नश्यतीत्यर्थः । विनाशो नाम अत्यन्तज्ञानसङ्कोचः " अविनाशी वा अरेऽयमात्मे'त्यनन्त-रवाक्याविरोधात् । अत्र प्रेत्यशब्दस्य पूर्वोक्तविनाशानुवादशङ्काव्यावृत्त्यर्थमाह (मोक्षदशायामिति) "न प्रेत्यसंज्ञाऽस्ती'ति न देहविगमदशायां ज्ञाननिषेधः, देह-विगमदशायामज्ञानस्य तान्येवानुविनश्यतीत्युक्तत्वात् । नाऽपि लोकान्तरे ज्ञाननि-षेधः, कर्मफलभोगावगमकशास्त्रान्तरविरोधात् । नापि नैमित्तिकप्राकृतप्रलययोरज्ञा-नमुच्यते, तयोरप्रस्तुतत्वात् ; अतः पारिशेष्यात् प्रेत्यशब्दश्चरमदेहावसानपरः, "नोपजनं स्मरन्निदं शरीर'मिति श्रुत्यन्तरार्थप्रत्यभिज्ञानात् । अत्रापि "एता-वदेव खल्वरे अमृतत्वम्" इत्यमृतत्वस्योक्तत्ववचनाच्च मोक्षविषयत्वं युक्तमित्यभि-प्रायः। पूर्वापरवाक्यानुगुणमर्थमाह ( स्वाभाविकेति ) स्वरूपस्य ज्ञानात्मकत्वं "स यथा सैन्धवघन' इत्यादिनोक्तम्, अतः स्वाभाविकत्वं फलितम् । अनन्तर-शब्देन बहिरपि ज्ञानात्मकत्वस्योक्तत्वाद्धर्मभूतज्ञानवत्त्वं सिद्धम्, तस्य चापरिच्छि-न्नत्वं "सर्वं ह पश्यः पश्यति' इति श्रुत्यन्तरे सिद्धमित्यभिप्रेत्य स्वाभाविकापरि-च्छिन्नज्ञानसङ्कोचाभावेनेत्युक्तम् । समित्येकीकार इत्यभिप्रायेणाह ( एकीकृत्येति ) केनेत्यपेक्षायाम् "एतेभ्यो भूतेभ्य' इति पूर्ववाक्यमुपजीव्याह ( भूतसङ्घातेनेति ) ( देवादिरूपज्ञानाभावमुक्त्वेति ) नोपजनं स्मरन्निति प्रकरण एव "मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोक " इति ज्ञानविकासप्रतिपादनात् ,

* भावप्रकाशिका *

चतुर्थगतस्यापीत्यर्थः । ( तस्यैवेति ) तादृशप्रेमास्पदस्येत्यर्थः । ( उद्बुद्धस्येति ) असङ्कुचितज्ञानस्येत्यर्थः । ( श्रुत्यन्तरार्थप्रत्यभिज्ञानादिति ) "न संज्ञास्ति' न स्मरन्" इत्यनयोरैकार्थ्यादिति भावः । (स्वाभाविकत्वं फलितमिति ) उपाध्यनुक्ते-रिति भावः ( समित्येकीकार इति ) संज्ञास्तीत्यत्रेत्यर्थः । ( ज्ञाननित्यत्ववचना-

भावमुक्त्वा पुनरपि "यत्र हि द्वैतमिव भवति" इत्या-

* श्रुतप्रकाशिका *

"न प्रेत्य संज्ञास्ती'तिवाक्यं श्रुत्वा 'न ह वा अहमिमं जानामी'ति मैत्रेय्या पृष्टे 'अविनाशी वा अरेयमात्मा" इत्यात्मस्वरूपनित्यत्वमुक्त्वा 'अनुच्छित्ति-धर्मे'ति ज्ञाननित्यत्ववचनाच्चेति भावः । मुक्तौ ज्ञानं नास्ति चेत् ज्ञानैकाकारत्वं पूर्वोक्तं विरुध्येतेति मैत्रेयीवाक्याभिप्रायः । अनुच्छित्तिधर्मेति ज्ञाननित्यतां याज्ञवल्क्यः प्रत्यभाषीत् । न चोच्छित्त्यभाव एवास्य धर्म इत्युच्यते , अविनाशीति स्वरूपनित्यत्वस्योक्तत्वात् अविनाशिपदाभावेऽपि धर्मशब्दवैयर्थ्यप्रसङ्गाच्च । दीपादौ प्रतिक्षणविनाशसन्ततिविनाशयोर्दृष्टत्वात्तदुभयव्युदासाय पदद्वयमिति न शङ्कनीयम् , अविनाशिशब्देनैव असङ्कोचादुभयविनाशाभावसिद्धेः धर्मशब्दवैयर्थ्यप्रसङ्गाच्च , अव्यय इतिवदनुच्छित्तिरित्येतावतापि स्वरूपानुच्छित्तिसिद्धेः ( पुनरपीति ) भ्रान्तिर्द्विविधा, अनात्मनि देहबुद्धिः अब्रह्मात्मकतया स्वातन्त्र्यबुद्धिश्चेति । तत्र 'न प्रेत्य संज्ञाऽस्ती'त्यनेन बन्धनदशानुवृत्तदेहात्मभ्रमनिवृत्तिरुक्ता, अथ स्वनिष्ठतानिवृत्तिरुच्यत इत्यर्थः । यत्र—यस्यामवस्थायाम्, द्वैतमिव भवति परमात्मनः पृथक्त्वम् , स्वनिष्ठतया पृथक्त्वं भवति ; इवशब्दः स्वातन्त्र्यस्याप्रामाणिकत्वद्योतकः । तत्—तदा , इतरः—परमात्मन इतरः पृथक् स्थितः । इतरम्—स्वनिष्ठं वस्तु । इतरेण स्वनिष्ठदर्शनसाधनेन , पश्यतीति स्वनिष्ठभ्रमानुवादः । मुक्तौ तन्निवृत्तिमाह— यत्र त्विति । यत्र— यस्यां मुक्तिदशायाम् सर्वमात्मैवाभूत् परमात्मात्मकत्वेन प्रकाशते । तत्—तदा, कः— चेतनः, केन—करणेन, कं—स्वनिष्ठमर्थं पश्येत्, अब्रह्मात्मकं स्वनिष्ठतया भासमानं वस्तु तद्दर्शनसाधनं तद्द्रष्टा च

❀ भावप्रकाशिका ❀

श्चेति ) न विद्यते उच्छित्तिर्विनाशो यस्य तदनुच्छित्ति, ज्ञानमनुच्छित्तिधर्मो यस्य सोऽयमनुच्छित्तिधर्मा इति बहुव्रीहिगर्भबहुव्रीहिरित्यर्थः । ( स्वनिष्ठभ्रमानुवाद इति ) आत्मानं स्वनिष्ठं मन्वानः स्वनिष्ठत्वेनाभिमन्यमानेन करणेन स्वनिष्ठाभिमानविषयं विषयं पश्यतीत्यर्थः । कर्तृकरणकर्मसु स्वनिष्ठत्वभ्रमोऽनुवर्तत इत्यर्थः । ( स्वनिष्ठार्थान्तरदर्शनं स्यादिति ) ब्रह्मस्वरूपानवभासे ब्रह्मात्मकत्वदर्शनासम्भवादब्रह्मात्मकार्थान्तरदर्शनं स्यादित्यर्थः । अत्र येनेदं विजानातीतिवाक्यस्य "ग्राह-

दिना अब्रह्मात्मकत्वेन नानाभूतवस्तुदर्शनमज्ञानकृतमिति निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य "येनेदं सर्वं विजानाति तं केन विजानीयात्" इति च जीवात्मा स्वात्मतयाऽवस्थितेन येन परमात्मना आहितज्ञानस्सन् इदं सर्वं विजानाति अयं तं केन विजानीयात्, न केनापीति परमात्मनो दुरवगमत्वमुपपाद्य "स एष नेति नेति" इत्यादिना

* श्रुतप्रकाशिका *

मुक्तिदशायां नास्तीत्यर्थः। तदिदं वाक्यं हृदि निधायाह (अब्रह्मात्मकत्वेनेति) नानात्वनिषेधस्य विहितनानात्वव्यतिरिक्तविषयत्वात् स्वनिष्ठनानात्वं निषेध्यमित्यभिप्रायः। (नानाभूतवस्तुदर्शनमज्ञानकृतमिति) न तत्तद्वस्तुदर्शनमात्रमज्ञानकृतम्, किन्तु स्वनिष्ठदर्शनमेव तदुपाधिकमिति भावः। (अज्ञानकृतमिति) स्वनिष्ठवस्तुदर्शनस्यौपाधिकत्वादुपाधिनिवृत्तौ तन्निवृत्तिर्युक्तेति भावः। उपाध्यभावेपि ब्रह्मस्वरूपानवभासे स्वनिष्ठार्थान्तरदर्शनं स्यादित्यत्राह (ब्रह्मात्मकं कृत्स्नं जगदनुभवत इति) "यत्र त्वस्य सर्वमात्मैवाभू"दिति न भवनमत्र विवक्षितं, ब्रह्मात्मकत्वस्य नित्यत्वेन यत्रेत्यवस्थाविशेषान्वयोक्त्यनुपपत्तेः, अतो "ब्रह्मवेद ब्रह्मैव भवति" इत्यादाविव आविर्भावाभिप्रायकं वाक्यमित्यभिप्रायः। कृत्स्नानुभवेऽपि ब्रह्मणो जगतश्च पृथगनुभवः किं न स्यादित्यत्राह (ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेनेति) अप्रामाणिकज्ञानं हि दोषादुत्पद्यते, दोषाभावे तु वस्तुसद्भावं विना दर्शनं नोपपद्यत इत्यर्थः। (येनेदमिति) 'क इत्था वेद

* भावप्रकाशिका *

कादि जगत्सर्वं येन कूटस्थसाक्षिणा। लोकस्सर्वो विजानाति जानीयात्केन तं वद" इति सुरेश्वरवार्तिकोक्तप्रकारेण येन साक्षिरूपेण लोकस्सर्वो विजानाति तं केन विजानीयात् स केनापि दृश्यो न भवतीत्यर्थ इति परैर्व्याख्यातम्। तत्रानुपपत्तिमाह (अन्यथा आत्मा वा अरे द्रष्टव्य इत्यादि) अन्यथा केवलदुरवबो-

अयं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षण-रूप एव सर्वशरीरस्सर्वात्मतयाऽवस्थित इति स्वशरीरभूतचिदचिद्वस्तुगतैर्दोषैर्न संस्पृश्यत इत्यभिधाय "विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वम्" इति

* श्रुतप्रकाशिका *

यत्र सः, इतिवत् परमात्मप्रसादादृते तस्य दुरवबोधत्वमत्रोच्यते, अन्यथा आत्मा वा अरे द्रष्टव्य इत्युपक्रमावगतद्रष्टव्यत्वविरोधात् "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीश'मिति तत्प्रसादेन तद्दर्शनस्य श्रुत्यन्तरसिद्धत्वाच्चेति भावः । ( स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एवेति ) चिदचिद्गतप्रकाराणां प्रमाणान्तरसिद्धत्वादिति शब्दद्वयेन तत्प्रकारमनूद्य निषेधद्वयेन चिद्गतोऽचिद्गतश्च प्रकारो व्युदस्यते, विहितप्रकारस्य निषेधायोगात् "अग्राह्यो न गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते" इति चिदचिद्गतप्रकारविशेषनिषेधेन तद्विवरणाच्चेतिभावः । अग्राह्यः— चक्षुरादिना ग्रहणानर्हः, अतो न गृह्यते ; एवमशीर्य इत्यादि योजनीयम् । असङ्ग इत्यादिना जीवधर्मनिषेधः, न ह्यचित्सङ्गोऽस्य स्वरूपतिरोधानकृद्भवति, न हि सज्यत इत्यादावुक्ते सङ्गादियोग्यस्यापि दूरस्थतया तदभाव इति शङ्काव्यावृत्त्यर्थमसङ्ग इत्युक्तम् । असङ्गः सङ्गविरोधी सङ्गानर्हत्वमर्थसिद्धम्, तेन सङ्गाद्यभावः न देशकालविप्रकर्षात्सङ्गाद्यभावः, किन्तु स्वभावविप्रकर्षादित्यर्थः । पूर्ववाक्योक्तासङ्गादिफलमाह (समस्तवस्तुविस-

❁ भावप्रकाशिका ❁

धत्वे कथित इत्यर्थः । ( प्रकारो व्युदस्यत इति ) ब्रह्मणीतिशेषः । ( ग्रहणानर्ह इति ) ततश्च न गृह्यत इत्यनेन न पौनरुक्त्यमिति भावः । नन्वचित्सङ्गे विद्यमाने कथमचित्सङ्गनिषेध इत्यत आह ( न ह्यचित्सङ्गोऽस्येति ) ( पूर्ववाक्येन पुनरुक्तीति ) येनेदं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयात्' इत्यनयोः पौनरुक्त्यमिति भावः । ( उपायान्तरनिषेधपरमिदमिति ) अत्र विजानीयादित्यनेन न मुक्तिकालीनब्रह्मानुभव उच्यते । ततश्चोपासनमन्तरा केनो-

समस्तवस्तुविसजातीयं निरस्तनिखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरुषोत्तममुक्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासनममृतत्वोपायः, ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयते इत्युक्तवान्। अतः

---

* श्रुतप्रकाशिका *

जातीयमिति ) ( निखिलजगदेककारणभूतं सर्वस्य विज्ञातारमिति ) प्रकरणोपक्रमोदितकारणत्वव्याप्तसर्वज्ञत्वादिगुणप्रदर्शको विज्ञातृशब्द इति भावः। 'तं केन विजानीया'दिति पूर्ववाक्येन पुनरुक्तिशङ्कापरिहारायाह ( उक्तप्रकारादिति ) परमात्मप्रसादादृते तस्य दुरवगमत्वपरं पूर्ववाक्यं तत्प्रसादनोपायश्चात्राभिहितमुपासनमेवेति केवलयज्ञदानाद्युपायान्तरनिषेधपरमिदं वाक्यमित्यर्थः। विपरीतं किं न स्यादिति नाशङ्कनीयं, द्रष्टव्य इत्युपक्रमावगतज्ञानेनैव, निगमनस्य युक्तत्वात् न हि दुरवबोधतया निगमनं न्याय्यम्, उपक्रमविरोधात्। एतावदित्यस्यार्थमाह ( ब्रह्मप्राप्तिरेव चेति ) उपायान्तरव्युदसनमुखेन उक्तोपायनिगमनपरं विज्ञातारमितिवाक्यम्, एतावदित्यादिवाक्यमुपेयनिगमनपरमित्यर्थः। अधिकरणार्थमुपसंहरति (अत इति)॥—इतरैस्सर्वैः सूत्रत्रयव्यख्यनमन्यथा कृतम्, तत्तु पतिजायादिसम्बन्धेन जीवत्वशङ्कानिरासस्यानुपयोगाद्विरुद्धत्वाच्च अनुपपन्नमित्यनुसन्धेयम्। तत्र मिथ्यावेदान्तिभिस्तु प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयं द्वेधा व्याख्यातम्, तत्र प्रथमम् 'इदं सर्वं यदयमात्मे'त्यभेदव्यपदेशस्य कार्य्यकारणभावनिबन्ध-

* भावप्रकाशिका *

पायेन विजानीयान्मुक्तिमनुभवेदित्यर्थः। एतावदित्यस्यार्थमाह— विजानीयादित्यनेनेति। विजानीयादित्यनेन ब्रह्मानुभवलक्षणप्राप्तेरुक्तत्वादेतावदित्यनेन तत्परामर्शो युक्त इति भावः। ( अनुपयोगाद्विरुद्धत्वाच्चेति ) जीवोत्पत्तिप्रलयचिन्तनं प्रकृतस्यानुपयुक्तं, नह्येक एव भ्रान्तः पुरुषः स्वाभिमतविरुद्धमर्थं कदाचिदङ्गीकरोतीति चोद्यरत्र स्पष्टम्। ( द्वेधा व्याख्यातमिति ) पतिजायापुत्रवित्तादिप्रियसंसूचितेन भोक्त्रात्मनोपक्रमरूपपूर्वपक्षबीजस्य परिहारपरतया त्रिसूत्र्या एका योजना, विज्ञानघन एवेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति' इति द्रष्टव्यत्वेन प्रकृतस्य विज्ञानात्मभावेन समुत्थानविनाशरूपमध्यमवाक्यगतजीवलिङ्ग-

परं ब्रह्मैवास्मिन् वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारणम्, न पुरुषः तदधिष्ठिता च प्रकृतिरिति स्थितम् ॥ ७ ॥ वाक्यान्वयाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

नत्वपरमाद्यं सूत्रम्, उत्क्रमिष्यतो ब्रह्मभावापत्तिहेतुकत्वपरं द्वितीयम्, ब्रह्मण एवाविकृतस्य विज्ञानात्मभावेनावस्थानमूलत्वपरं तृतीयमित्युक्तम् । एवं वदतोऽभिप्रायः शोधनीयः, यदि कार्य्यकारणभावं वदता आश्मरथ्येन ब्रह्मपरिणामो जीवोऽभिमतः, पूर्वमनेवम्भावश्च औडुलोम्यभिमत इति सूत्रद्वयार्थः पूर्वपक्षीकृतः, एतावदस्माकमविरुद्धम् । अथ कार्य्यकारणभावो नाम अध्यासरूपः, उत्क्रमिष्यत एवम्भावश्चाध्यस्ताकारनिवृत्तिरूपः, ब्रह्मण एव जीवभावारोपतन्निवृत्तिमत्त्वाभ्याममभेदव्यपदेशपरं सूत्रद्वयमिति मतं तदानीं सिद्धान्ततयाऽभिमतात्काशकृत्स्नमताद्भेदाभावेन सूत्रद्वयवैयर्थ्यं स्यात् । भवत्पक्षे हि ब्रह्मण एव विज्ञानात्मभावेनावस्थानं काशकृत्स्नमतम्, जीवब्रह्मणोरैक्यमभ्युपगच्छतश्च काशकृत्स्नस्य जीवभावस्याध्यस्तत्वं निवर्त्त्यत्वं चाभिमतमेवेति काशकृत्स्नमताद्विशेषाभावेन सूत्रद्वयवैयर्थ्यं स्थितम् । काशकृत्स्नमतस्यैवाचार्य्यान्तरद्वयाभिमत्या स्थिरी-

७ भावप्रकाशिका ७

स्यान्यथासिद्धिपरा द्वितीययोजनेतिव्याख्यातमित्यर्थः । ( इदं सर्वं यदयमात्मेति अभेदव्यपदेशस्येति ) आत्मनः कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः' इत्युपक्रमे अभेदव्यपदेशस्याभेदव्यपदेशपर्यवसितस्य भोक्त्रात्मनोपक्रमस्येत्यर्थः । 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति ' 'इदं सर्वं यदयमात्मा' इति प्रज्ञाता भेदोपपादककार्यकारणभावायत्तैक्यसूचकत्वं प्रथमसूत्रार्थ इतिवर्णितमित्यर्थः । एवमेव पाठश्चेत्समीचीनः, इतरथा यथायमर्थस्सिध्यति तथाध्याहृत्य योजनीयम् । ( उत्क्रमिष्यतोर्ब्रह्मभावापत्तीति ) अत्रापि भोक्त्रात्मनोपक्रमस्येति शेषः पूरणीयः । एवं ब्रह्मण एवाविकृतस्येत्यत्रापि द्रष्टव्यम् । ( एवं वदतोऽभिप्रायश्शोधनीय इति ) यद्यपि शाङ्करभाष्ये काशकृत्स्नस्याचार्यस्याविकृतः पर एवेश्वरो जीव इति मतम्, आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतम्, तथापि कार्यकारणलक्षणभेदः कियानित्य-

* श्रुतप्रकाशिका *

करणार्थं सूत्रद्वयमिति चेत्, व्यतिरिक्तसर्वाचार्यानभिमतत्वशङ्काव्युदासार्थमाचार्य्य-भूयस्तया सूत्रसहस्राणि प्रणेतव्यानि स्युः, विस्तरभयादाचार्य्यद्वयोक्तिः प्रदर्शनार्थेति चेत्, काशकृत्स्नकीर्त्तनस्यैव सर्वाचार्य्यप्रदर्शनार्थत्वसम्भवात्सूत्रद्वयवैयर्थ्यमेव स्यात्। अस्मन्मते तु परिणामाध्यासपक्षद्वयपूर्वपक्षीकरणार्थत्वात् साफल्यं स्फुटतरम्। पुनश्चैवं योजितं सूत्रत्रयं "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय" इत्युक्तं महतो भूतस्य ब्रह्मणो भूतेभ्यः समुत्थानं कार्यकारणाव्यतिरेकप्रतिज्ञा-

* भावप्रकाशिका *

भिप्रेत इति गम्यते, औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते, प्रतिपिपादयिषितार्थानुसारात्तत्त्वमस्यादिश्रुतिभ्य इति ग्रन्थे तदाशयः स्पष्ट एव प्रतीयते, तथा भामत्यामपि वह्निस्फुलिङ्गयोरिव जीवपरयोरप्युपादानोपादेयभावकृतौ भेदाभेदावित्याश्मरथ्यमतम्। भविष्यन्तमभेदमादाय भेदकालेप्यभेदेन व्यपदेश इत्यौडुलोमिमतमिति प्रतिपादितम्। तथापि सम्भावनामात्रादेवमुक्तमिति द्रष्टव्यम्। (पुनश्चैवं योजितमिति) इत्थं हि शाङ्करभाष्यम् 'यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यस्समुत्थानं विज्ञानात्मभावेन दर्शयन् विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयतीति। तत्रापीयमेव त्रिसूत्री योजयितव्या॥ प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः॥ इदमत्र प्रतिज्ञातम्. आत्मनि विदिते सर्वं विदितं भवति इदं सर्वं यदयमात्मेति चोपपादितञ्च सर्वस्य नामरूपकर्मप्रपञ्चस्यैकप्रसवत्वादेकप्रलयत्वाच्च दुन्दुभ्यादिदृष्टान्तैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात्, तस्या एव प्रतिज्ञायास्सिद्धिं सूचयत्येतल्लिङ्गम्। 'यन्महतो भूतस्य भूतेभ्यस्समुत्थानं विज्ञानात्मभावेन कथितमित्याश्मरथ्य आचार्यो मन्यते। अभेदे हि सति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमवकल्पत इति॥ उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः॥ उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात्सम्प्रसन्नस्य परेणात्मना ऐक्यसम्भवादिदमभेदोपादानमित्यौडुलोमिराचार्यो मन्यते॥ अवस्थितेरिति काशकृत्स्नः॥ अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते। नन्वात्मोच्छेदाभिधानमेतत्, 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति'

* श्रुतप्रकाशिका *

सिद्धिसूचकम्, 'तान्येवानुविनश्यती'त्युक्तं विशेषविज्ञानोच्छेदरूपमभेदाभिधानमुत्क्रमिष्यतः परेणात्मनैक्यसम्भवात् ब्रह्मण एव विज्ञानात्मभावेनावस्थानाच्चोपपन्नमिति । इदमप्ययुक्तम् ; प्रकृतानुपयोगात् । द्रष्टव्यतयोपदिष्टस्यात्मनः परमात्मत्वं हि साध्यम्, जीवोत्पत्तिप्रलयवादः प्रकरणस्य परमात्मपरत्वं न निवारयति । न हि पृथिव्याद्युत्पत्तिप्रलयवादास्तत्तत्प्रकरणानां परमात्मपरत्वं वारयन्ति, अतो जीवोत्पत्तिप्रलयचिन्तनं प्रकृतस्यानुपयुक्तम्, अत एव पादासङ्गतं च । इदञ्च जीवनित्यत्वाजत्वादिश्रुत्यविरोधेन 'नात्मा श्रुते'रित्यत्र करिष्यते, भवद्भिरपीदमेव वाक्यमुपादाय उपाध्युत्पत्तिप्रलयाभिप्रायमिति तत्रैव व्याख्यातम्, अतः पृथक् प्रयत्नवैयर्थ्यञ्च । तत्रोपजीव्यत्वायात्र प्रसङ्गाच्चिन्तितमिति चेन्न, इहोक्तस्य सूत्रद्वयार्थस्य भाविसाध्यानुपयोगात् । प्रतिज्ञासिद्धिसूचकत्वं प्रलये ब्रह्मतापत्तिवचनं चोत्पत्तिप्रलययोर्न गौणत्वसाधकम्, तेजःप्रभृत्युत्पत्तिप्रलययोरपि गौणत्वप्रसङ्गात् । अविकृतस्यैव ब्रह्मणो विज्ञानात्मभावेनावस्थानमपि न गौणत्वसाधकम्, अविकृतस्यैव ब्रह्मणोऽध्यस्ततेजोबन्नरूपेणावस्थितत्वेन तदुत्पत्त्यादेरपि गौणत्वप्रसङ्गात्. अस्त्विति चेत्. तेजोबन्नाद्युत्पत्तेर्जीवोत्पत्तिवैषम्यस्य दुर्वचत्वात् प्रयासवैयर्थ्यमेव स्यादिति ; अतः प्रकृतानुपयोगादिभिरनुपपन्नत्वात् जीवोत्पत्त्यादिनिर्वाहपरत्वमनादृतं भाष्यकारैः । अभेदव्यपदेशनिर्वाहस्त्वत्यन्तापेक्षितः, द्रष्टव्यस्यात्मनो जीववाचिशब्दनि-

* भावप्रकाशिका *

इति कथमेतत्परस्परभेदाभिधानम् ? नैष दोषः । विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानम्. नात्मोच्छेदाभिप्रायमिति । ततश्च पुरोवादिशङ्करभाष्यार्थोऽस्मद्वाक्याद्यथा सिध्यति तथाऽध्याहारव्युत्क्रमादिकमाश्रित्य योजनीयम् । (प्रकरणस्य परमात्मपरत्वं न निवारयतीति ) नन्वेवं वा 'अरेयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यस्समुत्थाये'त्यादिना प्रकृतस्य द्रष्टव्यात्मन एवायमिति परामृष्टस्य विज्ञानाभावेनोत्पत्तिविनाशवर्णनात्कथमुत्पत्तिविनाशश्रवणं प्रकरणस्य परमात्मपरतां न निवारयेत् । द्रष्टव्यस्यात्मनो जीववाचिशब्दनिर्देशकृतायाः अपरमात्मत्वशङ्काया निराकरणीयत्वाच्चेति स्वयमेव वक्ष्यमाणत्वाच्चेति चेत्, सत्यम् ; अविकृतस्य ब्रह्मणो जीवभावेनावस्थानं न सम्भवतीत्यादिदूषणान्तरे तात्पर्यात् । ( अभेदव्यपदेशनिर्वाहस्त्वत्यन्तापेक्षित इति ) एतेनेतरव्यपदेशाद्धिताकरणादिदोषप्रस-

* श्रुतप्रकाशिका *

देशकृतायाः अपरमात्मत्वशङ्काया निराकरणीयत्वात् । यादवप्रकाशैस्तु भोक्तृब्रह्मणोरैक्यादृते सर्वस्य ब्रह्मतादात्म्यप्रतिज्ञानासिद्धेर्जीवेनोपक्रमो जीवब्रह्मणोरभेदेन प्रतीतिसिद्ध्यर्थं इत्याद्यसूत्रार्थो वर्णितः, अत्र सामान्येन ब्रह्मणैक्यज्ञापनं प्रयोजनमुक्तं भवति । उत्क्रान्तौ ब्रह्मणि लीनतया तेनैक्याज्जीवेनोपक्रम इत्येतदर्थपरम् 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमि'रितिसूत्रं व्याख्यातम् । ब्रह्मणस्सर्वत्र तृणकणादावपि पूर्णत्वेनावस्थानात् येन केनचित्तृणादिवाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वं युक्तमिति तृतीयसूत्रार्थ उक्तः । तत्र तावदाद्यसूत्रद्वयस्य सूत्रकाराभिमतनिर्वाहपरत्वमयुक्तं, मुक्तिदशायामौडुलोम्यभिमितस्य ब्रह्मतादात्म्यस्य मुक्तिपादे 'चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमि'रिति सूत्रोपन्यस्तस्य सूत्रकारैरेव पूर्वपक्षीकृतत्वात् तथा तैर्व्याख्यातत्वाच्च । स्वप्रकाशसन्मात्रमेव स्वरूपम्, गुणाष्टकोक्तिस्तु गुणानां शक्तिरूपत्वाच्छक्तीनाञ्च भेदाभेदादिविकल्पयोग्यत्वाद्गुणशक्तियुक्तसन्मात्रस्वरूपाभिप्राया, क्रीडाजक्षणाद्युपन्यासः स्तुतिपरो दुःखाभावाभिप्राय इति औडुलोमिमतमुपन्यस्य 'एवमुपन्यासात्पूर्वभावादविरोधं बादरायणः' इतिसूत्रेण तत्प्रतिक्षिप्तम् । शक्तिमात्रस्य न पुरुषार्थत्वं, न हि गानमशृण्वतः श्रवणसामर्थ्यमात्रं पुरुषार्थः, अतो 'नाहमत्र भोग्यं पश्यामी'त्युक्तवतो मघोनः पुरुषार्थज्ञापनायोपदिश्यमानं गुणाष्टकं न शक्तिमात्राभिप्रायम्, अतः शक्तिमात्रोपन्यासस्य वैयर्थ्यात् क्रीडादिकं ब्रह्मभूतस्य मुक्तस्येश्वरस्येवाभ्युपगन्तव्यमिति हि सिद्धान्तितम् ;अतो यादृशं ब्रह्मतादात्म्यमौडुलोम्यभिमतं मुक्तिपादे पूर्वपक्षीकृतं तादृशमेव ब्रह्मतादात्म्यमिहाप्युपन्यस्तं स्यात्, नह्येक एवाभ्रान्तः पुरुषः स्वाभिमतविरुद्धमर्थं कदाचिदङ्गीकरोति, अत उत्तरत्र निराकरिष्यमाणस्य पक्षस्य

७ भावप्रकाशिका ७

क्तिरित्यधिकरणे— एवं विलक्षणत्वे सिद्धे सामानाधिकरण्यनिर्वाहार्थम् 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रमत्रैव सङ्गतम् । एवं सूत्रत्रयमेतदधिकरणशेष इत्यर्थमिति वक्ष्यमाणत्वात्कथमत्र सङ्गतिरितिशङ्का परास्ता । (यादवप्रकाशैस्त्विति) प्रतिज्ञासिद्धेरिति सूत्रत्रयमपि सूत्रकाराभिमतनिर्वाहपरमेव व्याचक्षते, नतु पूर्वसूत्रद्वयार्थस्य दूष्यत्वं तृतीयसूत्रार्थस्य (सूत्रकाराभिमतनिर्वाहपरत्वमिति) (विकल्पयोग्यत्वादिति ) विकल्पेन दूषयितुमयुक्तत्वादित्यर्थः । ( इहाप्युपन्यस्तं स्यादिति ) औ-

* श्रुतप्रकाशिका *

इह प्रसङ्गादुपन्यासस्यापि स्वीकारो व्याहत इति प्रतिक्षेप्यतयैव औडुलोमिमतोपन्यास इत्यभ्युपगन्तव्यम्, इहोपन्यस्ततादात्म्यस्य निराकरिष्यमाणत्वात् वैषम्यस्य च दुर्वचत्वात्, अतस्तत्साहचर्यादाश्मरथ्यमतमपि प्रतिक्षेप्यतयोपन्यस्तं स्यात्। स्वरूपपरिणामस्य सकलविशेषशून्यस्य ब्रह्मतादात्म्यस्य च सकलप्रमाणन्यायविरुद्धत्वाच्च प्रतिक्षेप्यत्वं दुर्निवारम्, अतश्चरमं सूत्रमेव स्वाभिमतनिर्वाहपरम्। तत्र च 'अवस्थिते'रितिपदं सर्वत्र घटपटतृणादौ ब्रह्मणः पूर्णतयाऽवस्थानादिति व्याख्यातम्, पूर्णतयाऽवस्थानञ्च सन्मात्ररूपेणेति विवक्षितम्, यथोक्तम्, 'अस्तित्वं ब्रह्मणो रूपं सर्वविकल्पप्रत्याख्यानात् नचास्तित्वं घटे पटे च खण्डितं वर्त्तते उभयत्रापि कृत्स्नास्तित्वदर्शनादिति। तदयुक्तम्, तथा हि— न तावदिदं ब्रह्मस्वरूपभूतमस्तित्वं सामान्यरूपं व्यवहारार्हत्वमानार्हत्वाद्युपाधिरूपं वा भवितुमर्हति, तस्य लोकसिद्धत्वेन 'इदं पूर्णमदः पूर्णम्" इत्यादिशास्त्रवैयर्थ्यप्रसङ्गात् तस्यैन्द्रियिकत्वेन "अद्रेश्यमग्राह्यम्" इत्यादिश्रुतिविरोधात् द्रव्याश्रयस्य तस्य स्वे महिम्नि स्थितत्वायोगाज्जगदाधारत्वायोगाज्जडस्य ज्ञानस्वरूपत्वायोगात् द्रव्यनिष्ठधर्मतया तदधीनात्मलाभस्य तस्य जगद्रूपेण परिणामायोगात् सार्वज्ञ्यसर्वशक्तित्वादिगुणाश्रयत्वायोगात्सङ्कल्पाश्रयत्वाभावेन निमित्तत्वायोगात्कारणत्वाभावेनैव अध्येयत्वेन प्राप्यत्वायोगाद्भवद्भिरनभ्युपगतत्वाच्च; अतः सद्द्रव्यमेवैकैकस्मिन् घटादौ पूर्णमिति भवतां मतम्। 'न चास्तित्वं घटे पटे च खण्डितं वर्त्तते उभयत्रापि कृत्स्नास्तित्वदर्शना'दिति भवद्भिरुक्तत्वात्सदिति प्रतीयमानं द्रव्यमेव ब्रह्मस्वरूपमिति 'अद्रेश्यमग्राह्य'मित्यादिश्रुतिविरोधो दुष्परिहरः। किञ्च घटे सद्वस्तुनः पूर्णत्वं नाम न सम्भवति, सजातीयविजातीयघटपटाद्यनन्तपदार्थरूपेण सद्द्रव्यस्य विभक्तत्वात्। घटत्वादिभिरवच्छिन्नं सत्पूर्णमिति चेन्न; अवच्छिन्नत्वदर्शनादेवानवच्छेदासिद्धेः। घटत्वावच्छिन्नस्य सतः पटत्वाद्यवच्छिन्नांशान्तरैरभिन्नत्वं पूर्णत्वमिति चेत्; तर्ह्येकस्थूणावस्थितस्यांशस्य स्थूणान्तरावच्छिन्नांशैरभिन्नत्वेन पूर्णत्ववत् घटावच्छिन्नस्य सद्द्रव्यस्य पूर्णत्वमंशान्तरसापेक्षमित्युक्तं स्यात्; ततश्च घटमात्ररूपस्य सद्द्रव्यस्यापूर्णत्वमेवो-

* भावप्रकाशिका *

डुलोमिमतप्रत्यभिज्ञानादिति भावः। (पूर्णत्ववदिति) अंशान्तरसापेक्षत्ववदि-

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

७ अधिकरणम्

एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वर-

* श्रुतप्रकाशिका *

कम्भवति । कथं तर्हि भवत्पक्षे शरीरभूतेषु चिदचिद्वस्तुषु परमात्मनः पूर्णत्वम् ? अणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वमिति ब्रूमः, तच्च शास्त्रबलादभ्युपेतम्, न तु प्रत्यक्षादिनेति न काचिदनुपपत्तिः । किञ्च परमात्मनस्तृणादावपि सद्रूपेण पूर्णत्वप्रतिपादनप्रयासश्च तत्र भवतां विफलः, येन केनचित्तृणादिवाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वोपपादनार्थं हि पूर्णत्वकथनम्; तत्तु न सिध्यति, अस्तित्वस्य तत्तच्छब्दवाच्यत्वाभावात्. अस्तित्वस्यापि घटादिशब्दवाच्यत्वे घटोऽस्ति पटो नास्तीति प्रयोगस्य पुनरुक्तिव्याघातौ प्रसज्येयाताम् । ननु घटादिशब्दानां विशिष्टवाचित्वं तवाभिमतम्. तत्र विशेष्यद्रव्यं सदिति चेत्, सत्यम्; तथापि घटादयः शब्दाः पटत्वाद्याश्रयरूपेण विशेष्यं वदन्ति, न तु सत्तारूपेण द्रव्यत्वरूपेण वा; अतो नास्मत्पक्षे पुनरुक्तिव्याघातादिदोषप्रसङ्गः, अतः पूर्णस्यापूर्णस्य वा सद्द्रव्यस्य शब्दवाच्यत्वाभावात्पूर्णतयाऽवस्थानकथनं परमात्मोपक्रमत्वानुपयोगीति सूत्रत्रयस्य यथोक्तार्थपरत्वं सिद्धम् ॥

॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ पेटिकासङ्गतिमाह (एवमिति) एवंशब्देनातीताधिकरणत्रयात्मकपेटिकाद्वयकृतनिरसनप्रकारो विवक्षितः, आद्याधिकरणत्रयेण हि साक्षात्सङ्गतेन विकल्पेन पुरुषाधिष्ठितप्रकृतेर्जगत्कारणत्वं निरस्तम् । द्वितीयेन तु पादासङ्गतेनापि प्रसङ्गप्राप्तेन नियमेन कारणत्वं प्रति-

* भावप्रकाशिका *

त्यर्थः । (तत्तच्छब्दवाच्यत्वाभावादिति) तृणादिशब्दवाच्यत्वाभावादिति भावः ॥ * ॥ इति वाक्यान्वयाधिकरणम् ॥ * ॥ .... .... ....

(पेटिकासङ्गतिमिति) पेटिकाभ्यामस्याधिकरणस्य सङ्गतिमित्यर्थः । (विकल्पेनेति) आनुमानिकमपीत्याद्यधिकरणत्रये ब्रह्मकारणत्वाभिमतेत्पक्षेणैव ब्रह्मणः कारणत्वमभ्युपगम्य क्वचित्प्रधानमपि कारणं भवत्वित्युत्थितो विकल्पोऽन्ययोगव्यवच्छेदेन निरस्तः, कारणत्वेन चेत्याद्यधिकरणत्रये तु प्रधानमेव जगत्कारणमित्युत्थितं नियमेन कारणत्वसयोगव्यवच्छेदाय निरस्तमिति भावः । ननु द्विती-

सांख्यः प्रत्यवतिष्ठते—यद्यपीक्षणादिगुणयोगात्सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति; तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति

---

* श्रुतप्रकाशिका *

क्षिप्तम्; तत्र छायानुसारिवाक्यविषयतया पादसङ्गतत्वेऽप्ययोगव्यवच्छेदप्रतिक्षेपेणोत्थितत्वात्तेनाकारेण प्रासङ्गिकत्वमपि विद्यते, एवं विकल्पेन नियमेन च कारणत्वे प्रतिक्षिप्ते समुच्चयेन कारणत्वं प्रतिक्षिप्यत इति नासङ्गतिरित्यर्थः। स्वनिष्ठवस्तुद्वयस्य निमित्तभावेनोपादानभावेन चान्योन्यसापेक्षतया एकस्मिन् कार्य्येऽन्वयो हि व्युदस्यते, सिद्धान्ते तु ज्ञानादिवदुपादानभूतस्य ब्रह्मणः प्रकृतिर्विशेषणम्, तस्य सर्वशक्तित्वादिति न समुच्चयनिरासविरोधः, अत एवावान्तरसङ्गतिरप्यस्ति, मैत्रेयीब्राह्मणे हि परब्रह्मण एव सर्वविधकारणत्वमुक्तम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादिभिः, तदयुक्तम्; परब्रह्मणो निमित्तमात्रत्वात्. उपादानं तु प्रधानमिति शङ्कयोत्थानप्रतीतेः। किं ब्रह्म निमित्तमात्रम्? उत उपादानमपीति। किं कारणवाक्यं ब्रह्मणो निमित्तत्वमात्रं प्रतिपादयति? उतोपादानतामपीति। प्रतिज्ञादृष्टान्तौ किं स्वारस्येन नेयौ? उत क्लिष्टतया नेयौ? किमन्यत्र निमित्तोपादानभेदनियमो निर्दोषत्वश्रुतिर्निमित्तोपादानभेदश्रुतिश्च प्रतिज्ञादृष्टान्तोपरोधका भवन्ति, नेति। यदोपरोधका भवन्ति तदा प्रतिज्ञादृष्टान्तयोः क्लिष्टतया निर्वाह्यत्वान्निमित्तत्वमात्रं वेदान्ताः प्रतिपादयन्तीति ब्रह्म निमित्तमात्रमिति पूर्वपक्षः स्यात्। यदा नोपरोधका भवन्ति तदा प्रतिज्ञादृष्टान्तयोः स्वरसतया नेयत्वादुपादानत्वमपि वेदान्ताः प्रतिपादयन्तीति उपादानमपि ब्रह्मैवेति राद्धान्ते फलफलिभावः। ईक्षत्यानन्दमयाद्यधिकरणसिद्धार्थाक्षेपपरिहारमुखेन परब्रह्मकारणत्वे समर्थिते कथं पुनः साङ्ख्यस्योत्थानमिति शङ्कामनुवदन् पूर्वपक्षी स्वमतं प्रतिजानीते (यद्यपीति) ईक्षणादीत्यादिशब्द आ-

* भावप्रकाशिका *

थाधिकरणत्रयस्य कथं प्रासङ्गिकत्वम्? छायानुसारिवाक्यस्य विषयतया त्रिपाद्या साक्षात्सङ्गतत्वादित्याशङ्क्योभयथापि साक्षात्सङ्गतिरस्तीत्याह (तत्र छायानुसारीति) ननु सिद्धान्तेपि प्रधानेश्वरयोरुभयोरपि कारणत्वस्येष्टत्वात्समुच्चयनिरासो न युक्त

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

७ अधिकरणम्

एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वर-

* श्रुतप्रकाशिका *

क्तम्भवति। कथं तर्हि भवत्पक्षे शरीरभूतेषु चिदचिद्वस्तुषु परमात्मनः पूर्णत्वम् ? अणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वमिति ब्रूमः, तच्च शास्त्रबलादभ्युपेतम्, न तु प्रत्यक्षादिनेति न काचिदनुपपत्तिः। किञ्च परमात्मनस्तृणादावपि सद्रूपेण पूर्णत्वप्रतिपादनप्रयासश्च तत्र भवतां विफलः, येन केनचित्तृणादिवाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वोपपादनार्थं हि पूर्णत्वकथनम्; तत्तु न सिध्यति, अस्तित्वस्य तत्तच्छब्दवाच्यत्वाभावात्. अस्तित्वस्यापि घटादिशब्दवाच्यत्वे घटोऽस्ति पटो नास्तीति प्रयोगस्य पुनरुक्तिव्याघातौ प्रसज्येयाताम्। ननु घटादिशब्दानां विशिष्टवाचित्वं तवाभिमतम्. तत्र विशेष्यद्रव्यं सदिति चेत्, सत्यम्; तथापि घटादयः शब्दाः पटत्वाद्याश्रयरूपेण विशेष्यं वदन्ति, न तु सत्तारूपेण द्रव्यत्वरूपेण वा; अतो नासत्पक्षे पुनरुक्तिव्याघातादिदोषप्रसङ्गः, अतः पूर्णस्यापूर्णस्य वा सद्द्रव्यस्य शब्दवाच्यत्वाभावात्पूर्णतयाऽवस्थानकथनं परमात्मोपक्रमत्वानुपयोगीति सूत्रत्रयस्य यथोक्तार्थपरत्वं सिद्धम् ॥

॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ पेटिकासङ्गतिमाह ( एवमिति ) एवंशब्देनातीताधिकरणत्रयात्मकपेटिकाद्वयकृतनिरसनप्रकारो विवक्षितः, आद्याधिकरणत्रयेण हि साक्षात्सङ्गतेन विकल्पेन पुरुषाधिष्ठितप्रकृतेर्जगत्कारणत्वं निरस्तम्। द्वितीयेन तु पादासङ्गतेनापि प्रसङ्गप्राप्तेन नियमेन कारणत्वं प्रति-

* भावप्रकाशिका *

त्यर्थः। ( तत्तच्छब्दवाच्यत्वाभावादिति ) तृणादिशब्दवाच्यत्वाभावादिति भावः ॥ * ॥ इति वाक्यान्वयाधिकरणम् ॥ * ॥ .... .... ....

( पेटिकासङ्गतिमिति ) पेटिकाभ्यामस्याधिकरणस्य सङ्गतिमित्यर्थः। ( विकल्पेनेति ) आनुमानिकमपीत्याद्यधिकरणत्रये ब्रह्मकारणत्वप्रतीतेक्षपैणव ब्रह्मणः कारणत्वमभ्युपगम्य क्वचित्प्रधानमपि कारणं भवत्वित्युत्थितो विकल्पोऽन्ययोगव्यवच्छेदेन निरस्तः, कारणत्वेन चेत्याद्यधिकरणत्रये तु प्रधानमेव जगत्कारणमित्युत्थितं नियमेन कारणत्वमयोगव्यवच्छेदाय निरस्तमिति भावः। ननु द्विती-

**साङ्ख्यः प्रत्यवतिष्ठते—यद्यपीक्षणादिगुणयोगात्सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति; तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति**

* श्रुतप्रकाशिका *

क्षिप्तम्; तत्र छायानुसारिवाक्यविषयतया पादसङ्गतत्वेऽप्ययोगव्यवच्छेदप्रतिक्षेपेणोत्थितत्वात्तेनाकारेण प्रासङ्गिकत्वमपि विद्यते, एवं विकल्पेन नियमेन च कारणत्वे प्रतिक्षिप्ते समुच्चयेन कारणत्वं प्रतिक्षिप्यत इति नासङ्गतिरित्यर्थः। स्वनिष्ठवस्तुद्वयस्य निमित्तभावेनोपादानभावेन चान्योन्यसापेक्षतया एकस्मिन् कार्य्येऽन्वयो हि व्युदस्यते, सिद्धान्ते तु ज्ञानादिवदुपादानभूतस्य ब्रह्मणः प्रकृतिर्विशेषणम्, तस्य सर्वशक्तित्वादिति न समुच्चयनिरासविरोधः, अत एवावान्तरसङ्गतिरप्यस्ति, मैत्रेयीब्राह्मणे हि परब्रह्मण एव सर्वविधकारणत्वमुक्तम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादिभिः, तदयुक्तम्; परब्रह्मणो निमित्तमात्रत्वात्. उपादानं तु प्रधानमिति शङ्कयोत्थानप्रतीतेः। किं ब्रह्म निमित्तमात्रम्? उत उपादानमपीति। किं कारणवाक्यं ब्रह्मणो निमित्तत्वमात्रं प्रतिपादयति? उतोपादानतामपीति। प्रतिज्ञादृष्टान्तौ किं स्वारस्येन नेयौ? उत क्लिष्टतया नेयौ? किमन्यत्र निमित्तोपादानभेदनियमो निर्दोषत्वश्रुतिर्निमित्तोपादानभेदश्रुतिश्च प्रतिज्ञादृष्टान्तोपरोधका भवन्ति, नेति। यदोपरोधका भवन्ति तदा प्रतिज्ञादृष्टान्तयोः क्लिष्टतया निर्वाह्यत्वान्निमित्तत्वमात्रं वेदान्ताः प्रतिपादयन्तीति ब्रह्म निमित्तमात्रमिति पूर्वपक्षः स्यात्। यदा नोपरोधका भवन्ति तदा प्रतिज्ञादृष्टान्तयोः स्वरसतया नेयत्वादुपादानत्वमपि वेदान्ताः प्रतिपादयन्तीति उपादानमपि ब्रह्मैवेति राद्धान्ते फलफलिभावः। ईक्षत्यानन्दमयाद्यधिकरणसिद्धार्थाक्षेपपरिहारमुखेन परब्रह्मकारणत्वे समर्थिते कथं पुनः साङ्ख्यस्योत्थानमिति शङ्कामनुवदन् पूर्वपक्षी स्वमतं प्रतिजानीते (यद्यपीति) ईक्षणादीत्यादिशब्द आ-

* भावप्रकाशिका *

याधिकरणत्रयस्य कथं प्रासङ्गिकत्वम्? छायानुसारिवाक्यस्य विषयतया त्रिपाद्या साक्षात्सङ्गतत्वादित्याशङ्क्योभयथापि साक्षात्सङ्गतिरस्तीत्याह (तत्र छायानुसारीति) ननु सिद्धान्तेपि प्रधानेश्वरयोरुभयोरपि कारणत्वस्येष्टत्वात्समुच्चयनिरासो न युक्त

प्रतीयते । नहि वेदान्ताः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुरीश्वरस्याधिष्ठेयेनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति । तथा ह्यपरिणामिनमेवैनं प्रकृतिं चैतदधिष्ठितां परिणामिनीमधीयते "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "स वा एष महानज आत्माऽजरोऽमरः" विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्" ध्यायतेऽध्यासिता तेन तन्यते प्रेर्य्यते पुनः । सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्" 'गौरनाद्यन्तवती सा जनित्री भूतभाविनी' इति । तथा प्रकृतिमुपादानभूतामधिष्ठायै-

---

* श्रुतप्रकाशिका *

नन्दादिपरः, वेदान्तैरेव—ब्रह्मैककारणत्वपरतया त्वदभिमतैरेवेति भावः । प्रतिज्ञातमुपपादयति ( नहीति ) ईश्वरस्य चेतनत्वादपरिणामित्वेनाधिष्ठातृत्वेन च प्रधानस्याचेतनतया परिणामित्वेनाधिष्ठेयत्वेन च वेदान्तप्रतिपादितत्वं प्रतिज्ञातार्थे हेतुरित्यर्थः । हेतुसिद्धिं दर्शयति ( तथा हीति ) 'निष्कल'मित्यादिवाक्यमीश्वरस्यापरिणामित्वविषयम् । 'विकारजननी'मिति प्रकृतेर्विकारित्वाधिष्ठेयत्वविषयम् . जनित्री—समष्टिसृष्टिकरी । भूतभाविनी—व्यष्टिसृष्टिकरी । प्रधानप्रतिपादके वाक्ये तद्विशेषणतयेश्वरस्याधिष्ठातृत्वं दर्शितम् । ईश्वरप्रतिपादके वाक्ये तस्य प्रधानाधिष्ठातृतयोपादानभूतात्तस्माद्भेदं दर्शयति ( तथेति ) महेश्वरशब्देन

* भावप्रकाशिका *

इत्याशङ्क्य समप्रधानतया समुच्चयस्य निरसनीयत्वं विवक्षितमित्याह (स्वनिष्ठवस्तुद्वयस्येति ) परस्परशरीरशरीरिभावानापन्नवस्तुद्वयस्येत्यर्थः । (सर्वशक्तित्वादितीति) सर्वे शक्तिर्यस्य तत्सर्वशक्ति, तत्त्वादित्यर्थः । 'यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज । तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः '' इति सर्वस्यापि शक्तिस्थानीयत्वात्प्रकृतेर्विशेषणत्वमिति भावः । ( वेदान्तैरेवेति ) व्याख्येयं पदम् । ( तद्विशेषणतयेति ) 'तेनैवाधिष्ठिता जग'दितिवाक्ये अर्थतः प्रधानस्यापीश्वरस्य

वेश्वरो विश्वं जगत्सृजतीति श्रूयते "अस्मान्मायी सृजते विश्वमेतत्' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति । स्मृतिरपि "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्" इति । एवमश्रुतेऽपि प्रधानोपादानत्वे ब्रह्मणो जगत्कारणत्वश्रुत्यन्यथानुपपत्त्यैव प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादानत्वं च सिध्यति। एवमेव हि लोके निमित्तोपादानयोरत्यन्तभेदो दृश्यते। मृत्सुवर्णादेरचेतनस्य घटकटकाद्यु-

* श्रुतप्रकाशिका *

मायिशब्दनिर्दिष्टस्य निमित्तकारणस्य मायां प्रति प्रेरकत्वं विवक्षितमिति भावः । श्रुतेरुक्तार्थपरत्वं स्मृतिसंवादेन दृढयति ( स्मृतिरपीति ) श्रुतिषु प्रधानप्रतिपादनाभावमभ्युपगम्य तस्योपादानत्वं समर्थयति ( एवमश्रुतेऽपीति ) (ब्रह्मण इति) सत्यज्ञानादिलक्षणत्वादपरिणामिन इति भावः । ( प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादानत्वं चेति ) समस्तप्रपञ्चनिर्माणानुगुणमचेतनस्वरूपं तस्य चाचेतनत्वादेव तदधिष्ठितत्वं च सिध्यतीत्यर्थः । कारणत्वश्रुतेरन्यथानुपपत्त्युपयोगिनीं व्याप्तिं शिक्षयति ( एवमेव हीति ) अत्यन्तभेदः— शरीरतया आत्मनिष्ठ-

ঙ भावप्रकाशिका ঙ

तृतीयया प्रथमान्तविशेषणत्वप्रतिपादनविरुद्धमिति द्रष्टव्यम् । ( मायां प्रतिप्रेरकत्वमिति ) ईशनं हि नियमनम्, तच्च प्रेरणम्. तत्र प्रेर्याकाङ्क्षायां सन्निधानान्मायाया एव प्रेर्यत्वं लभ्यत इति भावः । इदमुपलक्षणम् । 'मायां तु प्रकृतिं विद्या' दित्यत्र प्रकृतिशब्द उपादानपरः । जनिकर्तुः प्रकृतिः' प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यादिवत्, ततश्च मायाया उपादानत्वस्य मायाविनमीश्वरत्वस्य च प्रतिपादनान्निमित्तोपादानभेदः श्रुतिप्रतिपाद्य इति पूर्वपक्षिणो हृदयमित्यपि द्रष्टव्यम् । उपादानत्वं समर्थयतीति क्वचित्कोशे पाठो दृश्यते, तत्र परिबृढमाचष्टे, परिबृढयतीतिवत्समर्थशब्दात्तत्करोतीति णिचि परस्मैपदं निर्वोढव्यम्। समर्थयत इति पाठस्तु सुगम एव । एवमेव हीत्यादिभाष्यं श्रुत्यनभ्युपगमपक्षप्रतिपा-

पादानत्वं चेतनस्य कुलालसुवर्णकारादेर्निमित्तत्वं च नियतमुपलभ्यते। कार्य्यनिष्पत्तिश्च नियमेनानेककारकसव्यपेक्षा दृष्टा। एवं निमित्तोपादानयोर्भेदनियमं कार्य्यनिष्पत्तेरनेककारकसव्यपेक्षत्वनियमञ्चातिक्रम्यैकमेव ब्रह्मोपादानं निमित्तञ्च प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि, अतो ब्रह्म निमित्तकारणमेव, नोपादानम्। उपादानं तु तदधिष्ठितं प्रधानमेवेति ॥

---

* श्रुतप्रकाशिका *

त्वमप्यसहमानो भेदः। यद्वा तर्कमपि पृथक् साधनत्वेनाह— एव मेव हीति। पूर्वोक्तश्रुत्यर्थापत्त्युपपादकत्वे हिशब्दः स्वरसः। ननु यत्र निमित्तोपादानयोरुभयोरप्यपेक्षा तत्र तयोर्भवतु भेदः, यथा वृश्चिको वृश्चिकोत्पादने गोमयानपेक्षः, यथा च स्वर्गे साध्ये ज्योतिष्टोमो दर्शपूर्णमासनिरपेक्षः, एवं निमित्तमात्रेण कार्यं सिध्यतीति चेत् किं प्रधानकारणत्वाश्रयणेनेत्यत्राह ( कार्य्यनिष्पत्तिश्चेति ) एवमेव हीत्यादिभाष्यं यदा पृथक्साधनत्वेन तर्कप्रतिपादकं तदानीमचेतनस्येत्यादिपदैर्हेतवोऽभिप्रेताः स्युः। ईश्वरो न द्रव्यं प्रत्युपादानम्, चेतनत्वात् जीववत्। विमतमुपादानं स्वकार्य्यनिमित्ताद्भिन्नम्, उपादानत्वात् मृत्पिण्डवत्। विमतं कार्य्यमनेककारकसापेक्षम्, कार्य्यत्वात् पटवदिति प्रयोगः। "एकमेवाद्वितीयम्' 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" इत्यादिश्रुतिबलान्निमित्तोपादानैक्यमभ्युपगन्तव्यमित्यत्राह ( एवं निमित्तोपादानयोरिति ) एवमिति पूर्वोक्तश्रुतिश्रुत्यर्थापत्त्यानुगुण्येन। तर्कसहचरितश्रुतिश्रुत्यर्थापत्तीनां प्रबलत्वात्केवलश्रुतिमात्रं प्रतीयमानमपि स्वार्थं यूपादित्यैक्यमिव न प्रतिपादयितुं शक्नोतीत्यर्थः। ( एकमेव ब्रह्मोपादानं निमित्तं चेति ) परिणामित्वापरिणामित्वयोश्चेतनत्वाचेतनत्वयोः प्रेर्य्यत्वप्रेरकत्वयोश्च एकस्मिन् व्याहतत्वाचायोग्यं निमित्तोपादानैक्यं

छ भावप्रकाशिका छ

दक वाक्यव्यवहितमपि हिशब्दस्वारस्यानुरोधेन व्यवहितश्रुत्यनुग्राहकपरतया व्याचष्टे ( कारणत्वश्रुतेरिति ) ॥ ननु परिणामादिति सूत्रप्रयोजनस्य "न तु

एवं प्राप्तेऽभिधीयते– प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति । प्रकृतिश्च– उपादानञ्च । न निमित्तकारणमात्रं ब्रह्म, उपादानकारणं च ब्रह्मैवेत्यर्थः । कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात् । एवमेव हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते । प्रतिज्ञा तावत् "स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्येकविज्ञानेन सर्वविज्ञानविषया । दृष्टान्तश्च "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' 'यथा सोम्यैकेन लोहमणिना' 'यथा सौम्यैकेन नखनिकृन्तनेन" इति कारणविज्ञानात् कार्य्यविज्ञानविषयः । यदि निमित्तकारणमेव जगतो ब्रह्म तदा तद्विज्ञानान्न समस्तं जगद्विज्ञातं स्यात् । न हि कुलालादिविज्ञानेन घटादिर्विज्ञायते ; अतः प्रतिज्ञादृष्टान्तयोर्बाध एव । ब्रह्मण एवोपादानत्वे उपादानभूत-

---

* श्रुतप्रकाशिका *

न वेदान्ताः प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः । नोपादानम्– नोपादानमपीत्यर्थः । नहि निमित्तं वोपादानं वेति विशये उपादानत्वं निषिध्यते, किन्तूभयात्मकत्वं हि प्रतिषेध्यम् ॥ ( एवं प्राप्त इति ) स्वभावमूलप्रकृतिव्यावृत्त्यर्थं प्रकृतिशब्दं व्याचष्टे ( उपादानं चेति ) सूत्रस्थचशब्दं विवृण्वन् वाक्यार्थं योजयति ( न निमित्तेति ) का प्रतिज्ञा ? को दृष्टान्तः ? तयोरनुपरोधः कथमित्यत्राह ( एवमेव हीति ) बहुदृष्टान्तोपादानं तात्पर्यज्ञापनार्थम् । अनुपरोधं विवृणोति ( यदीति ) उक्तमुपपादयति ( न हीति ) एवं विपर्यये अनुपपत्तिरुक्ता । अथोक्तार्थोपपत्तिमाह ( ब्रह्मण एवेति ) एवं सौत्रं हेतुवाचिपदं व्याख्यातम्, वैशेषिकमतेन बुद्धिशब्दान्तरादिभिः कारणात्कार्य्यस्य द्रव्यान्तर-

मृत्पिण्डलोहमणिनखनिकृन्तनविज्ञानेन घटमणि-ककटकमुकुटवासीपरश्वधादितत्कार्य्यविज्ञानवन्निखिल-जगदुपादानभूते ब्रह्मणि विज्ञाते तत्कार्य्यं निखिलं जगद्विज्ञातं स्यात् । कारणमेवावस्थान्तरापन्नं कार्य्यम्, न द्रव्यान्तरमिति कार्य्यकारणरूपेणावस्थितमृत्तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनात् ब्रह्मैव जगदुपादानं चेति निश्चीयते । यत्तु निमित्तोपादानयोर्भेदः श्रुत्यैव प्रतीयत इति. तदसत्; निमित्तोपादानयोरैक्यप्रतीतेः "उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" इति । आदिश्यते प्रशिष्यतेऽनेनेत्या-

* श्रुतप्रकाशिका *

त्वेन प्रतिज्ञादृष्टान्तानुपपत्तिमाशङ्क्य तां परिहरन् सहेतुकं वाक्यार्थमाह ( कारणमेवेति ) एवं 'वाचारम्भण'मित्यादिवाक्यार्थ उक्तः, तत्र हि कार्य्य-कारणैक्यं प्रतिपाद्यते । नन्वव्यक्तशब्दवाच्यावस्थायामेव ब्रह्मण उपादानत्वे सर्वोपादानत्वाभावात्प्रतिज्ञोपरोधः, घटाद्यवस्थास्वपि ब्रह्मण उपादानत्वे मृद उपादानत्वाभावात् दृष्टान्तविरोध इति । तत्र न प्रथमं शिरः, अनभ्युपगमहतत्वात्, द्वितीये मृदाद्यवस्थद्रव्यशरीरकस्यैव ब्रह्मण उपादानत्वादविरोधः, विशेषणभूत-मृद्द्रव्यमात्रस्य कार्य्यकारणभावो लोकप्रसिद्धत्वाद्दृष्टान्तीकृतः, तत्तदवस्थद्रव्य-शरीरकस्यैव ब्रह्मणः कार्यकारणभावस्तु लोकप्रसिद्धत्वाभावाद्दार्ष्टान्तिक इति प्रति-ज्ञादृष्टान्तानुपरोधः । ब्रह्मण उपादानत्वे निमित्तान्तरं स्यादिति शङ्कां परिहरिष्यन् परोक्तां श्रुत्यैव निमित्तोपादानभेदसिद्धिमनुवदति ( यत्त्विति ) तत्— निमित्तो-पादानभेदप्रतिपादनमसदित्यर्थः । निमित्तोपादानैक्ये श्रुतिमाह ( उत तमा-देशमिति ) प्रत्ययार्थः कर्म, प्रकृत्यर्थ उपदेशः, उपदेश्यमित्यर्थः । इत्यादेशशब्दः परैर्व्याख्यातः, तद्व्यावृत्त्यर्थं व्याचष्टे ( आदिश्यत इत्यादिना ) प्रशिष्यत इति प्रकृत्यर्थव्याख्यनम् । अनेनेति प्रत्ययार्थव्याख्यानम् "अकर्त्तरि च कारके संज्ञायाम्"

* श्रुतप्रकाशिका *

नाधिकरण्येनैक्योपदेशाः सर्वेऽप्यमुख्याः स्युरिति प्रथमसूत्रे सम्यगुपपादितम् । सन्मात्रं ब्रह्म किं स्वांशगतं नरकादिदुःखं स्वगतत्वेन जानाति, न वा ? न चेदज्ञत्वमेव। स्वगतत्वेन जानाति चेत् दुःखित्वं स्यात् । जीवांशस्य भिन्नत्वाददोष इति चेन्न, भेदे सत्यपि अभेदाभिमानस्यापरोक्षस्य विद्यमानतया दुःखित्वमेव स्यात्, पाणिपादादीनां पुरुषांशतया भेदे सत्यप्यभिन्नत्वप्रतिपत्त्या हि पन्नगदष्टपादस्य पुरुषस्य अङ्गान्तरेषु प्रदाहो भवति, पाणौ सञ्जातव्रणस्य करणान्तरपाटवं च शिथिलीभवति, हृदि निहितहरिचन्दनबिन्दोः सर्वाङ्गाप्यायनं भवति; छिन्नायामङ्गुलौ चन्दनलिप्तायां ज्वलनज्वलितायां च सुखदुःखे पुरुषस्य न भवतः, स्वगत्वेन ज्ञानाभावात्; अतः स्वगतत्वेन ज्ञानवत्त्वे ब्रह्मणो दुःखित्वं स्यात्, ततश्च बहु स्यामिति दुःखाकरबहुभवनसङ्कल्पः सर्वज्ञस्य न स्यात् । किञ्च "तदरूपमनामयम्" इत्यादयो ऽपुरुषार्थनिषेधश्रुतयो निर्विषयाः । किञ्च निर्विकारत्वश्रुतयश्च निष्फलाः । ननु नियन्त्रंशविषया निर्विकारत्वश्रुतयः, ब्रह्मविषया विकारित्वश्रुतय इति सविषयत्वम् । नैतदुपपद्यते— "यत्तच्छान्तमजरममृतम्' 'एतदमृतमेतदभयमेतद्ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यतो वा इमानि भूतानि जायन्ते' 'तद्ब्रह्म' सर्वं खल्विदं ब्रह्म तज्जला'निति ब्रह्मण एव विकारतदभावश्रवणात् 'नित्यो नित्यानां' 'ज्ञाज्ञौ द्वौ' 'स वा एष महानज आत्माऽजरोऽमरः' 'स वा एष महानज आत्मा अन्नादो वसुदानः 'स त आत्माऽन्तर्याम्यमृतः' 'स कारणं करणाधिपाधिपः' 'यः सर्वज्ञः सर्ववित्' 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' 'धातुः प्रसादान्महिमानमीशम्' 'सप्त प्राणाः प्रभवन्ति तस्मात्' 'सहस्रशीर्षा पुरुषः 'तस्माद्विराडजायत विराजो अधिपुरुषः" इति ईश्वरस्यैव विकारतदभावश्रवणाच्च । तथा स्मृतिष्वपि "तद्ब्रह्म परमं नित्यमजमक्षरमव्ययम्। एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ कारणं कालगगने यथा सन्निधिमात्रतः। अविकारतया ब्रह्म तथा सृष्टेर्महीपते" इति, 'सकाशादात्मनस्तद्वदात्मानः

* भावप्रकाशिका *

चिदचिद्विशिष्ट ईश्वरो हि ब्रह्म, नतु विशेष्यमात्रम्, ततश्च विशिष्टान्तर्गतत्वं त्रयाणामपि साधारणमित्येतदभिप्रायेण ब्रह्मात्मना एकत्वं वर्णनीयमित्युक्तमिति द्रष्टव्यम् । (छिन्नायामङ्गुलाविति) छेदेन स्वदेहात्पृथक्कृतत्वादित्यर्थः ।

* श्रुतप्रकाशिका *

प्रभवन्ति हि' इति ब्रह्मण एव विकारित्वाविकारित्वस्मरणात् 'सन्निधानाद्यथाकाशकालाद्याः कारणं तरोः । तथैवापरिणामेन विश्वस्य भगवान् हरिः'' 'कटकमुकुटकर्णिकादिभेदैः कनकमनेकमपीष्यते यथैकम् । सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्य्यते तथैकः'' इति ईश्वरेऽपि विकारतदभावस्मरणाच्च । विकारवाक्येषु ईश्वरवाचिशब्दा ब्रह्मपराः, अविकारित्ववाक्येषु ब्रह्मवाचिशब्दाः ईश्वरविषया इति चेन्न; सार्वज्ञ्यादिगुणविशिष्टेश्वरवाचिनां द्रव्यमात्रवाचित्वस्यामुख्यत्वात्, पत्रमात्रे वृक्षशब्दवत् ब्रह्मैकदेशे ब्रह्मवाचिशब्दानाममुख्यत्वाच्च ईश्वरातिरिक्तस्य कारणस्याप्रामाणिकत्वस्य वक्ष्यमाणत्वाच्च, अतो निमित्तोपादानयोर्मृत्कुलालयोरिवैक्यानुपपत्तेरपुरुषार्थान्वयप्रसङ्गात् विकारविधिनिषेधविरोधानुपपत्तेश्च स्वाभाविकभेदाभेदपक्षे उपादानत्वमनुपपन्नम् । ननु कथं तर्हि भवत्पक्षे सविकारत्वं निर्विकारत्वं च ईश्वरस्योपपद्यत इति चेत्. शरीरभूतप्रकृतिद्वारको विकारान्वयः, निर्विकारत्वं चाव्यवधानेन घटत इत्यविरोधः । ननु तर्ह्युपादानत्वमसुख्यं स्यात्, देवादिनामरूपाभिमानानुगुणज्ञानप्रसरस्य महदाद्यवस्थायाश्चेश्वरगतत्वाभावात्, भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम्, अवस्थाविशेषशब्दः स्थूलावस्थापरः, तेनाप्रलीनजगतः प्रलयावस्थामपेक्ष्य उपादानत्वव्युदासः । उच्यते, चिदचिच्छरीरकं ब्रह्म महदादिकार्य्यं प्रति मुख्योपादानम्, उपादानत्वलक्षणयोगित्वात् मुकुटं प्रति कनकवत् । ननु असिद्धो हेतुः महदाद्यवस्थानां ब्रह्मगतत्वाभावात्. न, ब्रह्मणः चिदचिच्छरीरकतया प्रकृतेर्ब्रह्मस्वरूपान्तर्गतत्वात्प्रकृत्यवस्थानां ब्रह्मावस्थात्वात्, न हि विशेष्यमात्रं कस्यचित्स्वरूपम्, विशिष्टस्य वस्तुनो विशिष्टमेव हि स्वरूपं, न हि घटस्य मृण्मात्रं स्वरूपम्, किन्तु घटत्वविशिष्टम् । ननु यदि विशेषणमपि स्वरूपान्तर्भूतं तर्हि दण्डादयः संयोगादयश्च स्वरूपं स्युः. न, यावद्विशेष्यभाविनामपृथक्सिद्धप्रकाराणामेव स्वरूपान्तर्भावात् । किञ्च घटादिवस्तुन उदकाहरणादितत्तदसाधारणकार्य्ययोग्यमेव स्वरूपं न मृण्मात्रम्, पिण्डेष्टकादीनामपि घटस्वरूपत्वप्रसङ्गात् । घटस्योदकाहरणं प्रति योग्यता नाम अच्छिद्रघटत्वमेव । यस्य वस्तुनो यत्कार्य्यं यदा-

❀ भावप्रकाशिका ❀

( कस्यचित्स्वरूपमिति ) विशिष्टस्येत्यर्थः । ( यावद्विशेष्यभाविनामिति ) इदमुपलक्षणम् । दण्डविशिष्टस्वरूपे दण्डस्यान्तर्भावेपि न दोष इत्यपि

* श्रुतप्रकाशिका *

कारान्वयव्यतिरेकानुविधायि स आकारस्तस्य वस्तुनस्तत्कार्यं प्रति योग्यता, यथा अग्नेरुष्णत्वं स्फोटजनने, यथा च परशोर्नैशित्यं छेदने, यथा च मृदो मृत्त्वं घटादिरूपपरिणामे श्लक्ष्णार्द्रभावश्च ; एवं प्रकृतिपुरुषकालाश्च जगद्रूपेण बहुभवने परमात्मनो योग्यतास्थानीयाः अयुतसिद्धप्रकाराः, अत एव हि क्वचिच्छक्तिशब्देन जगदभिधीयते, कार्य्योपयोग्यपृथक्सिद्धविशेषणं हि शक्तिः, सा च योग्यतायोग्यवस्तुनः स्वरूपान्तर्गता, अतो महदाद्यव्यवस्थाश्चिदचिद्विशिष्टब्रह्मस्वरूपगता इति न हेत्वसिद्धिः । यतो विशिष्टं ब्रह्मस्वरूपम्, अत एव हि "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः" इत्यरनाभिदृष्टान्त उपन्यस्यते । न हि नाभिमात्रं रथचक्रम्, किन्तु नाभिवदरनेमी अपि हि स्वरूपान्तर्गते. तथा 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहे-

* भावप्रकाशिका *

द्रष्टव्यम् । ( अग्नेरुष्णत्वं स्फोटजनन इति ) ननूष्णस्पर्शस्य कथमग्निस्वरूपत्वम् ? गुणगुणिनोर्भेदात्. स्वं हि रूपं स्वरूपमित्युच्यते, न तु स्वापृथक्सिद्धं सर्वं स्वरूपम्. यदि कारणतावच्छेदककोट्यनुप्रविष्टं सर्वं स्वरूपमित्युच्यते तर्ह्यालोकगतोद्भूतरूपत्वस्य चाक्षुषप्रत्यक्षे उद्भूतरूपगतकारणतायामवच्छेदकत्वादालोकस्याप्युद्भूतरूपस्वरूपत्वप्रसङ्गः, तथार्द्रेन्धनप्रभववह्नित्वस्य धूमजनकतावच्छेदकत्वादार्द्रेन्धनादेरपि वह्निस्वरूपानुप्रवेशप्रसङ्गात्, अतस्तेषु स्वरूपत्ववादः स्वीयरूपत्वाभिप्रायः, न तु स्वाभिन्नरूपत्वाभिप्रायः, एवञ्च प्रकृत्यादीनामपि परमात्मापृथक्सिद्धविशेषणतया तन्वंशशक्तिरूपशब्दाद्यभिधेयत्वमस्तु नाम, नैतावता तद्गतावस्थाया एतन्निष्ठत्वमस्ति, तथा हि सति तद्गतशक्तित्वशरीरत्वांशत्वजडत्वादीनामपि परमात्मगतत्वप्रसङ्गात्, ततश्च प्रकृतेर्महदादिरूपेण परिणममानत्वेन प्रकृतेरेवोपादानत्वं स्यात्, न तु ब्रह्मण इत्याशङ्कामुपसंहारव्याजेन निराकरोति ( महदाद्यवस्थाचिदचिद्विशिष्टब्रह्मस्वरूपगता इति ) ( न हेत्वसिद्धिरिति ) अयं भावः, चिदचिद्विशिष्टमेव ब्रह्म, न विशेष्यमात्रम्. चिदचिद्विशिष्टे च महदाद्यवस्थायोगित्वमस्त्येवेति । ( नहि नाभिमात्रं रथचक्रमिति ) यथा परस्परमाधाराधेयभावमापन्ना नाभिरथनेमयः रथचक्रशब्दवाच्य-

* श्रुतप्रकाशिका *

न्मुञ्जादिवेषीकाम्'' इति मुञ्जेषीकादृष्टान्तश्च श्रुतः, न हीषीकामात्रं मुञ्जः, किन्तु बाह्यदलविशिष्टेषीका हि मुञ्जस्वरूपम्, विशेष्यांशस्य दृष्टान्त इषीका, तथा ''यदा हि कदली नान्या त्वक्पत्रान्नाथ जायते । एवं विश्वस्य नान्यस्त्वं त्वं चापीश्वर ! दृश्यसे'' इति त्वक्पत्रकदलीदृष्टान्तश्च चिदचिद्विशिष्टं ब्रह्मस्वरूपमवगमयति । न हि बाह्यत्वक्पत्रेण विना काण्डमात्रं कदली, अपि तु त्वक्पत्रविशिष्टकाण्डस्वरूपा ; एवं विश्वविशिष्टं यत्स्वरूपं तत्र विशेष्यभूतस्त्वं विशेषणांशविलक्षणश्च दृश्यस इत्यर्थः । इयान् भेदः. नाभीषीकाकाण्डानामरनेमिबाह्यत्वक्पत्राणां चाचेतनतया मिथो नियन्तृनियाम्यभावाभावान्न शरीरशरीरिभावः, अत एव नेम्यादिशब्दाश्च न विशेष्यवाचकाः । इह तु नियन्तृनियाम्यभावादिना शरीरात्मभावसम्भवाच्छरीरवाचिशब्दाः ब्रह्मपर्यन्ता इति, अतो महदाद्यवस्थानां विशिष्टब्रह्मस्वरूपगतत्वादुपादानत्वं मुख्यम् । किञ्च मामूत्प्रकृतिपुरुषयोः स्वरूपान्तर्भावः तथापि मुख्यत्वं युक्तम्, न हि शरीरद्वारकं ब्रह्मणो महदाद्युपादानत्वममुख्यम्, मुख्यनिर्वाहकव्यवहितत्वात्, ज्वालाव्यवहितस्य काष्ठस्य करणत्ववत् । न चाव्यवहितत्वमुपाधिः, दर्शितसपक्षे वृत्त्यभावेन साध्यसमव्याप्त्यभावात् । ननु मृद्द्रव्यव्यवहितकुलालस्यापि घटं प्रत्युपादानत्वं स्यात्. न, निर्वाहकव्यवहितत्वाभावात्. तदभावश्च स्वनिष्ठस्य मृत्पिण्डस्य घटं प्रत्युपादानत्वनिर्वाहकत्वायोगात् ; करणकारकस्य तु स्वनिष्ठत्वात्तन्निष्ठज्वालायास्तन्निर्वाहकत्वं युक्तम्, आश्रयिनिष्ठामवस्थां प्रत्याश्रयभावस्य स्वनिष्ठस्य निर्वाहकत्वं हि न घटते । नन्ववस्थातद्वतोर्व्यवहितत्वादाश्रयाश्रयिभावाभावादुपादानत्वममुख्यमिति । किमुपादान एवायं

ဖ भावप्रकाशिका ဖ

स्वरूपान्तर्गताः, यथा वा बाह्यदलविशिष्टेषीकास्वरूपं मुञ्जादिशब्दवाच्यम्, यथा वा त्वक्पत्रादियुक्तकाण्डस्वरूपमेव कलीशब्दवाच्यम् ; एवमाधाराधेयभावापन्नभोक्तृभोग्यनियन्तृस्वरूपं ब्रह्मशब्दवाच्यमित्यर्थः । ननु काष्ठगतज्वालायाः काष्ठगतकरणत्वोपपादकत्वे प्रकृतिगतावस्थायाः प्रकृतिगतोपादानत्वनिर्वाहकत्वमेव स्यात्, नतु ब्रह्मोपादानत्वनिर्वाहकत्वमित्यत आह ( करणकारकस्य तु स्वनिष्ठत्वादिति ) प्रकृतेस्तु स्वनिष्ठत्वाभावान्नोपादनत्वमिति भावः । ननु मृत्पिण्डाश्रयस्य चक्रस्य मृत्पिण्डगतघटत्वाद्याश्रयत्वं किं न स्यादित्याशङ्क्याह ( आश्रयिनिष्ठा-

* श्रुतप्रकाशिका *

निर्बन्धः ? उत कर्त्रादिकारकान्तरेष्वपि ?। न प्रथमः, दर्शितसपक्षानादरेण पक्षपातस्य निर्निबन्धनत्वेनाकिञ्चित्करत्वात्। द्वितीये तु कुलालस्य घटं प्रति कर्तृत्वं न सिध्येत्, तद्व्यापकहेतुत्वासिद्धेः, वृक्षत्वनिवृत्तौ शिंशुपात्वनिवृत्तिवत्, हेतुत्वासिद्धिश्च हेतुहेतुमतोः पुरुषघटयोः पाणिव्यापारदण्डचक्रादिहेत्वन्तरव्यवहितत्वात्। "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः" इत्यत्र रवेः प्रकाशकत्वं न मुख्यं सिध्येत्। किरणव्यवहितत्वात्। जगतः प्रकाशमानत्वे रविः किरणव्यवहितो हेतुः, तथा जलं वहतीत्यत्र जलस्य कर्मत्वं न सिध्येत्, घटव्यवहितत्वात्। पाके काष्ठस्य करणत्वं न सिध्येत् ज्वालाव्यवहितत्वात् 'गवा यजेत अरुणया क्रीणाति' इति जातिगुणयोर्यागक्रयसाधनत्वं द्रव्यद्वारकत्वादमुख्यं स्यात्. यज्ञाय पशव इत्यत्र पशूनां यज्ञतादर्थ्यं न स्यात्, तेषां हविरर्थतया तद्व्यवहितत्वात् "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इत्यत्रादित्यादीनां वृष्ट्याद्युपादानत्वं च न सिध्ये, किरणमेघादिव्यवहितत्वात्. 'इक्ष्वाकूणामियं भूमिः' इत्यादौ स्वस्वातन्त्र्यलक्षणसम्बन्धोऽपि न सिध्येत्। करदानां राज्ञामवान्तरस्वातन्त्र्यव्यवहितत्वात्। पर्यङ्के शेत इति पर्यङ्कस्याधिकरणत्वं न स्यात्, आस्तरणव्यवहितत्वात्। सर्वेषां व्यवहारो न मुख्य इति चेन्न; मुख्यत्वे सम्भवत्यनेकव्यवहारामुख्यताश्रयणानुपपत्तेः, उक्तं हि निर्वाहकव्यवधानं न मुख्यत्वविरोधीति। किञ्च व्यवहितस्य कार्यं प्रति हेतुत्वे को विरोधः ? लक्षणाभाव इति चेन्न; नियतपूर्वभावित्वस्य लक्षणस्य सम्भवात्। नियतानन्तरपूर्वभावित्वं लक्षणमिति चेन्न, तद्धि सामग्र्या एव, न हेतुमात्रस्य, अन्यथा कृष्यादिव्यवहितवृष्टिनदीपूरादेः सुभिक्षताहेतुत्वं न स्यात्; तद्धेतुत्वं हि व्यवह्रियते। काष्ठादीनां करणत्वादिकं च न स्यात्, अपूर्वस्य कृतिसाध्यत्वं च न स्यात्, भावार्थव्यवहितत्वात्। ननु व्यवहितस्यापि हेतुत्वेऽतिप्रसङ्गः स्यादिति चेत् तर्ह्यव्यवहितस्यापि हेतुत्वे रासभादावतिप्रसङ्गः स्यात्. न, अन्वयव्यतिरेकाभ्यामतिप्रसङ्गस्य निवार्यमाणत्वादिति चेत्तुल्यम्, अव्याप्तिस्तु भवतोऽधिका। सजातीयव्यवहितस्य न कारणत्वमिति चेत्, किं येन केनाप्याकारेण सजातीयत्वम् ? उत हेतुत्वाकारेण ? उत

* भावप्रकाशिका *

मिति ) स्वतन्त्रं मृत्पिण्डादिवस्तु स्वाधारे चक्रे स्वगतावस्थायोगितां न निर्वाह-

* श्रुतप्रकाशिका *

हेतुत्वावान्तराकारेण ? । न प्रथमः, व्यवहितपत्रवेधे पुरुषस्याहेतुत्वप्रसङ्गात् । न द्वितीयः, कुलालस्य घटं प्रत्यहेतुत्वप्रसङ्गात् । न तृतीयः, शरव्यवहितस्य धनुषो जयसाधनत्वाभावप्रसङ्गात् । व्यवहितहेतुरन्यथासिद्धत्वान्न व्यवहितकार्य्यं प्रति हेतुरिति चेत्. व्यवहितस्यान्यथासिद्धिः किं तस्मिन् सत्यपि कार्य्यानुदयात् ? उतासत्यपि कार्य्योदयात् ? उत कार्य्यान्तरनिष्पत्त्यर्थत्वात् ? उत व्यवहितकार्य्यं प्रति किञ्चित्कारायोगात् ? उत व्यवहितत्वादेव ? । न प्रथमः, अव्यवहिते बीजादौ हेतौ सत्यपि कदाचिदङ्कुराद्यनुदयेन बीजादेरहेतुत्वप्रसङ्गात्, सामग्रीवैकल्यानुदयः, नाहेतुत्वादिति चेदिहापि स्वकार्य्यस्य सामग्रीवैकल्याद-नुदयः, न त्वहेतुत्वादिति तुल्यम् । न द्वितीयः, वृष्टिनदीपूराद्यभावे सस्यानुद-यात् । न तृतीयः, गमनादिकार्य्यान्तरहेतूनां कुलालादिशरीराणां घटादिकार्य्या-न्तरोत्पत्तिहेतुत्वात् । न चतुर्थः, कर्त्तुः कार्य्यं प्रति करणप्रेरणरूपकिञ्चित्कार-वत् काष्ठस्यौदनं प्रति ज्वालोत्पादनरूपकिञ्चित्कारवत्तन्निष्पादककार्य्यनिष्पादन-रूपकिञ्चित्कारसद्भावात् . व्यवहितव्यापारस्यापि किञ्चित्काररूपत्वेऽतिप्रसङ्गः परिहृतः । पञ्चमेपि किं व्यवहितत्वम् अव्यवहितकारणत्वं वारयति ? उत व्यव-हितकारणत्वं ?। प्रथममिष्टम् । द्वितीये तु कथमिदमहेतुत्वसाधकम् ? व्यवहिताना-मशनिपातादीनां सस्याद्यहेतुत्वदर्शनादिति चेत्. अव्यवहितरासभादेरप्यहेतु-त्वात् अग्न्यादेरपि धूमादिहेतुत्वं न स्यात् . सन्निकर्षमनादृत्यान्वयव्यतिरेकाभ्यां हेतुत्वनिश्चये व्यवधानमप्यनादृत्यान्वयव्यतिरेकाभ्यां हेतुत्वनिश्चय इहा-प्युपपन्नः, अन्यथा कुलालादेर्घटादिहेतुत्वाभावप्रसङ्गात्; एवं हेतु-मात्रस्य सद्वारकत्वोपपत्तेस्तदवान्तरविशेषस्य निमित्तत्ववदुपादानत्वमपि सद्वा-

* भावप्रकाशिका *

यतीत्यर्थः । (व्यवहितपत्रवेध इति) पत्रवेधान्तरेण व्यवहितपत्रवेध इत्यर्थः । (कुलालस्येति) हेतुत्वेन सजातीयव्यापारव्यवहितत्वादितिभावः । (शराव्यव-हितस्येति) धनुश्शरयोर्द्वयोरपि हेत्ववान्तररूपप्रहरणत्वाक्रान्तत्वादिति भावः । (निष्पादककार्यनिष्पादनरूपकिञ्चित्कारसद्भावादिति) तन्निष्पादकव्यापा-रनिष्पादनरूपकिञ्चित्कारसद्भावादित्यर्थः । (अतिप्रसङ्गः परिहृत इति) अन्व-यव्यतिरेकाभ्यामतिप्रसङ्गस्य निवार्यत्वादित्यनेनेत्यर्थः । (अग्न्यादेरिति) अन्वय-

* श्रुतप्रकाशिका *

रकं मुख्यम् । ननूपादानस्य कार्य्यावस्थाश्रयत्वं वाच्यम् ; कथं व्यवहितस्यावस्थाविशेषाश्रयत्वम् ? उच्यते ; कुम्भोदरसम्भूतमम्भः प्रति पुरुषस्येव परमात्मनो महदाद्यवस्थाश्रयत्वमुपपन्नमिति। कुम्भव्यवहितस्याम्भसः पुरुषानाधेयस्यापि स्वाधारधारकायत्तस्थितित्वं हि दृश्यते । न च वाच्यं परमाधारः स्वाधेयधारणोपक्षीणः, न तु व्यवहितधारणपर इति । पुरुषस्य सलिलधारणफलान्वयदर्शनात्. न हि निरुदकस्येवोदकपूर्णस्य घटस्य धारणे गुरुत्वातिशयनिबन्धनश्रमातिशयो न भवति। यदि घट एव पुरुषेण धार्य्यते न जलं तर्हि निरम्भःकुम्भधारण इव श्रमातिशयो न स्यात्, कुम्भमात्रधारणस्याविशेषात् । जलस्य घटसंसर्गमात्राच्छ्रमातिशयः, न धार्य्यत्वादिति चेन्न , अन्येन धृतस्य सोदकघटस्य पाणिस्पर्शमात्रेण श्रमप्रसङ्गात् । विमतं देवदत्तधार्य्यम् , तदुपरिभागस्थत्वे सति तच्छ्रमहेतुत्वात्तुल्यगौरवसम्प्रतिपन्नपदार्थवत्। उदकविशिष्टघटो धार्य्य इति श्रमातिशयोपपत्तिर्व्यवहितधारणं च न स्यादिति चेत्तत्र विशेषणांशस्य धार्य्यत्वमस्ति वा , न वा ? न चेच्छ्रमातिशयो न स्यात् ; अस्ति चेत्तद्वदेव महदाद्यवस्थाविशिष्टमचिद्द्रव्यं परमात्मधार्य्यमिति विशेषणभूतमहदाद्यवस्थाविशेषस्यापि परमात्मायत्तस्थितित्वात्तस्य तदाश्रयत्वमुपपन्नम् । किञ्च अव्यवहितादपि व्यवहितस्यैवाश्रयत्वं मुख्यं दृश्यते , यथा आस्तरणांशुकादपि पर्यङ्कस्य , यथा दर्भेभ्यो भूतलस्य, अव्यवहितमपि ह्यंशुकं न पुरुषस्य धारकम्, असामर्थ्यात् । श्वभ्रमुखपिधायकं विस्तीर्णमंशुकं हि न पदन्यासं धारयितुं प्रभवति, कूपाच्छादका हि दर्भास्तत्र निहितपदं पुरुषं न धारयन्ति , तस्मादंशुकस्य दर्भाणां च धारणासामर्थ्यात्पर्यङ्कभूतलयोरेव हि धारणसामर्थ्यान्मुख्यमाश्रयत्वम्. पर्यङ्कभूतलस्थयोरास्तरणदर्भयोरपि धारणसामर्थ्यकल्पने गौरवं स्यात्, अतश्चास्तरणदर्भाणां संयोगमात्रेण व्यवधायकत्वम् ; एवं महदाद्यवस्थामपेक्ष्य प्रकृतेराश्रयत्वासम्भवेन परमात्मनस्सर्वशक्तेस्तदाश्रयत्वं मुख्यम्, व्यवधायकसद्भावस्तु व्यवहितयोर्नाश्रयाश्रयिभावविरोधी, विमतं व्यवधायकस्वसम्बन्धिनोर्व्यवहितयोर्नाश्रयाश्रयिभावविरोधि,

❀ भावप्रकाशिका ❀

हितस्यापीति शेषः । ( संयोगमात्रेण व्यवधायकत्वमिति) आस्तरणादिकं शयानस्य पर्यङ्कसंयोगं परं निरुणद्धि , नत्वाश्रयाश्रयिभावमपीति भावः ।

* श्रुतप्रकाशिका *

स्वधारणसमर्थवस्तुनिष्ठव्यवधायकत्वादास्तरणवद्दर्भवच्च; एवं महदाद्यवस्थां प्रति चिदचिच्छरीरकस्य परब्रह्मणः आश्रयत्वोपपत्तेः जगदुपादानत्वं मुख्यम् । ननु यद्येवं शरीरशरीरिभावमाश्रित्योपादानत्वमुच्यते, वैशेषिकादिपक्षात्को भवत्पक्षस्य भेदः ? नियाम्यविशेषो हि शरीरमभिमतम्, चिदचितोरीश्वरप्रेर्य्यत्वं हि तन्मतेप्यस्ति, अहो महत्तरोऽयं पर्यनुयोगः, वैशेषिकादयश्चेदप्रामाणिकमेव ब्रूयुः तदुक्तं चेदनादरणीयमिति न नः प्रतिज्ञा. असदुक्तार्थस्तदभ्युपगतश्चेत्प्रामाणिकोऽर्थोऽङ्गीकृतः स्यात्, का नः क्षतिः । किञ्च साम्यमपि दुरुपपादम्, कालदिगाकाशाद्यचेतनस्येश्वरधार्यत्वानभ्युपगमाच्छब्दादिगुणोत्पत्तावेवाकाशादीनां तद्भोक्तृपुरुषादृष्टप्रेरणमुखेनेश्वरापेक्षा, न त्वाकाशादिस्वरूपस्य । चेतनानामप्यदृष्टानुगुणदेहेन्द्रियसंयोजनमुखेन सुखदुःखज्ञानादिहेतुरीश्वर इत्येतावता तत्प्रेर्य्यत्वम्, न तु स्वरूपस्थितौ तदपेक्षा, मुक्त्यवस्थायां तु न कदाचिदपि तदपेक्षा, पश्चाद्दुःखाद्यसंयोगाय तदपेक्षेति चेन्न, पुण्यपापयोरात्यन्तिकविच्छेदादेव तत्सिद्धेः, प्रध्वंसस्यानन्ततया तन्नैरपेक्ष्याच्च । अदृष्टाभावेपि दुःखोत्पादनक्षम ईश्वरः, अतस्तदनुदयाय तदपेक्षेति चेन्न;

❀ भावप्रकाशिका ❀

( स्वधारणसमर्थवस्तुनिष्ठव्यवधायकत्वादिति ) नन्वेवं दर्भाणां स्वाश्रितदर्भत्वाद्यवस्थासु भूतलाश्रितत्वव्यवधायकत्वं न स्यात् , तथा यूकादीनां यूकत्वाद्यवस्थासु मनुष्याश्रितत्वव्यवधायकत्वं न स्यात् । स्वधारणसमर्थवस्तुनिष्ठव्यवधायकत्वादिति चेन्न , स्वधारणसमर्थेत्यस्य स्वाश्रितधारणसमर्थेत्यर्थः । भूतलमनुष्यादीनां दर्भत्वयूकत्वादिधारणसामर्थ्यं नास्ति , तेषां तदाश्रितत्वे प्रमाणाभावात् । नन्वेवं यत्र यदाश्रितत्वग्राहकप्रमाणमस्ति , तत्रान्तरालिकपदार्थानां तदव्यवधायकत्वम् , अत एव प्रासादे शेते पर्यङ्के शेते वेद्यां हवींष्यासादयति बर्हिषि हवींष्यासादयती'त्यादौ आन्तरालिकानां पर्यङ्कबर्हिरादीनामव्यवधायकत्वमिति पर्यवसन्नमिति चेत् , इष्टापत्तेः , व्यवहितस्याप्याश्रयताग्राहकप्रमाणसत्त्वे आश्रयत्वम्, प्रकृते च महदादिव्यवहितब्रह्मणोपि तत्तदवस्थं प्रत्याधारत्वग्राहकं प्रमाणमस्ति, सच्च त्यच्चाभवदित्यादि । अतोऽवस्थाश्रयत्वान्मुख्यमुपादानत्वमुपपन्नमिति भावः । ननु महदाद्यवस्थाश्रयत्वस्य परमात्मनि मुख्यत्वे तुल्यन्यायतया देवत्वाद्यवस्थाश्रयत्वस्यात्मन्येव मुख्यत्वात्तत्र कथं न देवो न नर इति

# एतेन सर्वे व्याख्याता व्याख्याताः ॥ २६ ॥

८ अधिकरणम्

एतेन–पादचतुष्टयोक्तन्यायकलापेन ।

---

* श्रुतप्रकाशिका *

अपार्थिवत्वेपि खे पुष्पं जनयितुमीश्वरः क्षम इति पुष्पानुदयाय खस्येश्वरापेक्षेति वचनतुल्यमिदम्, उभयोरप्ययोग्यत्वाविशेषात्, अतो धारणाद्यनुगुणमसङ्कुचितमीशनं तन्मते नास्तीति यावद्द्रव्यभावितया तन्नियाम्यत्वधार्य्यत्वाद्यभावात्परामिमतेन वाऽस्मदभिमतेन वा लक्षणेन कथञ्चिदपि चिदचितोः शरीरशरीरिभावानुपपत्तेर्जगदुपादानत्वं तन्मते दुरुपपादम्, अतो भाष्योक्तप्रकारमेव परमात्मनो जगदुपादानत्वमिति स्थितम् ॥ इति प्रकृत्यधिकरणम् ॥

॥ एतेन सर्वे व्याख्याता व्याख्याताः ॥ कृत्स्नाधिकरणन्यायातिदेशरूपत्वात्सङ्गतिः, प्रथमसूत्रस्य समन्वयसूत्रस्य च सिद्धपरास्सर्वे वेदान्ता विषयाः, वाक्यविशेषा इतरेष्वधिकरणेषु विषयाः, एष्वनुदाहृतवाक्यविशेषाः सर्वेऽप्यस्य पञ्चत्रिंशस्य विषयाः, पूर्वाधिकरणेष्विव विचारोऽर्थसिद्धः । अनुदाहृताः कारणवादिवाक्यविशेषाः किमुक्तलक्षणचिदचिद्विलक्षणब्रह्मपराः ? उत नेति विचारः । तदर्थं ते किमुक्तन्यायानामविषयाः ? उत विषयाः ? इति, विषयत्वं सम्भवति नेति । यदा न सम्भवति तदा तदविषयत्वादुक्तलक्षणब्रह्मपरत्वाभावः । यदा सम्भवति तदोक्तन्यायविषयत्वादुक्तलक्षणब्रह्मपरा इति फलफलिभावः । एतेनेतिपदस्य 'एतेन योगः प्रत्युक्तः' एतेन शिष्टापरिग्रहा' इति सूत्रस्थैतच्छब्दवदनन्तरपूर्वप्रकृतार्थविषयतया प्रकृत्यधिकरणन्यायमात्रपरामर्शित्वव्युदासाय व्याचष्टे (पादचतुष्टयोक्तेति) उपासनतत्फलादिप्रतिपादकवाक्यानां निरूपयिष्यमाणानां व्यव-

* भावप्रकाशिका *

निषेधः ? नचाद्वारकाश्रयत्वाभावान्निषेध उपपन्न इति वाच्यम्; संयोगेन भूतलाधारे घटे सम्बन्धान्तरेण घटाधारत्वं नेत्येतावता भूतलं न घटाधार इति वचनं समञ्जसं स्यात् । किञ्च तथा निषेधप्रतिपादकशास्त्रस्य भ्रमजनकतया अनुपादेयत्वमेव स्यादिति चेन्न; पूर्वापरवाक्यानुरोधेन वाक्यतात्पर्यस्य वर्णनीयतया देवत्वादिनिषेधकशास्त्राणां 'चत्वारः पञ्चदश रात्रा देवत्वं गच्छन्ति" इत्यादिशास्त्रविरोधेनाद्वारकनिषेधपरत्वस्यावश्याश्रयणीयत्वान्नानुपपत्तिरितिभावः ॥ ७ ॥

सर्ववेदान्तेषु जगत्कारणप्रतिपादनपराः सर्वे वाक्य-विशेषाश्चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मप्रतिपा-

* श्रुतप्रकाशिका *

च्छेदायाह ( जगत्कारणप्रतिपादनपरा इति ) इदंपदं हेतुगर्भम्, कारणविषयत्वमेव ह्यधिकाशङ्कायाः परिहारहेतुः, निरूपितवाक्यव्यवच्छेदाय वाक्यविशेषा इत्युक्तम् । पूर्वमनुदाहृता अनिश्चितार्था इत्यर्थः । यथैतेषु त्रय एव यज्वान इत्युक्तेऽन्येषाम् अयज्वत्वं व्याख्यातं भवति ; एवमुदाहृतवाक्यानां चिदचिद्विलक्षणब्रह्मपरत्वप्र-तिपादनेनान्येषामतत्परत्वेन व्याख्याततवशङ्कां व्यावर्तयितुमाह ( चेतनाचेतन-विलक्षणेति ) वैलक्षण्यहेतुभूतगुणप्रदर्शनार्थं तेषु प्रधानं गुणद्वयमाह— सर्वज्ञ-सर्वशक्तिशब्दाभ्याम् । सर्वज्ञत्वसर्वशक्तित्वे हि निमित्तोपादानतोपयोगिनी । का पुनरधिकाशङ्का ? उच्यते ; जगत्कारणत्ववाक्यविशेषेषु केचित्सर्वसाधारणशब्देन कारणनिर्देशपराः, यथा सदेव सोम्येत्यादयः सद्ब्रह्माक्षरशब्दैः । केचिच्चेतनमात्रा-साधारणशब्दान्विताः, यथा 'तावेतौ सत्त्वक्षेत्रज्ञा'विति पैङ्गिश्रुतिः क्षेत्रज्ञशब्देन । केचिदचिन्मात्रासाधारणशब्दान्विताः, यथा 'गौरनाद्यन्तवती' अजामेका'मित्यादि । केचिज्जीवेश्वरसाधारणशब्दान्विताः, यथा 'आत्मन आकाशः' इति ''पुरिशयं पुरुष' मिति च । केचिच्चिदचिद्विशेषासाधारणशब्दाः, यथा वैश्वानरशब्दवती श्रुतिः । केचि-च्चाचिद्विशेषासाधारणशब्दाः ,यथा 'आकाशादेव समुत्पद्यन्ते' इति । केचिच्चेतनवि-शेषासाधारणशब्दाः , यथेन्द्रशब्दवती प्रतर्दनोपासनश्रुतिः , केचित्तु परमपुरुषा-साधारणशब्दाः, यथान्तरादित्यविद्या श्रुतिः , यथा च पुरुषसूक्तम् ; एवं-विधेष्वेव वाक्येषु केचित्साक्षादेव कारणत्वप्रतिपादकाः , केचिच्च कारणत्वव्या-प्तवेदितव्यत्वनिरतिशयदीप्तियोगादिपरा इति विभागो यथासम्भवं द्रष्टव्यः । उक्तकोटिष्वनन्तर्भूतं कारणविषयं वाक्यं न क्वचित्सम्भवति; तत्र चिदचित्सा-धकैर्लिङ्गशब्दादिभिः पूर्वपक्षे प्राप्ते चिदचिद्व्यावर्तनक्षमैरीक्षणविशेषानन्दविशेष-सर्वप्रशासितृत्वसमस्तहेयप्रत्यनीकत्वसर्वचिदचिद्धारकत्वपतित्वान्तरात्मत्वमुक्तप्राप्य-

* भावप्रकाशिका *

( त्रय एव यज्वान इति ) एवकारः कोशेषु दृश्यते, तस्य नातीव प्रयोजनं पश्यामः । ( सद्ब्रह्माक्षरशब्दैरिति ) अन्विता इत्यादिशेषः पूरणीयः । ( द्वात्रिं-

* श्रुतप्रकाशिका *

त्वादिभिर्धर्मविशेषैस्तेषां वाक्यानां चिदचिद्विलक्षणजगदेककारणभूतदेवताविशेषप्रतिपादकत्वं समर्थितम् । उक्तकोट्यन्तर्भूतेष्वपि येष्वनुदाहृतवाक्यविशेषेषु जगत्कारणत्वमात्रं श्रुतम्, न त्वीक्षणविशेषादयश्चिदचिद्व्यावर्तकाः परमपुरुषासाधारणधर्माश्च श्रुताः, तेषु यथाप्रतिपन्नवस्त्वभ्युपगमे विरोधाभावान्न परमात्मपरत्वमित्यनुयायिन्यधिका शङ्का; अभ्युच्चयहेतवश्च यथासम्भवं तत्र तत्र द्रष्टव्याः। ईक्षणविशेषादिधर्मान्तराश्रवणेपि जगत्कारणत्वस्येक्षणविशेषादिवत् परमपुरुषासाधारण्यस्य द्वात्रिंशदधिकरणन्यायनिर्णीतत्वाज्जगत्कारणत्वमेव चिदचिद्विलक्षणसर्वविधकारणभूतपरब्रह्मशब्दवाच्यदेवताविशेषपरत्वसाधकमित्यधिकानुयायिपरिहारः। परिहारे चाभ्युच्चययुक्तयस्तत्र तत्र द्रष्टव्याः । ननु जगत्कारणत्वं परमात्मलिङ्गं स्यात्, कथं परमात्मनो देवताविशेषत्वसाधकम्? "जन्माद्यस्य यतः" इत्यादीनामधिकरणानां सर्वेषां देवताविशेषनिर्णयपर्यन्तत्वादिति ब्रूमः । तथा हि ब्रह्मशब्दस्य भगवच्छब्दतुल्यत्वं प्रथमसूत्रे प्रतिपादितम्; यत इति यच्छब्दस्यानुवादरूपतया प्रापकवाक्यानुरोधित्वात्, तेषु च सदादिशब्दानां देवताविशेषपर्यन्तत्वावगमात्, सूत्रे च यत इति जनिकर्तुः प्रकृतौ न पञ्चमी, किन्तु हेताविति समर्थनेन नारायणातिरिक्तनिमित्तविरोधित्वाच्च जन्माद्यधिकरणं देवताविशेषनिष्ठमेव लक्षणं स्थापयति । तृतीयन्तु सामान्येनोपयुक्तम् । चतुर्थं देवताविशेषनिष्ठं परमप्रयोजनत्वं दर्शयति "आनन्दो ब्रह्म 'रसो वै सः" इत्या-

* भावप्रकाशिका *

शदधिकरणन्यायनिर्णीतत्वादिति ) अतीतेषु चतुस्त्रिंशत्यधिकरणेषु सामान्यतो ब्रह्मविचारकर्तव्यतापरस्याद्याधिकरणस्यापशूद्राधिकरणस्य च देवताविशेषनिर्णयानुपयोगमभिप्रेत्य द्वात्रिंशत्त्वोक्तिः, अत एव जन्माद्यस्य यत इत्यादीनामधिकरणानामिति पृथक्कृत्य वक्ष्यति; अपशूद्राधिकरणं च नोदाहरिष्यति । नचैवं भगवच्छब्दतुल्यत्वं प्रथमसूत्रे उपपादितमिति वक्ष्यमाणग्रन्थविरोध इति वाच्यम्; तत्रापि भगवत्परत्वसम्भवाभिप्रायेण तथोक्तमिति द्रष्टव्यम् । यद्वा तृतीयं तु सामान्येनोपयुक्तमितिवक्ष्यमाणत्वात् तृतीयाधिकरणबहिर्भावेन द्वात्रिंशत्त्वं द्रष्टव्यम् । ( नारायणातिरिक्तेति ) पाशुपतमते 'उपादानं तु भगवान्निमित्तं तु महेश्वरः' इति नारायणातिरिक्तनिमित्तप्रतिपादनात्तन्मतनिरास इति भावः ।

* श्रुतप्रकाशिका *

दिवाक्यानामानन्दवल्लीस्थत्वात्तस्याश्चान्तरादित्यविद्यैकार्थ्यात् । ईक्षत्यधिकरणे तु गतिसामान्यस्योक्तत्वात्साधारणस्य सच्छब्दस्य देवताविशेषनिष्ठत्वमेव दर्शितम् । आनन्दवल्ल्यास्तु "स यश्चायं पुरुषे यश्चासावादित्ये" इत्यन्तरादित्यविद्यैकार्थ्यावगमात् 'अन्योऽन्तर आत्मानन्दमयः' इत्यन्तरात्मशब्देन सुबालोपनिषत्प्रत्यभिज्ञानादुपक्रमस्थस्यानन्तशब्दस्य रूढिपरित्यागे हेत्वभावाच्च सिद्धं भगवत्परत्वम् । अन्तरादित्यविद्यायान्तु पुण्डरीकाक्षत्वप्रतिपादनात्पुरुषशब्देन हिरण्मयत्वविशेषणेन च पुरुषसूक्तप्रत्यभिज्ञानात्सर्वपाप्मभ्य उदयेन 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति सुबालोपनिषदैकार्थ्यावगमाच्च सिद्धं परमपुरुषपरत्वम् । इतराधिकरणचतुष्टयस्य आकाशप्राणज्योतिरिन्द्रादिशब्दानामपि पुरुषसूक्तप्रतिपाद्यपरमपुरुषविषयतया समर्थनपरत्वं तत्र तत्र स्फुटम् । मनोमयत्वभारूपत्वप्रत्यभिज्ञापितैर्विद्युद्वर्णहिरण्मयपुरुषपरैः "हृदा मनीषा मनसाऽभिक्लृप्तः' 'विद्युतः पुरुषादधि' तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः" इत्यादिभिरैकार्थ्याच्छाण्डिल्यविद्या देवताविशेषविषया । कठवल्ली भगवत्परेति स्फुटम्, अध्वनःपारभूतवैष्णवपरमपदविषयत्वाच्चस्याः । अक्ष्यन्तरः परमपुरुषः, पुरुषशब्दवाच्यत्वादमृतत्वाच्च तस्मिन्नयमितिवाक्यप्रत्य-

❀ भावप्रकाशिका ❀

( हिरण्मयत्वविशेषणेन चेति ) आदित्यवर्णमित्यस्य प्रत्यभिज्ञानादिति भावः । ( परमपुरुषविषयतया समर्थनपरत्वमिति ) आकाशाधिकरणे आकाशस्य भूतेभ्यो ज्यायानिति ज्यायस्त्वकीर्तनेन 'ततो ज्याया'नित्युक्तपुरुषसूक्तोक्तार्थस्य प्राणाधिकरणे तस्योक्तार्थन्यायातिदेशरूपतया आकाशशब्दोक्तार्थपरत्वस्य ज्योतिरधिकरणे ज्योतिश्शब्दस्य 'पादोऽस्य विश्वाभूतानि' इत्यनेन पुरुषसूक्तार्थपरत्वस्य प्राणाधिकरणे इन्द्रप्राणयोः 'मामेव विजानीहि मामुपास्व' इति हिततमोपासनकर्मत्वप्रतीतेः 'तमेवं विद्वानमृत इह भवति नान्यः पन्थाः' इतिपुरुषसूक्तार्थपरत्वस्य च स्वरसतः प्रतीयमानत्वात्तत्परत्वसमर्थनं स्फुटमिति भावः । अत्रेन्द्रशब्दो मामितिशब्दपरो द्रष्टव्यः । इदञ्च पूर्वमेव प्रदर्शितम्, 'हृदा मनीषा मनसाभिक्लृप्तः' इति, अस्य वाक्यस्य तैत्तिरीयगतस्य पुरुषविषयत्वादिति भावः । अमृतत्वस्य परमपुरुषत्वसाधकतामुपपादयति ( तस्मिन्नयमितिवाक्यप्रत्यभिज्ञाना-

* श्रुतप्रकाशिका *

भिज्ञानात्। अन्तर्यामिविद्या नारायणविषयेति स्फुटम्; सुबालोपनिषदैकार्थ्यात्। मुण्डोपनिषदः कात्स्न्येंन परमपुरुषविषयत्वं ब्रह्माक्षरशब्दयोश्च पुरुषशब्दसमानार्थत्वं च दर्शितम्; तत्र श्रुतरूपविशेषान्वयादेव वैश्वानरविद्या तदेकविषया, 'पुरुषमपि चैनमधीयते' इति च स्फुटमुक्तम्। द्युभ्वाद्यधिकरणं तु मुण्डोपनिषद्विषयत्वादेव परमपुरुषपरम्। भूमविद्या तु निरतिशयसुखरूपवस्तुविषयत्वादानन्दवल्लीतुल्यविषया। अम्बरान्तधारकमक्षरं सूर्यचन्द्रादिप्रशासितृत्वादानन्दवल्लीप्रत्यभिज्ञानादक्षरशब्दवाच्यतया मुण्डकोपनिषत्प्रत्यभिज्ञानाच्च बृहदारण्यके अन्तर्यामिविद्यानन्तरवाक्यप्रतिपाद्यत्वाच्च परमपुरुषः। ईक्षतिकर्म परमपुरुष एव श्रुतः। दहराधिकरणन्तु व्योमातीतमतत्प्रत्यनीकत्वात् 'स उत्तमः पुरुष' इति परमपुरुषविषयत्वाच्च देवताविशेषसाधकम्, प्रमितश्च पुरुष एव श्रुतः। देवताधिकरणमधुविद्ये हिरण्यगर्भेन्द्रादीनामपि गुरुशिष्यभावप्रदर्शनेन आदित्यान्तर्यामिविषयत्वेन च भगवतो महामहिमप्रतिपादिके, "आकाशो ह वै नामे'तिवाक्यं पुरुषसूक्तप्रत्यभिज्ञानात्परमपुरुषविषयम्। चतुर्थाद्ये तु "पुरुषान्न परं किञ्चि'दितिसमर्थितम्; अनन्तरे चाधिकरणे अजायाः परमपुरुषात्मकत्वं स्थितम्, तैत्तिरीयके अजावाक्यविहितानुवाके 'यस्मात्पर'मितिवाक्यस्याधीतत्वात्। 'यस्मिन् पञ्च पञ्चजनाः" इति वाक्यं च भगवत्परम्, अमृतात्मब्रह्मशब्दनिर्दे-

* भावप्रकाशिका *

दिति) (मुण्डोपनिषदः कात्स्न्र्येनेति) येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् 'दिव्यो ह्यमूर्तः पुरुषः कर्तारमीशं पुरुषम्' इति पुरुषशब्दाभ्यासदर्शनादिति भावः। (तत्र श्रुतरूपविशेषान्वयादेवेति) मुण्डकोपनिषच्छ्रुतेत्यर्थः। इदञ्च स्मर्यमाणमनुमानं स्यादित्यत्र स्पष्टम्। (अन्तर्यामिविद्यानन्तरवाक्यप्रतिपाद्यत्वाच्चेति) यद्यप्यन्तर्यामिब्राह्मणमुद्दालककर्तृकस्यान्तर्यामिप्रश्नस्योत्तरम्, गार्गिब्राह्मणं तु गार्गिकर्तृकाकाशाधारप्रश्नस्योत्तरमिति नानयोरेकविषयत्वनियमः। अथापि कियदपि नियामकं सम्भवन्न परित्याज्यमित्यभ्युच्चययुक्तितयोपन्यस्तमिति द्रष्टव्यम्। (आकाशो ह वै नामेतिवाक्यमिति) 'सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वा' इति पुरुषसूक्ते श्रवणात्तत्प्रत्यभिज्ञापकमिति भावः। (यस्मात्परमितिवाक्यस्याधीतत्वादिति) तत्र 'तेनेदं पूर्णं

* श्रुतप्रकाशिका *

शात्, 'अन्तराक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमेतदभयमेत-द्ब्रह्म 'अमृतो हिरण्मयः' स त आत्मान्तर्याम्यमृतः" इतिवाक्यैकार्थ्यं हि तस्य प्रतीयते, 'यश्चक्षुषि तिष्ठन्' इत्याद्यन्तर्यामिब्राह्मणैकार्थ्येन पञ्चजनसंज्ञाना-मिन्द्रियाणां भगवदधीनत्वमपि ह्यवगम्यते। 'कारणत्वेन चे'त्यत्र आनन्दवल्लीवा-क्यस्य विषयत्वात्सिद्धं परमपुरुषत्वनिर्धारणम्। बालाक्यजातशत्रुसंवादे च वेदित-व्यतयोक्तः परमपुरुषः, यस्येत्यनुवादस्य प्रापकसापेक्षत्वाद्वेदितव्यत्वस्य च 'तमेवं विद्वा'नित्यादिवाक्यैकार्थ्यज्ञापकत्वाच । अवस्थितेरितिसूत्रस्यान्तर्यामिब्राह्मण-विषयत्वात् मैत्रेयीब्राह्मणे च जीवसमानाधिकरणवाक्यानां नारायणपरत्वं स्थितम्। प्रकृत्यधिकरणस्य तु निमित्तोपादानभेदवादिपाशुपतप्रक्रियाविरोधित्वाद्रुक्मवर्ण-पुरुषस्य योनित्वकथनाच्च परमपुरुषविषयत्वं स्पष्टम्। एतदुक्तम्भवति ; केचिद्वा-क्यविशेषा अनुवादरूपतया प्रापकसाकाङ्क्षाः, "यतो वा इमानि" "यो वै बालाक एतेषां पुरुषाणां कर्ता" इत्येवमादयः। केचित्साधारणशब्दचिह्नितत्वाद्विशेषाका-ङ्क्षाः, यथा सदेवेत्यादयः। केचिच्च अयोग्यस्वार्थतया योग्यविशेषाकाङ्क्षाः, यथा आ-काशप्राणादिशब्दचिह्निताः। केचिच्च योग्यविशेषप्रत्यभिज्ञापकविशेषणोपस्थापकाः, यथा "सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादयः, सर्वव्यापित्वं सर्वभूतान्तरात्मत्वमपि नारायणप्रत्यभिज्ञापकम्, "व्याप्य नारायणः स्थितः 'सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति श्रूयमाणत्वात्। केचिच्च योग्यविशेषोपस्था-पकाः 'हिरण्मयः पुरुषः 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' सहस्रशीर्षा पुरुषः 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' परात्परं पुरुषमुपैति 'परम-पुरुषमभिध्यायीत 'दिव्यो देव एको नारायणः" इत्यादयः, अतो योग्यविशेषपरेषु वाक्यविशेषेषु तदितरकोटिचतुष्टयनिविष्टवाक्यविशेषाः पर्यवस्यन्ति, अन्यथा निरा-काङ्क्षत्वायोगादिति ; अतो जगदेककारणचिदचिद्विलक्षणदेवताविशेषे कारणवा-क्यानां समन्वयोऽध्यायप्रतिपाद्य इति स्थितम् ; अतोऽधिकाशङ्कास्पदानामनु-दाहृतवाक्यविशेषाणामपि नारायणपरत्वमेव चरमाधिकरणे सूत्रकारैरुपपिपाद-यिषितमिति सिद्धम्। एवं पादचतुष्टयेऽपि विषयत्वेनोदाहृतानां वाक्यानामैक-कण्ठ्यं स्थितम्, अनुदाहृतवाक्यविशेषाणां तु न कस्मिंश्चिदर्थे ऐककण्ठ्यं प्रती-यते ; अतस्तेष्वेकैकं निरूपितचराणां भूयसां वाक्यानां बलीयस्त्वादेकैकस्य

* श्रुतप्रकाशिका *

वाक्यस्य तदनुगुणत्वं युक्तमिति च सिद्धम् । के पुनस्ते वाक्यविशेषाः ? येषूक्तन्यायातिदेशः । उच्यते ; अनुदाहृतवाक्यानामानन्त्यान्न कार्त्स्न्येन तत्प्रदर्शनं शक्यम् ; अतः केषुचिद्वाक्येषु दिङ्मात्रं प्रदर्श्यते । बृहदारण्यके श्रूयते 'ब्रह्म वा इदमग्र आसीदेकमेव' इत्यादि । अत्र न परं ब्रह्म प्रतिपाद्यम् , तदसाधारणलक्षणविशेषाद्यभावात् ।

❀ भावप्रकाशिका ❀

पुरुषेण सर्वमिति पुरुषशब्दश्रवणादिति भावः । ( बृहदारण्यक इति ) 'ब्रह्म वा इदमग्र आसीत्तदेकं सन्न व्यभवत्तच्छ्रेयोरूपमत्यसृजत क्षत्रम् । यान्येतानि देवक्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः इति तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यदपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य एनं हिनस्ति स्वां योनिमृच्छति स पापीयान्भवति यथा श्रेयांसं हिंसित्वा स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति स नैवं व्यभवत्स शौद्रं वर्णमसृजत पूषणम् इयं वै पूषा इयं हीदं सर्वं पुष्यति यदिदं किञ्च स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यतो बलीयान्बलीयांसमाशंसते यथा धर्मेण राज्ञा यं यो वै स धर्मस्सत्यं वैतत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदन्तीति । धर्मं वा वदन्तं सत्यं वदतीत्येव तद्धैव तदुभयं भवति तदेतद्ब्रह्म क्षत्रं विट्छूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यश्शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्तो ब्राह्मणे मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माभवत्'' न व्यभवत्—न विभूतवत्कर्मणे नालमासीदित्यर्थः । श्रेयोरूपम् प्रशस्तरूपम् . अत्यसृजत—अतिशयेनासृजत् . देवताक्षत्राणि देवेषु क्षत्राणि, राजसूयेऽभिषिक्तमासाद्यस्थितम् राजानमधस्तात्स्थितमृत्विक् हे राजन् ! त्वं राजन् ब्रह्मासीदिति ब्रूयादिति उपासनं विहितम्. तद्यश आत्मीयं यशो दधाति, परमतां राजसूयाभिषेकेणोत्कृष्टतां गच्छति, अन्ततः कर्मसमाप्तौ पुरोहितमेवाश्रयतीत्यर्थः । यस्तु क्षत्रियः स्वकारणभूतां ब्रह्मयोनिं हिनस्ति, स स्वां योनिं नाशयति, इयं पृथिवी क्षत्रस्य क्षत्रं क्षत्रियस्यापि नियन्त्रीत्यर्थः । अबलीयान् दुर्बलः, बलीयांसमात्मनो बलवत्तरमपि धर्मेण बलेन जेतुमाशंसते, यथा राज्ञा

* श्रुतप्रकाशिका *

अत्र ब्रह्मशब्दो ब्राह्मणजातिपरः ,तदभिमान्यग्निदेवतापरो वा तदधिष्ठितब्राह्मणजातिपरो वा। 'अत्यसृजतक्षत्र'मिति क्षत्रियसृष्टिश्रवणात् 'तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूय' इति क्षत्रप्रशंसनवाक्ये ब्राह्मणशब्देन निर्देशात् 'य एनं हिनस्ति स्वां योनिमृच्छति स पापीयान् भवती'ति ब्राह्मणहिंसायां प्रत्यवायकथनात्परस्य हिंसाप्रसङ्गाभावात् "स विशमसृजत स शौद्रं वर्णमसृजते'ति स इति पुल्लिङ्गेन शब्देन ब्राह्मणं परामृश्य वैश्यशूद्रयोरपि तत्सृष्टत्वकथनात् 'तदेतद्ब्रह्म क्षत्रं विट्छूद्र' इति वर्णचतुष्टयनिगमनाच्च ब्रह्मशब्दो ब्राह्मणपरः तदभिमान्यग्निपरो वा तदधिष्ठितब्राह्मणवर्णपरो वा "आग्नेयो वै ब्राह्मण" इति श्रुत्यन्तरादिहापि 'अग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु' इति निर्देशेन ब्राह्मणवर्णस्याग्निसम्बन्धप्रतिपत्तेश्चेति। तदेत् त्रयमनुपपन्नम् सदेव सोम्येदमग्र आसी'दित्यादिवाक्यसारूप्यभङ्गायोगात्कारणत्वस्य परमात्मासाधारण्यस्य समर्थितत्वाच्च । किञ्च उपक्रमस्थब्रह्मशब्दमुख्यार्थहानिप्रसङ्गः , वर्णमात्रस्य अग्निसंज्ञदेवतायास्तदधिष्ठितवर्णस्य च इन्द्रवरुणसोमादिसमस्तदेवतासृष्ट्त्वायोगश्च। "ब्राह्मणोऽस्य मुखमासीत् 'पद्भ्यां शूद्रः 'मुखादिन्द्रश्चाग्निश्चे'ति ब्राह्मणस्येन्द्रादेरग्नेश्च परमपुरुषसृष्टत्वश्रवणेन इन्द्रादीनामग्निसृष्टत्वायोगश्च। अस्याः श्रुतेर्गत्यन्तरसम्भवेन कल्पभेदेन सृष्टिभेदपरत्वकल्पनञ्चानुपपन्नम् "तदग्निनैव देवेषु ब्रह्माभवत्

७ भावप्रकाशिका ७

लोके बलवत्तरेणापि कश्चिद्दरिद्रो धर्मेण विजिगीषते, तस्मात्सिद्धं धर्मस्य बलवत्त्वम् । ( तदधिष्ठितब्राह्मणजातिपर इति ) अग्निदेवताधिष्ठितब्राह्मणजातिपर इत्यर्थः । प्रथमपक्षे ब्राह्मणजातिपरत्वसत्त्वेपि अग्निदेवताधिष्ठितब्राह्मणजातिपरत्वाभावात्तत्पक्षादस्य पक्षस्य विशेष इति द्रष्टव्यम् । ( क्षत्रियसृष्टिश्रवणादिति ) यदि परं ब्रह्मैवं प्रक्रान्तं स्यात् तदा सर्ववर्णसृष्टिरपि कथ्येत, न क्षत्रप्रमुखसृष्टिरिति भावः । ब्रह्मशब्दो ब्राह्मणपर इत्यन्तेन ब्राह्मणपरत्वं प्रसाध्य इतरपक्षद्वयमुपक्षिपति ( तदभिमान्यग्निपर इत्यादिना ) ( उपक्रमस्थब्रह्मशब्देति ) चातुर्वर्ण्यनिगमनस्थब्रह्मशब्दस्य ब्राह्मणवर्णपरत्वस्य सम्प्रतिपन्नत्वादिति भावः । ( अग्निसृष्टत्वायोगश्चेति ) इदमुपलक्षणम् । ब्राह्मणजातिसृष्टत्वायोगश्चेत्यपि द्रष्टव्यम् । इन्द्रादिसृष्टृत्वं कल्पभेदेनाग्नेस्स्यादित्यत्राह ( अस्याः श्रुतेरिति ) ( अग्निब्राह्म-

* श्रुतप्रकाशिका *

ब्राह्मणो मनुष्ये'ष्विति तच्छब्दपरामृष्टप्रकृतब्रह्मणोऽग्निब्राह्मणान्यत्वं च प्रतीयते, 'तस्मादग्नावेव देवेषु लोकमिच्छन्तो ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभव'दित्यग्निब्राह्मणयोर्वैयधिकरण्येन ब्रह्मरूपत्वनिर्देशेन ताभ्यां रूपिणो ब्रह्मणो विलक्षणत्वं च प्रतीतम् ; एवमिन्द्रादिस्रष्टृत्वात् पृथग्व्यपदेशाच्च ब्रह्मशब्दस्य अन्यवस्थब्रह्मपरत्वञ्च व्युदस्तम् । नह्यग्निरूपाद्ब्रह्मण इन्द्राद्युत्पत्तिः, अतोऽग्निविशिष्टत्वोपस्थापनकल्पनवैयर्थ्यम्। अशाब्दत्वञ्च, न हि केवलब्रह्मशब्दोऽन्यवस्थपरमात्मवाची। प्रथमब्रह्मशब्दोऽन्यवस्थब्रह्मपरश्चेत् 'तदग्निनैवे'तिप्रकृतपरामर्शिनस्तच्छब्दस्य वैयधिकरण्यमनुपपन्नम्। अन्यवस्थस्य ब्रह्मणोऽग्निना विशिष्टत्वं चायुक्तम्, एकस्यैवाग्नेर्विशेषणत्वविशेष्यत्वानुपपत्तेः, अन्यन्तरकल्पने च तस्याऽन्यन्तरं प्रति रूपत्वानुपपत्तेश्च । नन्विन्द्रादिसृष्टिरविवक्षिता, तद्विवक्षायां ह्यग्निब्राह्मणपरत्वानुपपत्तिः, किन्तु तद्देवताधिष्ठेयक्षत्रादिसृष्टिरेव विवक्षिता "तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माभव"दिति च वाक्यद्वयं ब्राह्मणवर्णस्यैव देवमनुष्यविभागेन द्वैविध्यपरमिति । उच्यते ; न तावदिन्द्रादिसृष्ट्यविवक्षा वाच्या 'तदेतद्ब्रह्म क्षत्रं विट्छूद्र' इति चातुर्वर्ण्यनिगमने, कथं चातुर्वर्ण्यम् ? क्षत्रादिवर्णत्रयसृष्टिर्ह्युक्तेत्यपेक्षायां 'तदग्निनैव देवेषु ब्रह्माभव'दित्यग्निना देवेषु चतुस्सङ्ख्यापूरणात् अग्निश्च मृत्युसञ्ज्ञसूक्ष्मचिच्छरीरकपरमात्मसृष्टतया प्रागुक्तः, 'तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्त्तताग्नि'रिति । श्रान्तशब्दः कारणलक्षणया यत्नपरः, कृतसङ्कल्पस्येत्यर्थः । तप्तस्य– 'तप आलोचने' सृज्यवर्गपर्यालोचनवत इत्यर्थः । एवं तत्राग्निरेव सृष्टतया श्रुतः, न तु तदधिष्ठितो ब्राह्मणवर्णः। इहापि तेन चतुस्सङ्ख्यापूरणादग्र्यप्रायन्यायेन क्षत्रादिविभागवत्तदभिमानीन्द्रादिसृष्टिर्विवक्षितेत्यवगम्यते, न

* भावप्रकाशिका *

णान्यत्वञ्च प्रतीयत इति ) ननु तच्छब्दपरामृष्टब्रह्मणः अग्निनेति व्यधिकरणनिर्दिष्टाग्नेरन्यत्वं प्रतीयतां नाम, ब्राह्मणानन्यत्वं कथं प्रतीयतामिति चेन्न, मृत्पिण्डो घटो भवतीतिवत् तद्ब्राह्मणो भवतीत्युक्ते तच्छब्दितस्य ब्राह्मण्यात्पूर्वभावित्वप्रतीतेरनुभवसिद्धत्वादिति भावः। ( देवमनुष्यविभागेनेति ) देवरूपो मनुष्यरूपश्च ब्राह्मणोऽस्तीत्यर्थः। ( परमात्मसृष्टतया प्रागुक्त इति ) 'नैवेह किञ्च-

* श्रुतप्रकाशिका *

तु तदधिष्ठितवर्णमात्रसृष्टिः । 'तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु' इत्युक्तिः पूर्वं ब्राह्मणवर्णस्य ब्रह्मशब्दानुक्ततां ज्ञापयति, पूर्वोक्तानामिन्द्रक्षत्रियादीनामनया वचनव्यक्त्या पुनरनुक्तत्वात्। न हि क्षत्रवर्णो देवेष्विन्द्रेण क्षत्रमभवत् मनुष्येषु क्षत्रियेणेति वाक्यं श्रूयते, अत एवाग्नेरपि ब्रह्मशब्दानुक्तत्वं सिद्धम् । न हीन्द्रो देवेष्विन्द्ररूपेण क्षत्रमभवन्मनुष्येषु क्षत्रियेणेति वाक्यमस्ति । ननु "क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः" इति श्रूयत इति चेत्, ततः किम्? वर्णान्तरेष्वपि द्वैविध्यं प्रतीयत इति चेन्न, तदग्निनैवेत्यादिवाक्यवैरूप्यात् । न हि क्षत्रवर्णो देवेष्विन्द्रादिरूपेण क्षत्रियोऽभूत् मनुष्येषु क्षत्रियेणेति श्रुतम्, तथापि वर्णान्तरद्वैविध्यपरत्वेऽध्याहारबाहुल्यप्रसङ्गः, तर्हि अस्याः श्रुतेः कोऽर्थः? उच्यते; ब्राह्मणाभिमान्यग्निसृष्टेः पूर्वमुक्तत्वात् क्षत्राद्यभिमानीन्द्रादिसृष्टिमिहोक्त्वा अग्निसृष्टिः स्मारिता तदग्निनैवेति वाक्येन; अग्निनेतीत्थम्भावे तृतीया। अग्निना विशिष्टं तत्परं ब्रह्म देवेषु ब्रह्माभवत्, अग्निद्वारा ब्राह्मणाभिमान्यभवदित्यर्थः । अनेन इन्द्रादिद्वारा परब्रह्मण एव क्षत्राद्यभिमानित्वमित्यर्थसिद्धम्, वर्णाभिमानिदेवतानाञ्च तपोविशेषात् ब्राह्मण्यादिविभागोऽस्तीति वा ब्राह्मक्षत्रादिव्यवहारः "ब्रह्मा बृहस्पतिः क्षत्रमिन्द्रः मरुतो वै देवानां विशः" इत्यादिश्रुतेः । तदानीमग्न्यादिद्वारा परब्रह्मण एव ब्राह्मणत्वादिविभागः उक्तः स्यात्, 'बहु स्या'मिति सर्वविधबहुत्वं हि तत्तद्द्वारा ब्रह्मगतम्, एवं वर्णाभिमानिदेवतासृष्टिरुक्ता । अथाभिमानविषयभूतब्राह्मणादिसृष्टिं "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः" इत्यादिश्रुतिप्रसिद्धामुपजीव्य तद्द्वारा तत्फलभूतमानुषवर्णविभागभाक्त्वं परमात्मन उच्यते ब्राह्मणो मनुष्येष्विति । तत्परं

* भावप्रकाशिका *

नाग्र आसी' दित्यस्मिन्ब्राह्मण इत्यर्थः। ( क्षत्रादिविभागवत्तदभिमानीति ) क्षत्रादिभेदभिन्नतत्तज्जात्यभिमानीन्द्रादिसृष्टिरित्यर्थः । ( ब्राह्मणाभिमान्यग्निसृष्टेरिति ) तस्य श्रान्तस्य तप्तस्य तेजो निरवर्तते पूर्वब्राह्मण इति भावः। ( ब्राह्मणत्वादिविभाग उक्तस्स्यादिति ) ततश्च ब्राह्मणवाचिनो ब्रह्मशब्दस्य लक्षणा न समाश्रयणीयेति भावः । ( तत्परं ब्रह्म मनुष्येष्विति ) तदग्निनैव देवेष्वित्यतः-

* श्रुतप्रकाशिका *

ब्रह्म मनुष्येषु ब्राह्मणरूपभाक् तद्द्वारा ब्रह्माभवत्, क्षत्रियेण विशिष्टं सत्तद्ब्रह्म तद्द्वारा क्षत्रियत्ववदभूत्, यथा भूमिद्वारा काठिन्यवदभूत्तद्वदित्यर्थः। श्रुतपदानुषङ्गेण निर्वाहे सम्भवति वाक्याध्याहारेण योजनानुपपत्तेः, मध्येऽग्निब्राह्मणयोः प्रशंसा 'तस्मादग्नावेव देवेषु लोकमिच्छन्तो ब्राह्मणे मनुष्ये'ष्विति। तत्प्राशस्त्यहेतुमाह— एताभ्यां हि रूपाभ्यां ब्रह्माभवदिति। अग्निब्राह्मणरूपाभ्यां परं ब्रह्म विशिष्टमभवदित्यर्थः। इंन्द्रक्षत्रादीनां च परमात्मरूपत्वाविशेषेऽपि अग्निब्राह्मणयोस्तद्रूपत्वकथनं तत्प्रशंसाया विवक्षितत्वात्, एताभ्यां हीत्यादिवाक्यस्य वर्णद्वैविध्यपरत्वं प्रयोजनाभावादयुक्तम्। न हि वर्णद्वैविध्यमात्रकथनमुत्कर्षाय भवति, इदञ्च वाक्यमुत्कर्षोपपादकमिति हिशब्देन ज्ञायते, ब्रह्मशब्दार्थवैरूप्यं तु 'तपसा चीयते ब्रह्म' 'तस्मादेतद्ब्रह्म' इति मुण्डोपनिषदीव घटते। मुख्यार्थसम्भवे लाक्षणिकार्थस्वीकारस्य तत्सम्भवेप्यमुख्यार्थस्वीकारहेतुत्वाभावात्; वक्ष्यते हि "स्याच्चैकस्य ब्रह्मशब्दवदिति। पूर्वपक्षहेतुषु क्षत्रविट्छूद्रसृष्ट्युक्तेरन्यथासिद्धिरुक्ता। किञ्च क्षत्रा-

* भावप्रकाशिका *

परं ब्रह्मपरतच्छब्दोऽनुकृष्यते, अग्निनैव देवेषु ब्रह्माभवदित्यतो ब्रह्माभवदित्यप्यनुकृष्यत इति भावः। नन्वग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येष्वित्यत्र देवेषु देवानां मध्ये ब्रह्माग्निनैवाभवत् विकारान्तरमप्राप्यैवाग्निस्वरूपयुक्तमेवाभवत्, मनुष्याणां मध्ये च विकारमप्राप्यैव ब्रह्मस्वरूपमेव ब्रह्म स्थितम्, अग्नौ ब्राह्मणजातौ च ब्रह्माविकृतमित्यर्थः। क्षत्रियादिषु तु क्षत्रियादिविकारनिमित्तकं क्षत्रियत्वं ब्रह्मणः, तस्माद्यत अग्निब्राह्मणावविकृतब्रह्मस्वरूपौ तस्माल्लोकमिच्छन्तो अग्नौ ब्राह्मणे च कुर्वन्तीत्येवं परोक्तरीतिः कुतो नाश्रीयत इत्याशङ्कयाह (श्रुतपदानुषङ्गेणेति) (तत्प्रशंसाया विवक्षितत्वादिति). ननु प्रकरणस्य चातुर्वर्ण्यतदभिमानिसृष्टिसाधारण्येऽग्निब्राह्मणयोः प्रशंसायां किं बीजम्? नह्यस्मिन्प्रकरणेऽग्निब्राह्मणयोरिन्द्रक्षत्रादिव्यावृत्ततया असाधारण्येनोद्देश्यविधेयकोट्योरनुप्रवेशोस्ति, येन विशिष्य तयोः प्रशंसा विवक्षिता स्यात्, अग्निब्राह्मणप्रशंसामुखेन चातुर्वर्ण्यतदभिमानिप्रशंसाया विवक्षितत्वमित्यत्र तात्पर्यात्। (मुख्यार्थासम्भव इति) अग्निनैव देवेषु ब्रह्माभवदित्यत्र मुख्यार्थसम्भ-

* श्रुतप्रकाशिका *

दिवर्णत्रयसृष्टिश्रवणेन 'ब्रह्म वा इद'मितिवाक्यस्य कारणवाक्यसारूप्यनिबन्धनं परमात्मपरत्वं भङ्क्त्वा ब्रह्मशब्दस्य प्रथमवर्णतदभिमानिदेवताविषयत्वाश्रयणमयुक्तम्, 'सदेवे'त्यादिवाक्येऽपि तेजोऽबन्नसृष्टेर्वक्ष्यमाणत्वेन सच्छब्दस्याऽपि वायुतदभिमानिदेवताविषयत्वप्रसङ्गात् । 'स विशमसृजते'ति पुंल्लिङ्गनिर्देशस्त्वात्मशब्दाभिप्रायः, एतद्ब्राह्मणोपक्रमे हि 'आत्मैवेदमग्र आसी'दिति श्रूयते; अतस्स इति निर्देशो न क्षत्रप्रशंसार्थः प्रस्तुतब्राह्मणशब्दाभिप्रायः, व्यवहितशब्दानुगुणलिङ्गभाक्त्वं सर्वनामपदस्य श्रुतिषु दृश्यते, यथा मुण्डोपनिषदि 'यस्सर्वज्ञस्सर्वविद् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्तर्हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति'' इति । अत्रात्मशब्दे सन्निहितेऽपि ब्रह्म, तल्लक्षणमुच्यत इति व्यवहितब्रह्मशब्दाभिप्रायेणामृतं यत्तदिति निर्दिश्यते, न तु 'स त आत्माऽन्तर्याम्यमृतः' इतिवत्पुँल्लिङ्गत्वेन । नन्वस्मिन्नेव ब्राह्मणे 'तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद् यस्मात् सर्वमभव'दिति पृष्ट्वा 'तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणा'मिति ब्रह्मशब्दवाच्यस्य अविद्यातिरोहितस्य अहं ब्रह्मास्मीतिज्ञानेन सर्वात्मभावाप-

* भावप्रकाशिका *

वात् ब्राह्मणजातिरूपमुख्यार्थस्वीकारेपि ब्रह्मण इदमग्र आसीदित्यत्र मुख्यार्थसम्भवस्थलेपि ब्राह्मणजातिरूपामुख्यार्थस्वीकारस्यायुक्तत्वादिति भावः । (आत्मैवेति) ''आत्मैवासीत्पुरुषविधस्सोन्वीक्ष्य नान्यदात्मनोऽपश्यत्सोहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वा अथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद सोबिभेत्तस्मादेकाकी बिभेति सहायमीक्षाञ्चक्रे यन्मदन्यास्ति कस्मान्नु बिभेमीति तत एवास्य भयं विहाय कस्माद्ध्यभेष्यत् द्वितीयाद्वै भयं भवति स वै नैव रेमे तस्मादेकाकी न रमेत स द्वितीयमैच्छत्" इत्यादि । एतर्ह्यामन्त्रित इति— अस्मिन्नपि काले आहूत इत्यर्थः । स यत्पूर्व इति— यत् यस्मात्कारणादस्मात्सर्वस्मात्पूर्वस्सन् सर्वान्पाप्मनोऽदहत्तस्मात्पुरुष इत्यर्थः । ओषति

* श्रुतप्रकाशिका *

त्तिश्रवणात् परब्रह्मणोऽविद्यातिरोधानासम्भवात् ब्राह्मणादिषु तत्सम्भवादुपक्रमस्थब्रह्मशब्दो ब्राह्मणवर्णपर इत्यत्रापि तदनुरोधेन ब्राह्मणवर्णपरत्वं ब्रह्मशब्दस्योपपन्नमिति. नैवम् ; उपक्रमेऽपि ब्रह्मशब्दस्य परमात्मपरत्वात्तत्र च नाविद्यातिरोधानं श्रूयते , तद्वाचकशब्दाभावात् ; तथा हि , ब्रह्मविद्यया सर्वं भविष्यन्तः, सर्वशब्दवाच्यपरमात्मपर्यन्ताविर्भावकामाः, मनुष्या मन्यन्ते—किमु तद्ब्रह्मावैत् यस्मात्तत्सर्वमभवदिति , तद्ब्रह्म किं वेद्यं वस्त्वन्तरमवैत् यस्माद्वेदनात् तत्सर्वमभवदिति ब्रह्मणोऽपि परं तदुपास्यं वस्त्वस्ति न वेति बुभुत्सोत्थापिता । उपास्यान्तरशून्यमित्युत्तरमाह— तदात्मानमेवावैदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति । आत्मानमेवावैत्— न त्वन्यदुपास्यम् , तस्मात्तत्सर्वमभवदित्यर्थः । अन्यवेदनस्योपायतानिषेधे तात्पर्यम् , न तु स्ववेदनस्योपायत्वविधाने । यथा "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः " इति कारणान्तरनिषेधेन परमकारणत्वसिद्धिः , एवमुपास्यान्तरनिषेधेन ब्रह्मणः परमोपास्यत्वमिह विवक्षितम् । कारणान्तराभावफलमुपास्यान्तराभावः , कारणस्यैव हि ध्येयत्वम् , एवमुपास्यान्तरशून्यं ब्रह्म जानतः फलमाह " तद्योय " इति । अतः उपक्रमैकार्थ्यं च परमात्मपरत्वसाधकम् ; तस्मात् 'ब्रह्म वा इदमग्र आसीदेकमेवे'त्यादिवाक्यस्य परमपुरुषस्य परत्वं सिद्धम् ॥ तथा बृहदारण्यक एव 'आत्मैवेदमग्र आसीत्पुरुषविधः सोऽन्वीक्ष्य नान्यदात्मनोऽपश्यत्' इत्यादि श्रूयते , इहात्मशब्दादीक्षणाच्च चेतनस्य प्रतिप्राद्यत्वेऽपि न स परमात्मा, स हि निरतिशयानन्दः , इह च सोऽबिभेत्तस्मादेकाकी ह बिभेति स सहायमीक्षाञ्चक्रे " इति भयान्वयोऽवगतः , परमात्मा हि न भयाश्रयः, किन्तु भयहेतुः " भीषा-

* भावप्रकाशिका *

ह वै स तमित्यादि— य एवं वेद सः स्वस्मात्पूर्वं प्रजापतित्वप्रेप्सुं दहतीत्यर्थः । लोके हि उत्कृष्टसाधनशाली तादृशसाधनशून्यं दहन्निव दृश्यते । नैवेह किञ्चनेत्यादि— 'आसीन्मृत्युनैवेदमावृतमासीदशनायया अशनाया हि मृत्युस्सतं मनोऽकुरुत आत्मन्वी स्यामिति सोऽर्चन्नचरत्तस्यार्चत आपो जायन्त अर्चते वैमेकमभूदिति तदेवार्कस्यार्कत्वं कँ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद आपो वा अर्कः यद्यदपां रस आसीत्तत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य

* श्रुतप्रकाशिका *

साक्षातः पवते" इत्यादि श्रुतेरिति। उच्यते ; अयं परमात्मा, कारणवाक्यसारूप्यादस्य वाक्यस्य, अग्र आसीदिति कारणवाक्यत्वं हि प्रतीयते। अस्यात्मनः पुरुषविधत्वं चानन्दमयत्वं ज्ञापयति 'आत्मन आकाशः सम्भूतः' इत्युपक्रम्य 'अन्योऽन्तर आत्मानन्दमयः' इत्युक्त्वा तस्य पुरुषविधत्वप्रतिपादनात् "स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत् तस्मात्पुरुषः" इति सर्वपाप्मप्रदाहकत्वपुरुषशब्दवाच्यत्वावगमाच्च पर एव. भयान्वयस्तु न परमात्मनः, किन्तु तत्कार्यभूतपुरुषस्य, 'सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहं नामाभव'दिति तत्रैव ह्युक्तम्। अहमिति हिरण्यगर्भनाम. अहमभिमानाश्रयव्यष्टिपुरुषाणां प्रथमत्वाद्धिरण्यगर्भस्य, तथा मोक्षधर्मे च चतुर्मुखस्याहङ्कारसञ्ज्ञत्वमवगम्यते "मया सृष्टः पुरा ब्रह्मा यद्यज्ञमयजत्स्वयम् । ततस्तस्मै वरान् प्रीतो ददावहमनुत्तमान् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च । अहङ्कारकृतं चैव तथा पर्यायवाचकम्" इति। तत्रैव भृगुभरद्वाजसंवादे "तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो विधिः । अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत् । ब्रह्मा वै सुमहातेजा य एते पञ्च धातवः" इत्युक्तत्वात्; तस्मादयमर्थः, अहमस्मि– अहं स्यां चतुर्मुखः स्याम्, इति सङ्कल्पवाक्यं व्याहरत्ततोऽहंनामा चतुर्मुखोऽभवदित्यर्थः । अतश्चतुर्मुखरूपस्य परमात्मनः प्रकृतत्वात्तस्य सर्वपाप्मप्रदाहकत्वं साक्षाद्विशेषणमुक्तम्, तद्रूपभूतश्चतुर्मुखः सोऽबिभेदिति भयाश्रयतयोच्यत इति, अतः आत्मा परमात्मेति स्थितम्॥ तथात्रैव बृहदारण्यके श्रूयते "नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनाया हि मृत्युः तन्मनोऽकुरुते'त्यादि। अत्र मृत्युसञ्ज्ञो न परमात्मा, तदसाधारणधर्माश्रवणात्तस्याशनायाविशिष्टत्वाच्च, 'अविजिघत्सोऽपिपासः' इति हि परः श्रूयते, सोऽर्चन्नचरदिति तस्यार्चनादिकर्मकर्तृत्वं श्रूयते, परश्चाकर्मवश्यः,

* भावप्रकाशिका *

तेजो रसो निरवर्तताग्निः' इति हि श्रुतिः । आत्मन्वी स्यामिति– मनस्वी स्यामिति सङ्कल्प्य मनोऽकरोदित्यर्थः । अर्चते वैमे अशनाया विशिष्टत्वाच्चेति। यद्यपि मृत्युनामशनाययेतिसामानाधिकरण्यमेव प्रतीयते, नत्वशनायाविशिष्टत्वम्, तथपि मृत्योरिहाशनायात्वासम्भवात् अशनायाशब्देन अशनायावान् लक्ष्य इति भावः। (अर्चनादिकर्मकर्तृत्वमिति) अर्चनादिक्रियाकर्तृत्वमित्यर्थः । (सुबालोपनि-

* श्रुतप्रकाशिका *

"स एष सर्वेभ्यः पाप्मभ्य उदितः 'अपहतपाप्मे'तिश्रवणात्; अत एव अस्त्वसृष्ट्या नारायण इति च न शङ्क्यम् "अपहतपाप्मा दिव्यो देव एको नारायण" इति तस्यापहतपाप्मत्वात्; अतः प्रसिद्धमृत्युरिह विवक्षितः, सूर्यो वा? तदर्कस्यार्कत्वमित्युक्तत्वात्। उच्यते; अग्र इति कारणावस्थत्वादयं मृत्युसञ्ज्ञोऽचिच्छरीरकः परमात्मा "यस्य मृत्युश्शरीरं स दिव्यो देव एको नारायण' इति श्रुतेः, अशनाया नाम– जगत्सञ्जिहीर्षा; तद्वत्तया अशनायाशब्दस्तस्मिन् प्रयुक्तः, तन्मनोऽकुरुतेति मनस्कारश्च परत्वसाधकः, अर्चन्निति पदस्यायमर्थः, अर्चनम् प्रीणनम्. कर्मकारकं च स्वयमेव, अश्रुताध्याहारादपि प्रकृतस्यैव कर्मत्वोपपत्तेः "लक्षणहेत्वोः क्रियायाः" इति शत्रन्ततया जगद्व्यापारलीलया स्वात्मानं प्रीणयितुमचरदित्यर्थः। अपां सृष्टिश्च स्रष्टुर्नारायणत्वे लिङ्गम्, "एको ह वै नारायण आसी'दित्युपक्रम्य "ता इमा आपः" इति श्रुतेः। अर्कशब्दश्च परस्मिन् प्रीणनगुणयोगाद्वर्तते, अत एव हि भगवन्नामसहस्रे पठ्यते "अर्को वाजसनः शृङ्गी' इति। अपां रसः–सारांशः। 'तत्समहन्यत सा पृथिव्यभव"दिति ब्रह्माण्डसृष्टिरुच्यते। 'ता इमा आपः तद्धिरण्मयमण्डमभव'दिति महोपनिषदैकार्थ्यात्. अतोमृत्युशरीरो नारायण इह प्रतिपाद्यः॥ सुबालोपनिषदि 'तदाहुः किं तदासीत्तस्मै स होवाच न सन्नासन्न सदसदिति तस्मात्तमः सञ्जायत' इति श्रूयते। अत्रेक्षणादिकं नावगम्यते धर्मिवाचिशब्दश्च सद्ब्रह्मादिर्न प्रयुक्तः, अतस्सदसदनिर्वचनीयं कारणं प्रतीयते, उत्तरत्र प्रतिपाद्यमानो नारायण एव न परमकारणम्, तमःप्रभृतिसृष्टिमुक्त्वा 'तदण्डं समभव'दिति अण्डोत्पत्तिमभिधाय 'मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः" इति तस्य कार्यान्तर्वर्तित्वप्रतिपादनात् 'मृत्युर्वै परे देव एकीभवति परस्तान्न सन्नासन्न सदसदिति सदसदु-

॥ भावप्रकाशिका ॥

षदीति) सुबालोपनिषदुपक्रमे 'तदाहुः किं तदासीत्तस्मै स होवाच न सन्नासन्नसदसादिति तस्मात्तमस्सञ्जायते तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी तदण्डं समभवत्तत्सं वत्सरमात्रमुषित्वा द्विधा करोत्। अधस्ताद्भूमिमुपरिष्टादाकाशं मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्सहस्रबाहुरिति सोऽग्रे भूतानां मृत्युमसृजत्त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुं तस्य ब्रह्मा बिभीते'

* श्रुतप्रकाशिका *

भयविलक्षणस्य देवात् परत्वं चावगम्यते। नैवम्, उच्यते; कारणत्वादेव नारायणपरत्वं सिद्धम्। अस्यामुपनिषदि नारायणस्यैव भूयो भूयः प्रतिपादनं च तात्पर्यलिङ्गम्. 'योऽयं विज्ञानघन उत्क्रामन् स केन कतरद्वा स्थानमुत्सृज्योत्क्रामति तस्मै स होवाचे'त्युपक्रम्य 'अपुनर्भवाय कोशं भिनत्ती'त्यारभ्य 'अक्षरं भित्त्वा मृत्युं भिनत्ति मृत्युर्वै परे देव एकीभवति परस्तान्न सन्नासन्न सदसत्' इति मृत्योः परे देवे एकीभावः श्रूयते; मृत्युश्च तमः, स्थानप्रमाणात्तद्धि अक्षरात्परं श्रुतम्, अतस्तमस्संज्ञमृत्योः कारणं सदसदुभयविलक्षणतयोक्तं वस्तु परो–देव इति प्रतीयते, विभागापादानस्यैव अविभागस्थानत्वात्, परो देवश्च नारायणः "दिव्यो देव एको नारायणः' इत्युक्तत्वात्। न च देवात्परं सदसदुभयविलक्षणम्, किन्तु देव एव, मृत्युसंज्ञतमोपादानाविभागस्थानयोरेकत्वात्, अतस्तमोऽपादानत्वाविभागस्थानत्वाभ्यां देवत्वावगमाद्देवस्य नारायणत्वान्मुक्तप्राप्यत्वाच्च नारायण एव सदसदुभयविलक्षणः । केवलाचेतनादचेतनान्मिश्रिततदुभयरूपव्यष्टिभ्यश्च विलक्षणतया नारायणो न सन्नासन्न सदसदित्युच्यते, 'मध्ये पुरुषो दिव्यः' इति वाक्यं तस्याण्डमध्ये स्वसृष्टचतुर्मुखरूपेणावस्थानं दर्शयति, केवलपुरुषशब्दश्चतुर्मुखपरः, तच्छरीरकः परमात्मा 'सहस्रशीर्षा पुरुष' इत्युच्यते । 'सोऽग्रे भूतानां मृत्युमसृज'दिति त्रिशिरस्कमृत्युसृष्टिश्चतुर्मुखरूपधरपरमात्मकर्तृका ; अत एव हि तस्य ब्रह्माभिभीत इत्यनन्तरमुच्यते , अतो न सन्नासन्न सददित्युक्तं

* भावप्रकाशिका *

इत्यादि श्रुतिः। (मृत्योः परे देव एकीभावः श्रूयत इति). मृत्योरिति पञ्चमी परे देवे मुक्तस्य एकीभावः श्रूयत इत्यर्थः। (कोशं भिनत्तीत्यादि) प्रकरणस्य मुच्यमानविषयत्वात्, अत्र मृत्योः परत्वं नाम मृत्युं प्रति कारणत्वं तस्य च देवशब्दितत्वं श्रूयत इति भावः। युक्त्यन्तरमाह (विभागापादानस्यैवेति) अस्यामेवोपनिषदि अक्षरं तमसि लीयते तम एकी भवति परस्मिन्निति परस्य तमोविभागस्थानत्वप्रतिपादनादविभागस्थानस्यैव तमस्सञ्जायत इति विभागापादानत्वं युक्तमिति भावः। (मुक्तप्राप्यत्वादीति) अक्षरं भिनत्तीत्यादेर्मुक्तगतिप्रकरणत्वान्मुक्तप्राप्यत्वस्य च 'सोध्वनः पारमाप्नोति तद्विष्णोः परं पदम्' इत्यादिषु नारायणस्यैवेति स्थितत्वादिति भावः। (केवलाचेतनादित्यादि) न सन्नासच्छ-

* श्रुतप्रकाशिका *

जगत्कारणं नारायण इति स्थितम् ॥ 'असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्मा-ऽप्येति य एवं वेद . तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुषश्च" इत्यादिष्वपि असावादित्य इत्यपरोक्षनिर्देशापवादकचिदचिद्व्यावर्त्तकधर्मान्तराश्रवणात् प्रसिद्धादित्यो मुमुक्षूपास्य आत्मेति न शङ्कनीयम् . जगदन्तरात्मत्वस्य ब्रह्मसाम्यापत्तिपूर्वकब्रह्मप्राप्तिरूपमोक्षोपायभूतवेदनविषयत्वस्य च परमकारणव्याप्तत्वात्, कारणत्वस्य च परमपुरुषत्वसाधकत्वादवयवशक्त्या अपर्यवसानाद्वा सूर्यादिशब्दवाच्यपरमपुरुषविषयं सूर्य आत्मेत्यादिवाक्यम् ॥ तथा प्रश्नोपनिषदि च "कुतो ह वा इमाः प्रजा जायन्त इति तस्मै स होवाच प्रजाकामो ह वै प्रजापतिः स तपोऽतप्यत रयिं च प्राणश्चेत्येतौ मे बहुधा प्रजाः करिष्यन्त इत्यादित्यो ह वै प्राणो रयिरेव चन्द्रमाः' इत्यादि श्रूयते । इहापीक्षणविशेषनिरतिशयानन्दाद्यश्रवणात् 'स तपोऽतप्यते'ति कर्माधीनसृष्ट्यवगमाच्च चतुर्मुख एवेति न शङ्कनीयम्, किन्तु चन्द्रादित्यादिसृष्टेरण्डान्तर्वर्तिविषयायाश्चतुर्मुखकर्तृकत्वसम्भवेऽपि तदन्तर्यामिपरमपुरुष एव प्रजापतिशब्दवाच्यः, अपर्यवसानादवयवशक्त्या वा तस्यैव वाच्यत्वं स्यात्, अस्मिन्नेव खण्डे परब्रह्मप्राप्तेरुक्तत्वात् । 'तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्यादित्यमभिजायत" इत्युक्त्वा "एतस्मान्न पुनरावर्त्तन्त" इति अर्चिरादिगत्याऽनावृत्तिप्रतिपादनात् "येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितं तेषामसौ विरजो ब्रह्मलोकः" इति निर्दोषपरमात्मलाभवचनाच्च । ब्रह्मैव लोको ब्रह्मलोकः, विरजशब्देन प्रसिद्धब्रह्मलोकव्यावृत्तेः, अतः परमात्मपरत्वं हि प्रतीयते । उत्तरखण्डेषु च "एष हि द्रष्टा श्रोता घ्राता रसयिते'त्यादिना प्रत्यगात्मा विशोध्यते, ततश्चोपरिष्टात् 'परं

* भावप्रकाशिका *

ब्दाभ्यां केवलचेतनाचेतनवैलक्षण्यं विवक्षितम् . न सदसदितिशब्देन मिश्रवैलक्षण्यं विवक्षितम् । व्यष्टिभ्य इत्येतन्मिश्रादित्येतस्य व्याख्यानमिति द्रष्टव्यम् । (तदुक्तमृषिणेति) ऋषिणा— वेदेनेत्यर्थः । (जगतस्तस्थुषश्चेति) जङ्गमस्य स्थावरस्य चेत्यर्थः । (परमकारणव्याप्तत्वादिति) इदमुपलक्षणम् । स्थावरजङ्गमान्तर्यामित्वस्यापि कारणत्वव्याप्तत्वादिति द्रष्टव्यम् । (आदित्यमभिजायत इति) अनेनादित्यलोकप्राप्तिप्रतिपादनेनार्चिरादिगतिः प्रत्यभिज्ञायत इति भावः ।

* श्रुतप्रकाशिका *

पुरुषमभिध्यायीत' 'परात्परं पुरिशयं पुरुषमीक्षते' इति परमपुरुषोपासनं तत्प्राप्तिरूपफलं च श्रूयते; अत उपक्रमे प्रजापतिशब्दवाच्यो महावाक्यस्वारस्यात्परमपुरुष इति सिद्धम्॥ "हिरण्यगर्भस्समवर्त्तताग्रे" इत्यत्रापि प्रसिद्धहिरण्यगर्भ एव कारणत्वेन विवक्षितः, तद्व्यावर्त्तकधर्माश्रवणात्। न ह्यत्र समस्तकार्योत्पत्त्यनुगुणेक्षणविशेषानवधिकानन्दाकर्मवश्यत्वादयोऽवगम्यन्ते, पृथिव्यादिधारकत्वं तु न व्यावर्त्तकम्, अण्डान्तर्गतपदार्थधारणादेरण्डाधिपतौ सम्भवात्, अमृतमृत्युशब्दौ च देवभोग्यप्राणापहर्तृविषयाविति तयोस्तन्नियाम्यत्वम्. पृथिव्याद्याधारत्वादीनां चिदचिद्व्यावर्त्तकत्वेऽपि परमपुरुषासाधारणत्वाभावात्प्रसिद्धहिरण्यगर्भपरत्वम्— इति शङ्कायामुच्यते; हिरण्यगर्भशब्दो भगवत्परः, अग्रे समवर्त्ततेति कारणत्वश्रवणात्. अनवच्छिन्नं पतित्वञ्च भगवदसाधारणम्, 'पतिं विश्वस्य" इति नारायणानुवाके श्रवणात्। तस्य चानन्यपरत्वं वक्ष्यते, द्युपृथिव्यादिधारणं च तदसाधारणम्. "विष्णुना विधृते भूमी" इति श्रुतेः, कारणप्रकरणस्थावमृतमृत्युशब्दौ मुक्तबद्धपराविति बन्धमोक्षहेतुत्वं च तदसाधारणम्, "तमेवं विद्वानमृत इह भवति नान्यः पन्थाः" इति श्रुतेः। "यस्य विश्व उपासते प्रशिषं यस्य देवाः यत्राधिसूर उदितो व्येति' इति प्रतिपादितम् आदित्यादिसर्वदेवतानियमनञ्च तत्प्रत्यभिज्ञापकम्, "भीषास्माद्वातः पवते भीषोदेति सूर्यः 'य आदित्ये तिष्ठन्' 'यः सर्वेषु देवेषु तिष्ठन्' इत्यादिश्रुतिप्रसिद्धेः। किञ्च "यमन्तस्समुद्रे कवयो वयन्ति विद्युतः पुरुषादधी'तिसमुद्रान्तर्वर्त्तिविद्युद्वर्णपुरुषप्रतिपादकेन 'अम्भस्यपारे' इत्यनुवाकेन लक्ष्मीपतित्वप्रतिपादकेनोत्तरनारायणेनास्याष्टर्चस्यैकत्वाच्च नारायणपरत्वम्। 'अद्भ्य-

* भावप्रकाशिका *

(प्रत्यगात्मा विशोध्यत इति) मोक्षसाधनीभूतपरमात्मोपासनाङ्गभूतप्रत्यगर्थानुसन्धानार्थमितरव्यावृत्त्यर्थं प्रत्यगात्मस्वरूपं प्रतिपाद्यत इत्यर्थः। नन्वस्यामेव ऋचि 'स दधार पृथिवीं द्यामुतेमाम्' इति पृथिव्यादिधारकत्वं व्यावर्तकमस्त्वित्याशङ्क्याह (पृथिव्यादिधारकत्वं त्विति) श्रुतौ दधारेति— दधारेत्यर्थः। धृजादीनां 'दीर्घोभ्यासस्ये'ति अभ्यासस्य छान्दसो दीर्घः। नन्वस्मिन्नेवाष्टर्चे 'यस्य छायामृतं मृत्यु''रिति अमृतमृत्युशब्दितयोर्बन्धमोक्षयोर्नियाम्यत्वश्रवणात् परमात्मपरत्वमित्याशङ्क्याह (अमृतमृत्युशब्दौ चेति) (यमन्तस्समुद्र इति)

* श्रुतप्रकाशिका *

स्सम्भूतो हिरण्यगर्भ इत्यष्टौ" इति ह्युच्यते। श्रीविष्णुस्मृतौ च भगवत्समाराधने 'हिरण्यगर्भस्समवर्तताग्र इत्यष्टाभिर्हविर्निवेदये'दिति हविर्निवेदने विनियोगादस्याष्टर्चस्य भगवत्प्रतिपादकत्वमवगम्यते, अत एव 'हिरण्यगर्भः शत्रुघ्नः' इति भगवन्नामसहस्रे पठ्यते, अतोऽत्र हिरण्यगर्भशब्दवाच्यो नारायण इति स्थितम् ॥ अत एव "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" इत्यत्र धातृशब्दश्च परमपुरुषविषयो निश्चितः। इदं हि वाक्यम् 'अम्भस्यपारे' इत्यनुवाकस्थम्। नन्वत्राप्युपक्रमे 'प्रजापतिश्चरति गर्भे अन्त'रिति प्रजापतिः श्रुतः। प्रजापतिश्च हिरण्यगर्भः, समुद्रशायित्वलिङ्गसचिवपुरुषशब्दश्रुतेरुपक्रमोपसंहारस्थप्रजापतिधातृशब्दरूपश्रुतिद्वयपरास्तत्वादिति। न उपक्रमस्थप्रजापतिशब्दस्य हिरण्यगर्भपरत्वानुपपत्तेः। "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रममृतं तद्ब्रह्म तदापस्स प्रजापतिः" इत्यग्निवाय्वादीनामिव प्रजापतेरपि कारणभूतप्रजापतिविभूतितया तद्व्यतिरेको ह्यवगम्यते, यथा "यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः। यो देवानां देवतमस्तमोजाः तस्मा इन्द्राय सुतमाजुहोमि" इत्यत्र इन्द्रशब्दवाच्यस्य प्रसिद्धेन्द्रव्यतिरिक्तत्वावगमः, अतः 'सूर्याचन्द्रमसौ धाता' इत्यत्र धातृशब्दस्तपश्शब्देन पूर्वप्रस्तुतपरमात्मपरः ॥ अत एव 'धातुः प्रसादान्महिमानमीश'मित्यत्र धातृशब्दोपि व्याख्यातः, मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तत्वात्, "अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितं विश्वकर्मा ह्यजनिष्ट देवः 'स प्रजापतिरेकः पुष्करपर्णे समभवत्" 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृग्विश्वरूपः 'तत्र ब्रह्मा चतुर्मुखोऽजायत 'नारायणाद्ब्रह्मा जायते' यो ब्रह्माणं विदधाति पूर्व'मित्यादिभिश्चतुर्मुखस्य भगवन्नाभिपद्मसृष्टत्वावगमात्कार्यभूते तस्मिन्नसम्भवेन मुमुक्षूपास्यत्वस्य भगवदसाधारणत्वादुपक्रमभूते अम्भस्यपार इत्यनुवाके "य एनं विदुरमृतास्ते भवन्ती"ति भगवत एवामृतत्वप्राप्त्युपायताप्रतिपादनस्यानरोद्धव्यत्वात्, उपक्रमस्थधातृशब्दैकरूप्यस्य न्याय्यत्वात्

* भावप्रकाशिका *

अन्तस्समुद्रे कवयो वयन्ति—अवगच्छन्तीत्यर्थः। (तपश्शब्देनेति) 'ऋतञ्च सत्यं चाभीद्धात्तपसो जायते'ति तपश्शब्देनेत्यर्थः। तपश्शब्दश्च 'ये चेमेऽरण्ये श्रद्धां तपइत्युपासते' इत्यादाविव परमात्मपर इति भावः। (उपक्रमस्थधातृश-

* श्रुतप्रकाशिका *

उत्तरे चानुवाके चतुर्मुखशिवयोरिन्द्रवन्नारायणविभूतित्वप्रतिपादनादस्मिन्नप्यनुवाके "यस्मात्परं नापर"मिति मन्त्रेण परमपुरुषस्यैव सर्वस्मात्परत्वप्रतिपादनात् । ब्रह्मकार्यवर्गप्रतिपादनप्रकरणे "ब्रह्मा देवानां पदवीः कवीना"मितिमन्त्रेण प्राणसमुद्रादीनामिव चतुर्मुखस्य कार्यत्वावगमाच्च । ननु सप्त प्राणाः प्रभवन्तीतिवन्नोत्पत्तिः श्रूयते, न; महिषश्येनादीनामिवोत्पत्तेः प्रकरणसिद्धत्वात्तस्य बाधकाभावाच्च । ननु यस्मात्परमित्यतः पूर्वमेव "विश्वाधिको रुद्रो महर्षि"रिति श्रवणात् "यः परः स महेश्वरः" इत्युपसंहारे श्रुतत्वाच्च धातृशब्दस्यापि रुद्रपरत्वं न्याय्यमिति । उच्यते ; उपक्रमस्थतया प्रबलस्य धातृशब्दस्य रूढिपरित्यागे को हेतुः ? उपसंहारो हि दुर्बलः, रुद्रमहेश्वरशब्दरूपश्रुतिद्वयमिति चेत् तथापि न बाधकत्वम् , तुल्यबलत्वात्. धातृपदश्रुतिरेकाप्युपक्रमस्थतया अनुगृहीता , रुद्रमहेश्वरश्रुत्योरनेकत्वेऽप्युपक्रमविरोधाद्दुर्बलत्वम्; तस्मात्तुल्यबलता । "किञ्च यो देवानां प्रथमं पुरस्तात्' 'यः परस्स महेश्वरः' इत्यनुवादरूपवाक्यस्थत्वाच्च दौर्बल्यमधिकम् , अतो धातृरुद्रमहेश्वरशब्दानामन्योन्यविरोधात् अन्योन्यबाध्यबाधकभावानुपपत्तेश्च, अर्थनिश्चायकत्वेऽनुपपन्ने सति प्रमाणान्तरायत्तोऽर्थनिश्चयः , तत्र धातृशब्दस्य भग-

* भावप्रकाशिका *

ब्दैकरूप्यस्येति ) 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इतिपूर्ववाक्यश्रुतधातृशब्दैकरूप्यस्यैव धातुः प्रसादिति धातृशब्देप्याश्रयणीयत्वादित्यर्थः । ( उत्तरे चानुवाक इति ) 'स ब्रह्मा स शिव' इतिनारायणानुवाके प्रतिपादनादिति भावः । ( ब्रह्मकार्यवर्गप्रतिपादनप्रकरण इति ) 'सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषस्समिधस्सप्तजिह्वाः । सप्तेमे लोका येषु चरन्ति प्राणाः गुहाशयां निहितास्सप्त सप्त । अतस्समुद्रा गिरयश्च सर्वे तस्मात्स्यन्दन्ते सिन्धवस्सर्वरूपाः । अतश्च विश्वा ओषधयो रसाश्च येनैषभूतस्तिष्ठत्यन्तरात्मा । ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृद्ध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेफन्" इति हि प्रकरणम् । ( तस्मात्तुल्यबलतेति ) ननु रुद्रमहेश्वरश्रुत्योरुपक्रमस्थेन धातृपदेन तुल्यबलत्वं पूर्वतन्त्रे हि 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्' इत्यधिकरणे कस्मिंश्चित् काम्येष्टिविशेषे ऐन्द्राग्न एकादशकपालः प्राजापत्यं दधि मधु घृतमाप इति पञ्चानां हविषामाद्ययोरैन्द्राग्नसान्नाय्ययोः-

* श्रुतप्रकाशिका *

वत्परत्वमुपपादितम्. तदुपपादकहेतुभिः धातृशब्दरूढित्यागेनाश्रयप्रायन्यायाच्च रुद्र-महेश्वरशब्दयोरपि रूढित्यागस्य न्याय्यत्वात् । "यो देवानां 'यः पर" इत्यनुवादस्यान्यसापेक्षत्वात् 'अ इति ब्रह्म' इति श्रुत्या ब्रह्मणोऽकारवाच्यत्वावगमात् ब्रह्मणश्च लक्षणं जगत्कारणत्वमिति कारणवाक्यप्रतिपाद्यनारायणस्याकारवाच्यत्वावगमात् तस्य लोप्रकसिद्धत्वात् "अकारेणोच्यते विष्णुः" इति श्रुत्यन्तराच्च नारा-

* भावप्रकाशिका *

कारत्वेनामावास्याविध्यन्तप्राप्तौ उपांशुयाजविकाराणां मधूदकघृतानां चरमश्रुतत्वेपि भूयस्त्वात्तदनुग्रहाय पौर्णमासविध्यन्त इति निर्णीतम् । ततश्चोपसंहारस्थानेकप्रमाणापेक्षयोपक्रमस्थमेकं दुर्बलम् । अन्तर उपपत्तेरित्यधिकरणे तथा निर्णीतं चेति चेन्न; विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वमिति पूर्वपक्षं कृत्वा मुख्यं वा पूर्वचोदनाल्लोकवदिति सिद्धान्त्यते, अतश्च द्वयोरपि सूत्रयोरैकाधिकरण्यमिति एकदेशिमतानुसारेणेदमिति द्रष्टव्यम् । किञ्चात्रापि 'धाता यथापूर्वमकल्पयत्' 'धातुः प्रसादा'दिति धातृशब्दाभ्याससत्त्वाच्च भूयोऽल्पत्वरूपवैषम्यं नास्तीति द्रष्टव्यम् । ( अनुवादस्यान्यसापेक्षत्वादिति ) ननु यो वेदानामित्येतस्य कथमनुवादत्वशङ्का ?, नहि विश्वाधिकस्य महर्षेः रुद्रस्य हिरण्यगर्भजनकत्वरूपः प्रतीयमानोऽर्थो मानान्तरप्राप्तेः, येनेदं वाक्यमनुवादि स्यात्, असत्यां च मानान्तरप्राप्तौ यदुपबन्धसहस्रेणापि अनुवादकत्वस्य कल्पयितुमशक्यत्वात् । न च यदुपबन्धबलाद्रुद्रपदस्य नारायणे लक्षणामाश्रित्य नारायणाद्ब्रह्मा जायत इतिवाक्यस्य पुरोवादित्वमङ्गीकृत्यास्य वाक्यस्यानुवादित्वं परिकल्प्यत इति वाच्यम्; तथासति यदाग्नेय इत्यादिवाक्येष्वपि यदुपबन्धबलेन सौर्यचरुपरत्वाश्रयणेनानुवादित्वप्रसङ्गादिति चेन्न ; द्वयोर्हिरण्यगर्भकारणत्वासम्भवात् श्रुतिविशेषश्रुतयोरुद्रनारायणपदयोरन्यतरलक्षणावश्यम्भावात् यदुपबन्धानुग्रहाय रुद्रपदस्यैव लक्षणाश्रियते सम्भवन्नियामकस्य त्यागायोगादिति भावः । ननु 'अकारेणोच्यते विष्णुः' इत्यकारवाच्यस्य विष्णुत्वप्रतिपादकवाक्यमेकम् 'यः परस्स महेश्वरः' इत्यकारवाच्यस्य रुद्रत्वप्रतिपादकमपरम् , कोऽनयोर्विशेषः ? चैत्रो मित्रायाः पतिरित्येकं वाक्यम्, यो मित्रायाः पतिस्स मैत्र इत्यपरम् , नह्यनयोरुपजीव्योपजीवकभावोऽनुवाद्यनुवादकभावो वा बलाबलप्रयोजकः,

* श्रुतप्रकाशिका *

यणस्याकारवाच्यत्वसिद्धेश्च रुद्रमहेश्वरशब्दौ रोदयति महानीश्वर इति अवयवशक्त्या भगवत्पराविति युक्तम्। नारायणस्यैव यच्छब्दानूदितत्वात् तस्यैव हि महेश्वरत्वरूपगुणविधानं युज्यते, न हि जुहूमनूद्य विधीयमानं पर्णमयत्वं कपालस्य भवति ; अतो धातृरुद्रमहेश्वरशब्दवाच्यो नारायण इति स्थितम् ॥ अत एव श्वेताश्वतरोपनिषदि च "विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्वम्" इति वाक्यं च व्याख्यातम्, अनुवादरूपतया पूर्वोदाहृतप्रमाणान्तरसापेक्षत्वात्। तथा हि ; बह्वृचशतपथसुबालमहोपनिषत्सामवचनादिभिर्हिरण्यगर्भजन्यत्वे श्वेताश्वतरवाक्येन, हिरण्यगर्भजनकत्वे च रुद्रस्यावगम्यमाने तयोरविरोधेन निर्वाहासम्भवे प्राबल्यदौर्बल्यचिन्ता युक्ता, अविरोधश्च वस्त्वैक्येन वा कल्पभेदेन वा जन्मनोऽवताररूपतया वा सम्भवेत्. तत्र ताव द्वस्त्वैक्यमिह नाविरोधनिर्वाहक्षमं भवेत्, क्षीराद्दधि दध्नः क्षीरमितिवचनयोरिवावस्थाद्वयपौर्वापर्यविपर्यासविरोधस्य दुष्परिहरत्वात्। कल्पभेदादविरोधकल्पनं सूर्याकाशप्राणादिष्वपि प्रसजेत्। ननु अश्रुतस्य कल्पभेदस्य कल्प-

* भावप्रकाशिका *

कश्चिन्मृग्यमाणोपि वीक्ष्यत इत्यस्वरसादाह (नारायणस्याकारवाच्यतासिद्धेश्चेति) नारायणस्याकारवाच्यत्वस्य "अकारेणाखिलाधारः परमात्माभिधीयते। समस्तशब्दमूलत्वादकारस्य स्वभावतः। समस्तवाच्यमूलत्वाद्ब्रह्मणोपि स्वभावतः। वाच्यवाचकसम्बन्धस्तयोरर्थात्प्रतीयते। 'अ निषेधे पुमान्विष्णौ 'अकारो विष्णुवाचकः 'अकारेणोच्यते विष्णुः' अ इति ब्रह्म' 'अ इति भगवतो नारायणस्य प्रथमाभिधानमभिदधता' इत्यादिबहुप्रमाणसम्प्रतिपन्नतया तदनुरोधेनैवैतद्वाक्यार्थस्य वर्णनीयतया यः पर इत्यनेन नारायणमेवानूद्य महेश्वरशब्दे रूढिं परित्यज्य योगार्थभूतं महत्त्वविशिष्टमीशितृत्वं विधीयत इति भावः। (अनुवादरूपतयेति) 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्वं स नो देवश्शुभया संयुनक्तु' इति यच्छब्दयुक्ततया श्रवणादनुवादरूपत्वमिति भावः। (अविरोधश्च वस्त्वैक्येनेति) पिण्डरूपमृज्जन्यस्य घटस्य कपालत्वावस्थापन्नमृज्जनकत्वदर्शनाद्वस्त्वैक्यमविरोधसम्पादकमिति भावः। (अवस्थाद्वयपौर्वापर्येति) मृज्जन्यघटस्य तज्जनकत्वदर्शनेपि यदवस्थापन्नमृज्जन्यत्वं घटस्य तदव-

* श्रुतप्रकाशिका *

नमनन्यथासिद्धेन कल्पकेन स्यात्, सूर्याकाशादिविषयवाक्यानां परमात्मपरतया-प्युपपत्तौ न तत्कल्पनमिति चेत्, इहापि तुल्यम् । अवतारपक्षोऽपि इन्द्रादिप्रकरणेष्विव हिरण्यगर्भरुद्रप्रकरणेष्वपि तस्याश्रुतत्वादिन्द्रादीना-मिव कर्मवश्यत्वं प्रतिपादयन्त्यामुत्पत्तिश्रुतौ परिपथिन्यामन्यतरोत्पत्तेरवताररूप-त्वकल्पनायोगादनुपपन्नः । रुद्रस्यानपहतपाप्मत्वं च शतपथेऽवगतम् "अनपहत-पाप्मा वाऽहमस्मी'ति रुद्रवचः । अत एवैक एवेश्वरः कदाचिद्धिरण्यगर्भा-वस्थात्स्वस्मात् रुद्ररूपोऽवतरति कदाचिद्रुद्रावस्थात्स्वस्मात् हिरण्यगर्भरूपोऽव-तरतीति कल्पनमप्यनुपपन्नम्, गौरवनिरस्तं च; वस्त्वैक्यं द्वयोरुत्पत्त्योरवताररूप-

‡ भावप्रकाशिका ‡

स्यापन्नमृज्जनकत्वं न दृष्टमिति भावः । ( आकाशप्राणादिष्वपीति ) 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इत्यादिवाक्यानामपि कल्पविशेषप्रवृत्तवृत्तान्तविषयतया अविरोधसम्भवात्तद्वाक्यानां परमात्मपरत्वं न कल्प्येत इति भावः । ननु "त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरात् । ब्रह्मा सर्गे हरिस्त्राणे रुद्रस्संहरणे पुनः । तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः । तपसा तोषयित्वा तं पितरं परमे-श्वरम् । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मा रुद्र-विष्णू जगन्मयः । विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः । नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जा-यन्ते परस्परजयैषिणः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । प्रभावः कथ्यते तेषां परस्परसमुद्भवात् । क्वचिद्ब्रह्मा क्वचिद्रुद्रः क्वचिद्विष्णुः प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति । अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः । यो ब्रह्मविष्णुरुद्राणां भेदमुक्तमभा-वतः । साधयेदुदरव्याधियुक्तो भवति मानवः । निर्दिष्टः परमेशाना महेशो नीललोहितः । पुत्रो भूत्वानुगृह्णाति ब्रह्माणं ब्रह्मणोनुजः । अहं च भवतो वक्त्रा-त्कल्पान्ते घोररूपधृक् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रक । अंशभूतो महादेवः सर्वदेवनमस्कृतः । अर्धनारीश्वरो भूत्वा प्रादुरासीत्कृपानिधिः । तस्य

* श्रुतप्रकाशिका *

त्वमपि हि कल्प्यम् । वस्त्वैक्यकल्पभेदजन्मद्वयावताररूपत्वपक्षेषु रुद्रोत्कर्षवादिमतं च न जीवति ; एवं विरोधस्य दुष्परिहरत्वे सति हिरण्यगर्भरुद्रशब्दयोरन्यतरपदप्रसिद्ध्यनादरेण निर्वाहः स्याद्यथाऽऽकाशादिपदानाम् । तत्र हिरण्यगर्भशब्दस्य प्रसिद्ध्यनादरेण स्कन्दाद्युत्पत्तिरुक्ता स्यात् , ततश्च रुद्रस्य परमकारणत्वं न सिद्ध्येत्, चतुर्मुखकार्यत्वस्य श्रुत्यन्तरावगतस्यानपोदितत्वात् ; ततोपि रुद्रशब्दस्यैव प्रसिद्ध्यनादरो न्याय्यः , प्रसिद्धेतरार्थपरिग्रहस्य मानान्तराधीनत्वान्मानान्तरप्रसिद्धिद्योतकस्य यद्वृत्तस्य रुद्रसामानाधिकरण्याच्च रुद्रशब्दस्य मानान्तरानुगुणेऽर्थे निश्चिते तावतैव विरोधस्य परिहृतत्वेन हिरण्यगर्भशब्दप्रसिद्ध्यनादरे कारणाभावात् ; तथा च श्रुतयो रुद्रस्य कार्यत्वं हिरण्यगर्भस्य स्रष्टृत्वं चावगमयन्ति; बह्वृचे तावत् "तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष नृम्णः । सद्यो जज्ञानो निरणाति शत्रून्" इति । न चास्य मन्त्रस्य उदगादिति ब्राह्मणानुरोधेनादित्यविषयत्वं शङ्कनीयम् , भूतपतित्वसद्योजातत्वाभ्यामुग्रशब्दरूढिबलाच्च रुद्रविषयत्वसिद्धेरुदयलिङ्गस्य दुर्बलत्वात् उदगादितिपदस्य तदुत्पत्ति-

❀ भावप्रकाशिका ❀

हृत्कमलस्थस्य नियोगादंशजो विभोः । ललाटं तस्य निर्भिद्य प्रादुरासीत्प्रभोर्मुखात्" इति कौर्मसूतसंहितालैङ्गैः स्मृतिवचनैः कल्पभेदस्यावताररूपत्वस्य च प्रतिपादनात् 'न चास्य कश्चिज्जनिता न चाधिपः' इतिश्वेताश्वतरे रुद्रस्य जनयितृभावप्रतिपादनाच्च तथाभ्युपगन्तव्यमित्यस्वरसादाह ( वस्त्वैक्यकल्पभेदावतारेति ) न चैवमुदाहृतवचनानुसारात्त्रिमूर्तिसाम्यैक्यपक्षोन्मज्जनप्रसङ्ग इति वाच्यम् ; तामसपुराणेषु अप्रचरदवस्थतया प्रक्षेपशङ्कास्पदेषु एवं श्रवणेप्यतादृशेषु तथा श्रवणाभावात् श्वेताश्वतरस्य शिवपरत्वस्यासम्प्रतिपन्नत्वाच्चेति द्रष्टव्यम् । ( रुद्रशब्दस्यैव प्रसिद्ध्यनादर इति ) रुद्रहिरण्यगर्भशब्दयोर्मध्ये रुद्रशब्दस्य मुख्यत्वादसञ्जातविरोधित्वान्न तत्र मुख्यार्थत्यागो युक्तः । किन्तु जघन्यहिरण्यगर्भशब्दस्यैव स्कन्दपरत्वमितिवाच्यम्; रुद्रशब्दस्य 'रुद्रो बहुशिरा बभ्रुः' इत्यादिषु भगवत्परतया प्रयोगाद्धिरण्यगर्भशब्दस्य स्कन्दे क्वापि प्रयोगादर्शनात्. ततोपि मुख्यानां विश्वाधिकादिशब्दानां बहूनां सत्त्वाच्च तदनुग्रहाय रुद्रशब्दस्यैव भगवत्परत्वं युक्तमिति भावः । ( उदगादितिब्राह्मणानुरोधेनेति ) ( शैलालिब्राह्मण इति ) शैलालि-

* श्रुतप्रकाशिका *

दर्शनयोरन्यतरपरत्वेऽपि मुख्यवृत्तिभङ्गाभावाद्विरोधिहेत्वन्तराभावाच्च । तथा सुबालोपनिषदि 'अपानान्निषादा यक्षराक्षसगन्धर्वाश्चास्थिभ्यः पर्वता लोमभ्य ओषधिवनस्पतयो ललाटात्क्रोधजो रुद्रोऽजायत' इति । महोपनिषदि 'अथ पुनरेव नारायणः सोऽन्य कामं मनसा ध्यायीत त्र्यक्षः शूलपाणिः पुरुषोऽजायत'' । नारायणोपनिषदि "नारायणाद्रुद्रोऽजायत" इति । बृहदारण्यके 'ब्रह्म वा इदमग्र आसीत्तदेकं सन्नव्यभत् यान्येतानि देवक्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः'' इति । शतपथे चाष्टमूर्तिब्राह्मणे 'अभूद्वा इदमप्रतिष्ठे'-त्यारभ्य "भूतानां च प्रजापतिः संवत्सरायादीक्षत भूतानां पतिर्गृहपतिरासीदुषाःपत्नी'त्यादिकमुक्त्वा "भूतानां पतिस्संवत्सर उषसि रेतोऽसिञ्चत्संवत्सरे कुमारोऽजायत सोऽरोदीत् तं प्रजापतिरब्रवीत्कुमार किं रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसीति सोऽब्रवीदनपहतपाप्मा वा अहमनाहितनामा नाम मे धेहि पाप्मनोऽपहत्या इति तं प्रजापतिरब्रवीत् रुद्रोऽसीति तदस्य तन्नामाकरोदग्निस्तद्रूपमभवत् अग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः सोऽब्रवीज्ज्यायान्वा अहमस्मि धेह्येव मे नामेति तं प्रजापतिरब्रवीत् भवोऽसीति शर्वोऽसीति ईशानोऽसीति पशुपतिरसीति उग्रोऽसीति भीमोऽसीति महादेवोऽसीति" इति। अत्र 'प्रजापतिः संवत्सरो महान् क' इति संवत्सरशब्दवाच्यतया प्रसिद्धचतुर्मुखसृष्टत्वादनपहतपाप्मत्वतद्वचसंज्ञामूर्त्यष्टको रुद्रः प्रतीयते। शैलालिब्राह्मणे चतुर्मुखाद्रुद्रोत्पत्तिः श्रूयते। साम्नि च "विरूपाक्षाय दन्ताञ्जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्माधिपतये" इति ब्रह्मपुत्रत्वं रुद्रस्य प्रतीयते । चतुर्मुखस्य नारायणात्मकत्वाद्रुद्रस्य नारायणसृष्टत्वश्रुतिश्चाविरुद्धा। 'क इमामसिष्यतीति रुद्र इत्यब्रवीद्रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति' तस्मात् रुद्रः पशूनामधिपतिरिति देवतावरदानलब्धपशुपतिभावः प्रतिपाद्यते, तथा "अस्य देवस्य मीढुषो वाव विष्णोरेतस्य प्रमुदे हविर्भिः

* भावप्रकाशिका *

ब्राह्मणं समन्वयसूत्रे उदाहृतम् । 'अस्य देवस्य मीढुष' इति । अस्य विष्णोः, देवस्य दीप्तस्य एषस्य एषणीयस्य सर्वैः स्वामित्वेनापेक्षणीयस्य, मीढुषः— सेढुं वा व शाखेति निरुक्तभाष्यम्, शाखा यथा तथा विष्णोस्तरुस्थानीयस्य शाखास्थानी-

* श्रुतप्रकाशिका *

विधेहि रुद्रियं महित्वम्" इत्यनेन च पूर्वोदाहृतवचनानुग्रहात्स्वारस्याच्च भगवदाराधनबललब्धमहिमत्वं रुद्रस्यावगम्यते, अतश्चतुर्मुखसृज्यस्य भगवत्समाराधनलब्धमहिम्नो रुद्रस्य चतुर्मुखसृष्टत्वं युक्तम् । ननु परमकारणत्वं शिवशब्दवाच्यस्यैव श्रूयते "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" इति. न; तस्य भगवदसाधारण्यस्य बहूपनिषद्वाक्यैर्न्यायानुगृहीतैर्निश्चितत्वात् । किञ्च नारायणमहापुरुषादिशब्दानामसाधारणत्वात् बहूपनिषत्स्थत्वात् एकोपनिषद्यभ्यस्तत्वात्साधारणानामेकोपनिषत्स्थानां शिवादिशब्दानां तदनुरोधेन वर्णनीयत्वादिहाप्युपक्रमोपसंहारादिपर्यालोचनायां भगवत्प्रत्यभिज्ञापकबहुविशेषणदर्शनाद्विशेषतः पुरुषसूक्तैकार्थ्यावगमाच्च शिवरुद्रादिशब्दानामपि परमपुरुषपरत्वसिद्धेः 'रुद्रो बहुशिरा बभ्रु'रिति भगवति रुद्रशब्दः प्रयुक्तः । अग्नौ च 'रुद्रो भूत्वाऽग्निरनूत्थायाध्वर्युं च यजमानं च हन्या"दिति प्रयुक्तः, 'शिवः शिवानामशिवोऽशिवानां' शिवास्ते सन्तु पन्थानः' शिवमस्त्वि"ति। विशेषतो भगवति च 'शाश्वतं शिवमच्युत'मिति शिवशब्दः प्रयुक्तः । पुंल्लिङ्गैकवचनान्तस्त्वसाधारण इति चेत्तर्हि प्रातिपदिकसाधारण्यमनुज्ञातं भवति, पुंल्लिङ्गैकवचनान्तोऽप्यसाधारणो न भवति, तादृशस्याप्यर्थान्तरपरत्वशक्त्यनपगमादरुणः कपिल इति शब्दवत्. न हि तौ रविसारथिमुनिविशेषासाधारण्यादर्थान्तरप्रत्यायनशक्तिविधुरौ भवतः। नैवं नारायणमहापुरुषादिशब्दा अन्यत्र प्रयुक्ताः, 'महादेवं वा महापुरुषं वाऽर्चये'दिति देवताविशेषविषयो हि प्रयोगः। पुरुषशब्दोऽपि स्वतो

* भावप्रकाशिका *

यो रुद्रः, प्रभुदे– यज्ञे रुद्रकर्तृके, हविर्भिः रुद्रियं महित्वं विदधे लब्धवानित्यर्थः। (महापुरुषं वार्चयेदितीति) यद्यपि 'वेदाहमेतं पुरुषं महान्त'मित्यत्र महापुरुषशब्दो न प्रयुक्तः, तथापि महच्छब्दसमानाधिकरणपुरुषशब्दोसाधारण इति भावः । ननु यथा 'नारायणाद्ब्रह्माऽजायत' इति श्रुत्या ब्रह्मजनकत्वस्य नारायणचिह्नत्वनिश्चयः तद्वदिहापि रुद्रो महर्षिर्हिरण्यगर्भं जनयामास' इति श्रुत्या हिरण्यगर्भजनकत्वस्य रुद्रचिह्नत्वनिश्चयोऽस्त्वित्याशङ्क्य प्रतिबन्धकसदसद्भावाभ्यां वैषम्यमाह (नचानयैव श्रुत्येति) ननु नारायणाद्ब्रह्माजायत इत्यत्रापि ईदृशोन्योन्याश्रयस्सुवचः, नच प्रतिबन्धकसदसद्भावाभ्यां विशेष इत्युक्त इतिवाच्यम्; तर्हि

* श्रुतप्रकाशिका *

भगवद्विषयः, 'पुरुषो वै रुद्र' इत्यप्यस्तीति चेत्. सत्यम्, स च भगवद्विषय एव, 'सर्वो वै रुद्र' इत्यस्योपपादनाय रुद्रस्य पुरुषात्मकत्वपरत्वाद्वाक्यस्य 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इतिवत्, अतो हिरण्यगर्भकार्यतया श्रुत्यन्तरसिद्धस्य तज्जनकत्वायोगः। किञ्च न केवलमनुवादरूपत्वादस्मिन्वाक्ये रुद्रशब्दस्य भगवद्विषयत्वनिश्चयः, किन्तु हिरण्यगर्भजनकत्वविशेषितत्वाच्च तस्य भगवद्विषयत्वनिश्चयः, तज्जनकत्वस्य नारायणचिह्नत्वात्, यथा "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" इति परमपुरुषस्य नामरूपनिर्वोढृत्वश्रवणात् "आकाशो ह वै नामरूपयोर्निर्वहिते"त्यत्र आकाशशब्दस्य भगवद्विषयत्वनिश्चयः तद्वत्। न चानयैव श्रुत्या हिरण्यगर्भजनकत्वं रुद्रचिह्नमिति शङ्कनीयम्, हिरण्यगर्भजनकताया रुद्रचिह्नतानिश्चयस्य हिरण्यगर्भजन्यत्वश्रुतिप्रतिबद्धत्वात् भगवतो हिरण्यगर्भजन्यत्वश्रुत्यभावेन तज्जनकतायास्तच्चिह्नतानिश्चयस्यानपवादत्वाच्च। अस्य वाक्यस्य रुद्रपरत्वनिश्चये सति हिरण्यगर्भजनकत्वस्य रुद्रचिह्नत्वनिश्चयः, तन्निश्चये सति अस्य वाक्यस्य रुद्रपरत्वनिश्चय इत्यन्योन्याश्रयश्च, अनुवादरूपत्वाच्च रुद्रपरत्वानिश्चय इत्युक्तम्। किञ्च कार्य्यभूतस्य विश्वाधिकत्वायोगाद्विश्वाधिकत्वविशेषितरुद्रशब्दस्य विशोकत्वोपलक्षितसत्यकामत्वादिविशेषितस्य 'तत्राऽपि दहं गगनं विशोकः 'दहरोऽस्मिन्नन्तर आकाश' इत्यादिवाक्यस्थगगनादिशब्दस्येव प्रसिद्धार्थपरत्वाभावेन भगवत्परत्वं सिद्धम्। नन्विदमिष्टं रुद्रशब्दस्य कार्य्यव्यवच्छेदेन कारणरुद्रपरत्वम्, सत्यम्; स तु परमपुरुष एव, तस्यैव परमकारणत्वात्। ननु रुद्र एव कारणावस्थः प्रतिपाद्यत इति चेदिन्द्र एव वा आकाश एव वा कारणावस्थः तत्तद्वाक्यप्रतिपाद्यः किं न स्यात्? इन्द्रादेः प्रसिद्धस्यैव परमकारणावस्थासद्भावे मानान्तराभावादिति चेत्, तत एवात्राऽपि प्रसिद्धस्यैव परमकारणत्वासिद्धिरिति तुल्यम्; शिवादिशब्दानां विशेषोपस्थापनाक्षमत्वमुक्तम्, अतोऽस्य वाक्यस्य भगवद्विषयत्वं सिद्धम्। यद्यपि कल्पभेदेन हिरण्यगर्भजनकत्वेऽपि रुद्रस्य, न भगवतः परमकारणत्वविरोधः, तथाऽपि न्यायपर्यालोचनायां नारायण-

* भावप्रकाशिका *

स एव दोषः, न त्वन्योन्याश्रयः। न ह्यस्य वाक्यस्य रुद्रपरत्वनिश्चयो हिरण्यगर्भजनकत्वस्य रुद्रलिङ्गत्वनिश्चयाधीनः, रुद्राभिधानश्रुत्यैव तत्परत्वस्य निश्चेतुं शक्य-

* श्रुतप्रकाशिका *

परत्वं रुद्रशब्दस्य युज्यत इति प्रतीयते । किञ्चास्यामप्युपनिषदि 'प्रथमद्वितीयखण्डयोः 'देवात्मशक्तिम्' प्रेरितारं च मत्वा' व्यक्ताव्यक्तं भरते विश्वमीशः, यदात्मतत्त्वेन तु ब्रह्म तत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् 'ज्ञात्वा देवम् 'एको हि देवः प्रदिशोऽनु सर्वाः' इति देवात्मप्रेरित्रीशब्रह्मशब्दैः परमात्मा निर्दिष्टः, ते च 'दिव्यो देव एको नारायणः 'विश्वं नारायणं देवमक्षरं परमं प्रभुम् 'आत्मा नारायणः परः 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ईशः सर्वस्य जगतः 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'' इत्यादिवाक्यप्रतिपन्ननारायणप्रत्यभिज्ञापकाः, अत्रेशशब्दश्च न रूढः प्रयुक्तः, किन्तु योगात्, 'अनीशश्चात्मा' 'द्वावजावीशनिशौ' ईशः सर्वस्येति निर्देशस्य सप्रतिसम्बन्धितया अवयवार्थविवक्षाज्ञापकत्वात् । 'अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ते'त्यत्रानन्तशब्दस्तु योगरूढः, रूढ्यविवक्षानिमित्तसप्रतियोगिकनिर्देशाभावात् । तृतीये च 'य एतद्विदुरमृतास्ते भवन्ति' इत्यनेन 'अम्भस्यपार' इत्यनुवाकः प्रत्यभिज्ञाप्यते । स हि परमपुरुषविषयः, एवमुपक्रमो भगवत्परः । 'एको हि रुद्र' इत्यस्यानन्तरं 'विश्वतश्चक्षुरुत विश्वतो मुखः' इत्यादिमन्त्रश्च भगवत्प्रत्यभिज्ञापकः, तस्य विद्युद्वर्णपुरुषविषयत्वात् । 'द्यावापृथिवी जनय'न्निति च 'शीर्ष्णोद्यौस्समवर्त्तत पद्भ्यां भूमि'रितिवाक्यप्रत्यभिज्ञापकम् 'यो देवाना'मितिवाक्यमनुवादरूपमिति स्फुटम् । कार्यस्य परमकारणत्वायोगाद्रुद्रशब्दस्य कार्य्यरुद्रव्यतिरिक्तविषयत्वे सति वाक्यस्यानुवादरूपतया योग्यार्थप्रापकवाक्यानुगुणमत्रत्यभगवदसाधारणविशेषणानुगुणं च भगवद्विषयत्वनिश्चयः । 'या ते रुद्र शिवा तनू'रित्यतोऽनन्तरं 'ततः परं ब्रह्म परं बृहन्त'मिति वाक्यं च 'नारायणः परं ब्रह्मे'ति महोपनिषत्प्रत्यभिज्ञापकम् । 'ईशं तं ज्ञात्वा अमृता भवन्ती'त्यत्र ईशशब्दः पूर्ववद्यौगिकः, वैरूप्यायोगाद्वेदाहमेतमित्यनन्तरवाक्यस्थैतच्छब्दश्च पूर्वरुद्रशब्दवाच्यस्य महापुरुषतामवगमयति, प्रकृतपरामर्शित्वात् । 'ततो यदुत्तरतर'मिति वाक्यन्तु 'परमतस्सेतून्माने'त्यत्र उपपादयिष्यते । सर्वाननशिरोग्रीवत्वञ्च पुंसूक्तार्थ-

* भावप्रकाशिका *

त्वात्, इतरथा नारायणाद्ब्रह्माजायत इत्यत्राप्यगतेरित्यस्वरसादाह ( अनुवादरूपत्वाच्चेति ) ( देवात्मप्रेरित्रीशब्रह्मशब्दैरिति ) उत्तरत्र प्रेरितृशब्दप्रत्यभिज्ञाप्यश्रुतिर्न दृश्यते, तथाप्यन्तरोयमयत इत्यादिसौबालादिवाक्यं द्रष्टव्यम् । ( तृती-

* श्रुतप्रकाशिका *

स्मारकम्, सर्वव्यापिपदन्तु 'सर्वं व्याप्य नारायणः स्थित' इत्येतत् स्मारयति । भगव-च्छब्दस्तु 'भगवान् पवित्रं वासुदेवः पवित्रं 'भगवान् वासुदेवः परा प्रकृतिः 'परं पवित्रं भगवान् वासुदेवः 'ये भगवन्तं वासुदेवमेवं विदु'रिति वासुदेवासाधारणः। अत एव हि स्मर्यते "एवमेष महाशब्दो मैत्रेय भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः" इति। सत्त्वप्रवर्तकत्वं भगवत इति स्फुटम्, "यो ह खलु वा अस्य सात्विकोंऽशः सोऽसौ ब्रह्मचारिणोयोऽयं विष्णु"रिति मैत्रायणीयश्रुतेः। अन्तरा-त्मत्वं च तथा सुबालोपनिषत्प्रत्यभिज्ञापकत्वात्। 'हृदा मनीषे'ति तु विद्युद्वर्णपुरुषस्मा-रकम्। अथ 'सहस्रशीर्षे'त्यादिमन्त्रद्वयमेवाधीतम्, ईशानपदं तु नपुंसकत्वाद्यौगिक-मेव, न तु रूढम् ; पुंल्लिङ्गताप्रसङ्गात्। 'सर्वस्य शरणं सुहृ'दिति 'माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः" इति श्रुतिप्रत्यभिज्ञापकम् । 'तमाहुरग्र्यं पुरुषं महान्त'मिति महापुरुष एव स्पष्टमुक्तः । धातृशब्दमपि महापुरुष-शब्देनैकार्थयति 'अणोरणीया'निति। चतुर्थे च "द्वा सुपर्णे"त्यादिमन्त्रद्वयं मुण्डोपनिषदैकार्थ्यात्परमपुरुषपरत्वज्ञापकम् । अतः 'मायिनं तु महेश्वर'मिति महेश्वरशब्दो मायाप्रेरकत्वपरः, 'सर्वलोकमहेश्वरम्' 'क्षीरोदस्योत्तरं तीरं जग्मुर्लोक-हितार्थिनः । इतस्तद्वारम्" इत्यारभ्य 'वाक्यं खस्थो महेश्वर" इत्यादिषु यौगिको महेश्वरशब्दो भगवति प्रयुक्तः। 'यस्मिन्निदं सञ्चविचैति सर्वे'मिति प्रकृतस्य सर्वस्य नियन्तृत्वमीशानशब्देनोच्यते । पूर्वम् 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मे'त्युक्तत्वात्तत्र 'ईशानो भूतभव्यस्ये'ति ईशनस्य प्रतिसम्बन्ध्यभिधानेन रूढिविरहावगमात्, भूतभ-

॥ भावप्रकाशिका ॥

येचेति ) खण्ड इति शेषः । ( ईशानपदं त्विति ) 'सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्' इत्यत्र श्रुतमीशानपदमित्यर्थः। ( मायाप्रेरकत्वपर इति ) यौगिकार्थपर-इत्यर्थः । मायाप्रेरके प्रयुज्यमानो महेश्वरशब्दो यौगिक एव. नारायणस्यैव सुबा-लोपनिषत्प्रतिपाद्यतमोधिष्ठातृत्वेन श्रवणादिति भावः। ( ईशानशब्देनोच्यत इति ) 'येनेदं सञ्चविचैति सर्वं तमीशानं वरदं देवमीड्यम्' इति हि श्रुतिः। तमीशा-नमित्यत्रेशानप्रतिसम्बन्ध्याकाङ्क्षायां यस्मिन्निदमिति पूर्ववाक्यनिर्दिष्टस्यैव सर्वस्य प्रतिसम्बन्धितया ग्रहणमिति भावः। ( तत्रेशानो भूतभव्यस्येति ) यद्यपि श्वेता-श्वतरे 'अङ्गुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये सन्निविष्टः। हृदा मनीषा

* श्रुतप्रकाशिका *

व्यशब्दनिर्दिष्टस्य इह सर्वशब्देन प्रतिपन्नत्वाच्च । "य ईशोऽस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम" इत्यनेन 'हिरण्यगर्भ' इत्याद्यष्टर्चतुल्यविषयत्वं प्रतीयते , तच्च भगवत्परमित्युपपादितम्, एवं भगवत्परानेकोपनिषदैकार्थ्यप्रतीतेः 'ज्ञात्वा शिवम्' 'शिव एव केवलः' इति शिवशब्दद्वयं तत्परमेव। मुहुरभ्यस्यमानस्यापि शिवशब्दस्य रूढार्थत्याग आकाशशब्दस्येवोपपन्नः, 'आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायण'मिति ह्याकाशशब्दोऽभ्यस्तः । किञ्च 'सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः' इत्ययं शिवशब्दः प्राकरणिकशिवशब्दानां माङ्गल्याभिप्रायत्वमेव दर्शयति, सर्वगतत्वेऽपि भगवच्छब्दवाच्यत्वान्निर्दोष इति हि तस्यार्थः, अन्यथा सर्वव्यापिसर्वगतशब्दयोः पुनरुक्तिप्रसङ्गात् । 'तदक्षरं तत्सवितुर्वरेण्यं ध्रुव'मित्यनेन 'अक्षरं परमं प्रभुम्' 'एतत्सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धामे'ति श्रुतिद्वयैकार्थ्यमवगम्यते । 'हृदा मनीषे'ति वाक्यं 'नैनमूर्द्ध्व'मित्यादिमन्त्रद्वयं च मध्यगतवाक्यस्थशिवशब्दस्य परमपुरुषविषयत्वं ज्ञापयति, तद्धि वाक्यत्रयं समुद्रान्तर्वर्तिविद्युद्वर्णपुरुषविषयम्; अतः 'मानस्तोक" इति मन्त्रस्थरुद्रशब्दोऽप्यवयवशक्त्या अपर्यवसानाद्वा भगवद्विषयः, अतः पञ्चमेपि 'भावाभावकरं शिव'मिति शिवशब्दो व्याख्यातः । षष्ठे च कालस्यापि परिच्छेदकः काल उक्तः । भगेशम्— ऐश्वर्यादीनां षण्णामीशम् । ऐश्वर्यादिनिर्वाहकत्वस्य निरङ्कुशत्वमेवोक्तं 'तमीश्वराणां परमं महेश्वर'मिति । महेश्वरमिति यौगिकनिर्देशः, न तु रूढार्थपरः । वाक्यस्यैश्वर्यपारम्यप्रतिपादकत्वादीश्वराणामिति प्रतिसम्बन्धिनिर्देशाच्च, देवतानां परमं दैवतं पतीनां परमं पतिमित्यनन्तरनिर्देशवत् । तद्धि वाक्यं दैवतत्वपतित्वपारम्यपरम् , तत्र दैवतपतिशब्दौ न क्वचिद्देवताविशेषे रूढौ, महेश्वरशब्दश्च तत्स्थानीय इति स्फुटम्। 'न तत्समश्च' परास्य शक्ति'रि-

छ भावप्रकाशिका छ

मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति' इत्येव पाठः, न तत्रेशानशब्दोऽस्ति तथा कठवल्ल्यामेतद्वाक्यप्रत्यभिज्ञाप्याङ्गुष्ठमात्रवाक्ये प्रतिसम्बन्ध्युपादानेन ईशानपदस्य योगार्थपरत्वमिति भावः । ( इह सर्वशब्देनेति ) येनेदं सञ्चविचैति सर्वमितिवाक्य इति भावः । (कालस्यापि परिच्छेदक इति) ततश्च 'यः कालकालः'

* श्रुतप्रकाशिका *

त्यादिभिश्च तत्पारम्योपपादनम् । 'एको देव' इत्यादिवाक्यस्थविशेषणानि च नारायणप्रत्यभिज्ञापकानि । 'गूढोत्मा न प्रकाशते' व्याप्य नारायणः स्थितः' 'सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो एको नारायणः ' इत्याद्यैकार्थ्यात् । 'न तत्र सूर्यो भाति ' इति मन्त्रश्च मुण्डकोपनिषत्कठवल्ल्यधीतत्वात् विष्णोः प्रत्यभिज्ञापकः 'नान्यः पन्था' इति पुंसूक्तं स्मारयति । ईशादिशब्दानां यौगिकत्वमीशनस्य निरुपाधिकत्वं दर्शयति 'स ईशोऽस्ये'ति । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह शरणमहं प्रपद्ये अमृतस्य परं सेतु'मिति निर्देशाश्च नारायणत्वसाधकाः, य इत्यनुवादरूपत्वात् ब्रह्मणो भगवन्नाभिसम्भवत्वश्रुतेर्दर्शितत्वात् 'निवासः सुहृद्गतिः नारायण' इति श्रुतत्वात् 'अमृतस्यैष सेतु'रिति मुण्डोपनिषदि श्रुतत्वाच्च । 'यदा चर्मव'दितिवाक्यमुपायान्तराभावपरं 'नान्यः पन्था' इत्युक्तार्थविवरणरूपम् ; एवमुपक्रमोपसंहारादिभिः भगवत्परत्वावगमादस्या उपनिषदो भगवत्परत्वं सिद्धम् । ननु महापुरुषादिशब्दानां शिवादिशब्दसमभिव्याहृतानां शिवपरत्वं स्यात्, सत्यम् ; यद्येकविषयत्वमिष्टं शब्दानाम्, इष्टं तत्, ते हि शब्दा एकविषयाः । यदि परमपुरुषेतरविषयत्वम्, न, साधारणस्यायोग्यार्थस्य च शब्दस्य योग्यार्थसाधारणबहूपनिषत्स्थशब्दोपस्थापितविशेषपर्यवसानं हि युक्तमिति भिदा । न हि छागशब्दः पशुमात्रे पर्यवस्यति, न च परमात्मादिशब्दः प्रसिद्धाकाशे पर्य्यवस्यति, योग्यत्वायोग्यत्ववैषम्यन्तु विशदयिष्यतेऽनन्तरमेव, अतः परमपुरुषविषयत्वमुपनिषदः स्थितम् । एवमीश्वरमहेश्वरपुरुषमहापुरुषादिशब्दानां भगवद्विषयत्वात् प्रपदनोपदेशशिरस्कत्वाच्चास्या उपनिषदो भगवद्गीतैकार्थ्यं स्फुटतरम् । यत्तु कैश्चिज्जल्पितम् ; सोपपदनिरुपपदपुरुषशब्दवाच्यात्तथाविधेश्वरवाच्यस्य प्रकर्ष इति. तदतिक्षुद्रम्, तथा सोपपदनिरुपपदेन्द्रशब्दवाच्यस्यात्यन्तप्रकर्षप्रसङ्गात् । 'इदि परमैश्वर्ये ' इति धातोर्हीन्द्रशब्दनिष्पत्तिः । "इन्द्रो महेन्द्रः सुरनायको वा" इति हि प्रसिद्धिः । श्रुत्यादिविरोधे समाख्यादौर्बल्यात् सृज्यतया संहार्य्यतया चावगतस्येन्द्रस्य सर्वस्मात्परत्वमनुपपन्नमिति चेत् तुल्यम् । किञ्च जीवविषयपुरुषशब्दो निकृष्टार्थविषय इति परमात्मनः पुरुषशब्दवाच्यत्वं न निकर्षाय भवति । न ह्यात्मशब्दो जीवेऽपि प्रयुक्त इति परमात्मन आत्मशब्दवाच्यतया निकर्षः स्यात् । न हि हरिशब्दो मण्डूकवाचीति हरिशब्दवाच्यतया सिंहस्य

* श्रुतप्रकाशिका *

मण्डूकसाम्यमिन्द्रस्यादित्यस्य वा तदुभयसाम्यं भगवतो वा तैः साम्यं भवतीति ॥ अथर्वशिखायाञ्च " कारणं तु ध्येयः सर्वैश्वर्य्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः" इति प्रतिपाद्यमानं धेयत्वं परमपुरुषसाधारणधर्मान्तराश्रवणात् प्रसिद्धशम्भुविषयम्—इति न शङ्कनीयम्; कारणत्वस्य तदसाधारण्यादेव तद्व्याप्तस्य मुमुक्षुध्येयत्वस्यापि तदसाधारणत्वात् । किञ्चास्य प्रकरणस्य 'कश्च ध्येय' इत्युपक्रम्य 'कारणं तु ध्येय' इत्यनेन कारणत्वमनूद्य ध्येयत्वविधिपरत्वावगमात् पुरुषसूक्तादिप्रतिपन्नस्यैव परमात्मनो ध्येयत्वविधानपरमिदं वाक्यम् । न च शम्भुः कारणमिति वाक्यवृत्तिः, किन्तु कारणं शम्भुर्ध्येय इति, अन्यथा 'कश्च ध्येय' इत्यस्योत्तरत्वायोगात्. शम्भुशब्दस्यासाधारण्येऽप्याकाशप्राणादिशब्दवत्परमात्मपरत्वं न्याय्यम् ; न चायमसाधारणः, 'शम्भुः स्वयम्भूर्द्रुहिण' इति नामपाठात् । तथा नारदीयपुराणे रुक्माङ्गदचरिते ब्रह्माणं प्रति यमवचने "शृणु मे वचनं शम्भो पितामहपितामह । मरणादधिकं देव यत्प्रतापस्य खण्डनम्" इति, तत्रैव " तमेव देवताश्रेष्ठ सम्प्राप्ते हरिवासरे । यदि चालयसे धैर्यात्ततोऽहं तव किङ्करः । स मे शत्रुर्महान् शम्भो तेन लुप्तः पदो मम" इति द्रुहिणविषयतया प्रयुक्तत्वात् "विश्वाक्षं विश्वशम्भुवम्" इति भगवत्यपि श्रौतप्रयोगाच्च । 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्त' इत्युत्पत्तिवादश्चानुवादरूपत्वात् प्रापकवाक्यानुरोधीति भगवदुत्पत्तिरवताररूपाऽनूद्यते । भगवता सूत्रकारेणैव अथर्वशिखावाक्यस्थस्य शम्भुशब्दस्य भगवद्विषयत्वमुत्पत्तेरवताररूपत्वञ्च उपबृंहितम् " इति नारायणः शम्भुर्भगवान् जगतः प्रभुः । आदिश्य विबुधान् सर्वानजायत यदोः कुले " इति । अवतारवचने शम्भुशब्दस्य नारायणविषयदर्शनात्पूर्ववाक्यप्रतिपन्नस्य भगवज्जन्मनोऽवताररूपत्वं शम्भुशब्दस्य भगवद्विषयत्वं च हि दर्शितम् । ईशानशब्दश्च यौगिकः कारणविशेषणम्, 'सर्वस्येशान' इति श्रुत्यन्तरे सप्रतियोगिकनिर्देशादिहापि तत्प्रत्यभिज्ञानात् प्रयोगसाधारण्याच्च । मोक्षधर्मे हि "तस्मात्प्रसूतो यः कर्ता कार्यं कारणमेव च । सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मसु" इति भगवति प्रयुज्यते, तत्र भगवद्वचनेन " नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् । ऋते मामेकमीशानं पुरुषं लोकजीवन'मिति च प्रयुक्तः । ननु न कारणं विशेष्यम्, किन्तु शम्भुरेव. कारणशब्दस्तु तद्विशेषणम्, अन्यथा 'कारणं तु ध्येयं' इति पुँल्लिङ्गानुपपत्तेः । सत्यम्, शम्भुशब्दो विशे-

* श्रुतप्रकाशिका *

व्यसमर्पकः, ततः किं? प्रसिद्धशम्भोर्ध्येयत्वसिद्धिरिति चेन्न; कारणशब्दस्य कार्य्य-शम्भुव्यावर्त्तकत्वात्। न च कारणत्वादिति हेतुगर्भता कल्प्या, कार्य्य-त्वस्य श्रुतिसिद्धत्वात् भगवतः प्रसूयन्त इति उत्पन्नत्वेऽस्य वाक्यस्यानु-वादरूपत्वात् अनुवादस्य प्रापकानुरोधित्वादुत्पत्तिप्रापकवाक्येषु चाकर्महेतुकत्वे-नातत्फलार्थत्वेन च विलक्षणतया भगवज्जन्मनस्स्वेच्छाकृतस्य निरङ्कुशैश्वर्य्या-विरोधित्वादजहत्स्वभावतया विचित्रैश्वर्योद्दीपकत्वाच्च परमकारणत्वाप्रच्युतेः। स्वपारतन्त्र्यावहकर्त्रन्तराभावो हि परमकारणत्वम्। "न चास्य कश्चिज्ज-निता न चाधिप" इति हि श्रुतिः। अवतारवैलक्षण्यं च "अजायमानो बहुधा विजायते" इति प्रतिपाद्यते। अजायमान इति सांसारिकवज्जन्मनिषेधः, न स्वरू-पनित्यत्वपरः, नापि जन्ममिथ्यात्वपरः, अस्मदेहादेरपि स्वरूपनित्यत्वादेरविशिष्ट-तया 'तस्य धीराः परिजानन्ति योनि'मितिवाक्यस्य निरर्थकत्वप्रसङ्गात्। इदञ्च स्पष्टमुच्यते "येन सूर्य्यस्तपति तेजसेद्धः पिता पुत्रेण पितृमान्योनियोनौ। नावेद-विन्मनुते तं बृहन्तं सर्वानुभूमात्मानं साम्पराये। एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्। तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन" इति योनियोनावित्यनेन परिजानन्ति योनिमिति श्रुतिः प्रत्यभिज्ञायते। 'येन सूर्यस्तपती'त्यनेन "तस्य भासा सर्वमिदं विभाति" इति मुण्डोपनिषत्, सा हि परमपुरुषपरा। 'नावेदविन्मनुते तं बृहन्तमित्यनेन "वेदाहमेत'मिति, "धीराः परि-जानन्ती"ति श्रुतिः। 'पदवि'दिति पदशब्देन "तत्ते पदं सङ्ग्रहेण ब्रवीम्योमिति" "तद्विष्णोः परमं पद'मिति कठश्रुतिः "न कर्मणे'त्यनेन "अपहतपाप्मा दिव्यो देव एको नारायण" इति वाक्यञ्च; अत इदं वाक्यं भगवद्विषयम्। पुत्रेण—स्वकार्य्य-भूतेन दशरथादिना पितृमत्त्वं तस्यावेदविदवेद्यत्वं तदवतारस्य अकर्ममूलत्वम् तज्ज्ञानवतां भवभयध्वंसश्च ह्यत्र प्रतिपाद्यते ईदृशजन्मानुवादश्च ध्यानविध्युपयोगी इतरसज्यसजातीयतया अवतीर्णस्योपासकसौलभ्यज्ञापनार्थत्वात्; एवमत्र प्रतिपन्न-स्य भगवज्जन्मनः स्वेच्छावताररूपत्वादेव हि यदोः कुले जायमानो नारायणः शम्भु-शब्देन महाभारते विशेष्यते। नन्वेवं सति ब्रह्मादीनामपि जन्म स्वेच्छावतार-

* भावप्रकाशिका *

इत्यन्धकरिपुर्नोच्यत इति भावः। (योनियोनाविति) प्रतियोनीत्यर्थः। (विभ-

* श्रुतप्रकाशिका *

रूपं किं न स्यात्? न, प्रापकवाक्यानुरोधित्वादनुवादस्य। कुतस्तेषां जन्मनः कर्ममूलत्वावगमः? उत्पत्तिश्रुतेरेव। उत्पत्तिश्चेत्कर्ममूलेत्यौत्सर्गिकम्. भगवतस्तु अवतारश्रुत्या तदपोदितम्। अपवादाभावेऽप्यकर्ममूलत्वाश्रयणे सतीन्द्रादिजन्मनोऽप्यवतारत्वप्रसङ्गः, ब्रह्मादीनामिन्द्रादीनाञ्च जन्मनि विशेषाश्रवणादुत्पत्तिवदन्यत्रापि क्वचिद्भगवत इवाकर्मवश्यत्वाश्रवणाच्च "हिरण्मयः पुरुषः" "एष हि सर्वेभ्यः पाप्मभ्य उदितः' 'अपहतपाप्मा दिव्यो देव एको नारायणः' 'अपहतपाप्मा स उत्तमः पुरुषः' इति हि भगवतोऽकर्मवश्यत्वं श्रूयते। तदैक्याद्ब्रह्मादीनामकर्मवश्यत्वमिति चेन्न; इन्द्रादीनामपि तथात्वप्रसङ्गात्. ऐक्ये सति अकर्मवश्यत्वम्, कर्मवश्यत्वरूपभेदकधर्माभावे सत्यैक्यमित्यन्योन्याश्रयश्च, भगवतोऽकर्मवश्यत्वं तु स्वप्रकरणसिद्धमिति नान्योन्याश्रयः। एवमुत्पत्तिप्रापकवाक्यसिद्धं भगवतोऽजायमानस्य जायमानत्वरूपं ब्रह्मादिभ्यो वैलक्षण्यमत्रैवोच्यते 'न कारणं कारणाना'मिति। न प्रसूयत इति विभक्तिविपरिणामेनानुषङ्गः। कारणानां कारणस्य भगवतो न ब्रह्मादिवदुत्पत्तिरित्यर्थः। 'शिव एको ध्येय' इत्यत्राप्येकशब्दः प्राधान्यपरः, 'किमेकं दैवत'मितिवत्। न ह्येकत्वसङ्ख्याश्रयदेवताप्रश्नः, प्रश्नवैयर्थ्यात्. तस्माच्छाश्वतं शिवमितिवत् समाभ्यधिकरहित इति शिवो विशेष्यते, तेन प्रसिद्धशिवव्यावृत्तिः, अतोऽथर्वशिखायामपि भगवत एव ध्येयत्वं प्रतिपादितम्। यतो हिरण्यगर्भप्रजापतिधातृस्वयंभ्वादय ईशानशम्भुरुद्रमहादेवमहेश्वरपरमेश्वरादयश्च कारणविषयाः शब्दा अवयवशक्त्या वा अपर्यवसानाद्वा नारायणपरा इति युक्तम्। अत एव हि भगवान् सूत्रकार एव भगवति तान् शब्दान् महाभारते प्रायुङ्क्त, यथा "हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः' इति। कृष्णं प्रति द्रौपदी "पूर्वे प्रजानिसर्गे त्वामाहुरेकं प्रजापतिम्' इति।

❀ भावप्रकाशिका ❀

क्तिविपरिणामेनानुषङ्ग इति ) कारणानां कारणं धाता स्रष्टा ध्याता आदिसर्गसङ्कल्पकर्ता न प्रसूयत इति योजनेति भावः। (न ब्रह्मादिवदुत्पत्तिरित्यर्थ इति) ननु ब्रह्मविष्णुरुद्रास्ते सर्वे सम्प्रसूयन्ते कारणं कारणानां धाता ध्यातेतिवाक्ये ब्रह्मविष्णुरुद्रेन्द्राणामुत्पत्तिसत्त्वाद्ध्येयत्वं प्रतिक्षिप्य कारणानां कारणस्य ईशानशम्भुशब्दितस्य प्रसूतिराहित्याद्ध्येयत्वं प्रतिपाद्यत इति वाक्यतात्पर्यं वक्तव्यम्; नैतत्सिद्धान्तिन उपपद्यते, ब्रह्मरुद्रमध्यपठितस्य विष्णोः ध्येयत्वप्रतिक्षेपकस्य सिद्धान्त्यनभि-

* श्रुतप्रकाशिका *

मोक्षधर्मे 'एकस्तद्वेद भगवान् धाता नारायणः स्वय'मिति । आश्वमेधिके 'विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुः' इति च स्वयम्भूर्विष्णुरेव चतुर्मुखोत्पत्तेः प्राचीनतत्त्वसृष्टौ प्रभुर्भवति, न चतुर्मुखादिरित्यर्थः । "सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मसु' इति 'इति नारायणः शम्भुर्भगवान् जगतः प्रभुः । आदिश्य विबुधान् सर्वान् अजायत यदोः कुले' इति 'रुद्रो बहुशिरा बभ्रुः' तथा 'नमश्चकार हृष्टात्मा परमं परमेश्वरम् । जगाद जगतां स्रष्टा परमं परधर्मवित्' इत्यारभ्य 'वासुदेव तदेतत्ते मया गीतं यथातथ'मिति । 'जय विश्व महादेव जय लोकहितेरत' इत्यारभ्य "नारायण सुदुष्पार! जय शार्ङ्गधनुर्धर" इति । "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" इति च 'ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन्" इत्यारभ्य "ते कार्त्तयुगधर्माणो भागाः परमसत्कृताः । प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् । बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम् । ततोऽथ वरदो देवस्तान् सर्वानमरान् स्थितान् । अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः" इति च ॥ अथर्वशिरसि च रुद्रस्यैव सर्वात्मभावादय उच्यन्ते, परमपुरुषासाधारणलिङ्गाभावात् । सर्वात्मभावादयस्तु समस्तचिदचिद्व्यावर्तका अपि न तदसाधारणाः, अतो रुद्रस्यैते सम्भवन्ति; अत एवात्र प्रतर्दनविद्यान्यायोऽपि नावतरति, प्रसिद्धेन्द्रस्य क्षेत्रज्ञस्य चिदचिद्व्यावर्त्तकधर्मान्वयायोगात्तत्र तच्छरीरकपरमात्मोपासनपरत्वमुक्तम्, न तु परमपुरुषासाधारणधर्मासम्भवात् । इन्द्रादीनामपि संहारादिकारणस्य रुद्रस्य चिदचिद्व्यावर्तकधर्मान्वयः सम्भवतीति स एव प्रतिपाद्यत इति न तच्छरीरकार्थान्तरपरत्वमिति शङ्कायामुच्यते; कारणत्वव्याप्तो यः कश्चिदपि चिदचिद्व्यावर्त्तकधर्मः परमपुरुषासाधारण इति स्थितत्वाद्रुद्रस्य तदसम्भवेन तच्छरीरकपरमात्मपरत्वमास्थेयम् । किञ्च रुद्रस्य सृ-

* भावप्रकाशिका *

मतत्वादिति चेन्न; त्रिमूर्तिमध्यस्थितस्य विष्ण्ववतारस्यं मुमुक्षुध्येयत्वं प्रतिक्षिप्य परवासुदेवमूर्तेः 'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् । समस्तशक्तिरूपाणि तत्करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया' इत्यादिप्रमाणप्रतिपन्नाया एव ध्येयतया विधिपरत्वादस्याः श्रुतेरिति द्रष्टव्यम् । (नतु परमपुरुषासाधारणधर्मासम्भवादिति) प्रतर्दन-

* श्रुतप्रकाशिका *

ज्यस्त्वादिश्रवणात्परमकारणत्वाभावश्च दर्शितः। संहार्य्यत्वं च 'न ब्रह्मा नेशानः'' इति। उपबृंहिता चेयं श्रुतिः श्रीविष्णुधर्मोत्तरे ''ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः। एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा। जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा। वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति वै'' इति। अतः कार्यकोटिनिविष्टस्य सर्वात्मभावाद्यसम्भवात्प्रतर्दनोपासनन्यायेन तच्छरीरकपरमात्मपरतयैव निर्वाहो युक्तः। न चात्र न्यायापेक्षा, परमात्मानुप्रवेशस्य कण्ठोक्तेः। तथा हि; 'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति सोऽब्रवीत् अहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं स प्राविशत्सोऽहं नित्योनित्यो ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्चोदञ्चोऽहमधश्चोर्द्ध्वं चाहं दिशश्च विदिशश्चाहं पुमानहमपुमान् स्त्री यक्षश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुप्जगत्यनुष्टुप् चाहम्'' इत्यादि; तत्र सर्वात्मभावमनुसन्दधतो रुद्रस्य बुद्धिस्थः परमात्मा स इति परामृश्यते। सः अन्नमयादेरन्तरात्मनो बुद्ध्यहङ्काररूपान्तःकरणवर्गात् अन्तरम् जीवात्मानम्, सः परमात्मा प्राविशत् दिक्छब्दोपलक्षितबाह्यचेतनानामन्तरं च जीवं सः परमात्मा प्राविशदिति तदनुप्रवेशः कण्ठोक्तः। ननु सोऽन्तरादित्यादिकं श्रुतिवाक्यम्, न तु रुद्रवाक्यम्; तस्येतिकरणेन समाप्तत्वादिति. न, सोऽहं नित्योनित्य इत्यादीनां रुद्रवाक्यानामनुगतिदर्शनेन रुद्रवाक्यापरिसमाप्तेः। तथा सति सोऽब्रवीदितिवाक्यान्तराध्याहारप्रसङ्गः, स चानध्याहारे सम्भवति नोपपद्यते। तदयमर्थः, देवतात्वेन साजात्येऽपि प्रभावातिशयदर्शनेन सन्देहाद्देवा अपृच्छन् को भवानिति। किमस्मदादिवद्देवतामात्रम्? उत परमकारणभूतः? इति प्रश्नाभिप्रायः। अहमेकमासमिति कारणत्वमुक्तम्। 'प्रथममासं वर्त्तामि च भविष्यामी'ति सर्वात्मभाव उक्तः, अन्वयमुखेनोक्तं

❀ भावप्रकाशिका ❀

विद्यायां हि चिदचिद्व्यावर्तकधर्मानन्वयेन तच्छरीरकपरमात्मपरत्वमुक्तम्, इह तु सार्वात्म्यस्य परमपुरुषासाधारणधर्मत्वप्रतिपादनमुखेन तद्धर्मानन्वयेन सिद्धान्तः क्रियते, नह्ययं न्यायस्तत्रोपन्यस्तः, येन गतार्थता स्यादिति भावः। (ननु रुद्रवाक्यमिति) ततश्च 'सोन्तरादन्तरं प्राविशत्' इतिश्रुतिवाक्ये तच्छब्देन रुद्र एव परामृश्यते, ततश्च तस्यैवान्तर्यामित्वमुच्यत इति भावः। (अहमेकमासमिति

* श्रुतप्रकाशिका *

व्यतिरेकेणोपपादयति नान्य इति। इतिर्हेतौ, मद्यतिरिक्ताभावादित्यर्थः। अयं सर्वात्मभावव्यपदेशः किं परमात्मत्वात्, उत परमात्मात्मकत्वात्? इति शङ्कायां परमात्मानुप्रवेशनिबन्धन इत्याह– सोऽन्तरादिति। स्वस्मिन् परमात्मानुप्रवेशस्य दृष्टान्ताभिप्रायेणेदमुक्तं दिशश्चान्तरमिति। यद्वा 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्युक्ते सर्वात्मव्यपदेशः कीदृश इत्याशङ्कायामाह– इतीति। इतिः प्रकारे, इत्थमित्यर्थः। विवक्षितं सर्वात्मत्वप्रकारमाह– सोऽन्तरादिति। यद्वा इतिशब्दस्योत्तरत्रान्वयः, दिशश्चान्तरं स प्राविशदितीति। यस्मात्परमात्मा प्राविशत् तस्मादस्मच्छरीरकपरमात्मनोऽन्यन्नास्तीत्यर्थः। अध्याहारादपि श्रुतपदस्यान्वयविशेषकल्पनं न्याय्यम्। अस्तु वा अयमितिशब्दः समाप्त्यर्थः, उत्तरत्र च सोऽब्रवीदित्यध्याहारस्सह्यताम्, तदानीमप्ययमर्थः, सः- रुद्रः देहेन्द्रियादेरन्तरात्– जीवादन्तरं परमात्मानं बुद्ध्या प्राविशदिति। यथा "यस्य यस्य हि यो भावः तेन तेन हि तं नरम्। अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्" इति। एवं 'मामुपास्व 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः। मत्तः सर्वमहं सर्वं मयि सर्वं सनातने। अहमेवाव्ययो नित्यः परमात्मेत्यचिन्तयत्" इतीन्द्रवामदेवप्रह्लादादीनामिव स्वान्तर्यामिपरमात्मबुद्ध्या रुद्रस्य सर्वात्मभावोपदेश इत्युक्तं भवति। तथा ह्युपबृंहितवान् सूत्रकारस्त्रिपुरविजये "विष्णुरात्मा भग-

ॐ भावप्रकाशिका ॐ

कारणत्वमुक्तमिति) ननु 'को भवा'नित्यभिमुखस्य रुद्रस्य स्वरूपे देवैः पृष्टे 'अहमेकः प्रथममास' मित्यादिना मदन्तर्यामी परमात्मेति प्रतिवचनम् 'आम्रं पृष्टः कोविदारा'निति न्यायः कथं नानुसरेत्? नच मदन्तर्यामी सर्वात्मेत्युक्तेस्सर्वात्मभूतभगवच्छरीरभूतोहमित्यर्थे पर्यवसन्नतया को भवानिति प्रश्नंप्रति उत्तरत्वसम्भादितिवाच्यम्; तथा सति किं त्वं सकलकारणसर्वान्तर्यामिशेषभूतः, उत स्वतन्त्रः? इतिप्रश्नाभिप्रायः पर्यवसन्नस्स्यात्. ततश्च तादृशप्रश्नस्यानुगुणे अहं न स्वतन्त्रः, अपि तु सर्वकारणसर्वान्तर्यामिशेषभूत इत्युत्तरे वक्तव्ये विरुद्धमतिकृतेदृशप्रतिवचनस्यासम्भवादिति चेन्न, श्रुतीनां परोक्षप्रियत्वेन गूढाभिप्रायतया समीचीनमीमांसावसेयतात्पर्यकत्वस्यादोषत्वादिति द्रष्टव्यम्। (बुद्ध्या प्राविशदिति) मनसि कृतवानित्यर्थः। (तेन तेन हि तं नरम् अनुप्रविश्येति) तत्तद्भावयुक्त-

* श्रुतप्रकाशिका *

यतो भवस्यामिततेजसः" ब्रह्मरुद्रसंवादे 'तवान्तरात्मा मम च ये चान्ये देहिसञ्ज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् कचित्" इति च। सोऽह-मित्यादिना सर्वात्मभावप्रपञ्चनम्। द्वितीयखण्डो रुद्रवाक्यानुवादेन स्तुतिपरत्वात् तदन्तर्यामिपरमात्मविषयः। 'यो वै रुद्रः स भगवा'निति यो रुद्रान्तर्यामी स वासुदेव इत्यर्थः। भगवच्छब्दस्य वासुदेवासाधारणत्वात्. तच्च दर्शितम्. 'यो वै रुद्रः स भग-वान् यश्च विष्णु'रित्यन्तर्यामिण एव अवताररूपविशिष्टत्वमुक्तम्। तृतीये तु परमा-त्मनो वैभवम्. तद्वाचकस्य ओङ्कारस्य नामधेयानि चतुर्थे। तन्निर्वचनं पञ्चमे। षष्ठे तु 'तदेतदुपासितव्यं निचाय्य तं शान्तिमेती"तिरुद्रशरीरकपरमात्मोपासनं साङ्गमुक्तम्. 'व्रतमेतत्पाशुपत'मिति पशुपतिरूपपरमात्मोपासनाङ्गतया पशुपतिसम्बद्धं पाशुपतम्, न तु पाशुपतागमप्रतिपाद्यम् . तद्धितद्वयकल्पकाभावात्। समन्त्रकभसितस्पर्शनं तु प्रकरणगृहीतत्वान्न सर्वत्र प्राप्नोति, दर्शपूर्णमासप्रकरणगृहीतप्रयाजवत्सौत्रामणिप्र-करणगृहीतसुराग्रहवच्च ; तस्मादथर्वशिरसि रुद्रान्तरात्मा नारायण एव प्रतिपाद्यः, यथा प्रतर्दनविद्यायामिन्द्रान्तर्यामी ॥ 'इन्द्रो मायाभिः पुरुरूप ईयते' 'मामुपास्व' "इन्द्रं निचिक्युः परमे व्योम'न्निति कारणत्वोपास्यत्वप्राप्यत्वानीन्द्रविषयाणि, यथा प्रसिद्धेन्द्रव्यतिरिक्तविषयाणि व्याख्यातानि तथैवान्यत्रापि रुद्रविषयाणि कारणत्वादिपराणि वाक्यानि नेतव्यानि, "स ब्रह्मा स शिवः सेन्द्रः" इति तस्ये-

* भावप्रकाशिका *

तया तं ज्ञात्वेत्यर्थः। ( रुद्रवाक्यानुवादेनेति ) 'अहमेकः प्रथममासम्' इत्या-दिरुद्रवाक्यार्थीभूतनारायणसर्वान्तर्यामित्वानुवादेन स्तुतिपरत्वादित्यर्थः। ( तद्धि-तद्वयकल्पकाभावादिति ) पशुपतिना प्रोक्तं पाशुपतं शास्त्रं तत्प्रतिपाद्यं पाशुपत-मिति तद्धितद्वयकल्पकाभावादितिभावः। इदमुपलक्षणम्। पाशुपतशब्दस्य वृद्ध-त्वाच्छप्रत्ययप्रसङ्गेन पाशुपतमिति रूपासिद्धिप्रसङ्गादित्यपि द्रष्टव्यम्। ( समन्त्र-कभसितस्पर्शनं त्विति ) अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशे-द्व्रतमेतत्पाशुपतं पशुपाशविमोक्षायेतिश्रुतमित्यर्थः। ननु 'भस्मोद्धूलनस्य मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा भस्मच्छन्नो भस्मशय्या-शयानो रुद्रध्यायी मुच्यते सर्वपापैः" इति शातातपस्मृतौ सर्वपापक्षयहेतुत्व-स्मरणात् पापक्षयस्य सर्वब्रह्मविद्यापेक्षितत्वादपेक्षालक्षणवस्तुसामर्थ्यलिङ्गेन पाशु-

* श्रुतप्रकाशिका *

न्द्रतुल्यतया भगवद्विभूतित्वात्। ननु 'हिरण्यगर्भः समवर्त्तताग्रे 'एको ह वै नारायण आसीत्' न सन्न चासच्छिव एव केवलः" इति, 'विराजोऽधिपुरुषः 'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते'' इति त्रयाणामपि कारणत्वे कार्य्यत्वे चाविशेषश्रुते नारायणादिशब्दानां रूढिमाश्रित्य हिरण्यगर्भादिशब्दानां प्रसिद्धार्थत्यागे को हेतुः? "आकाशादेव समुत्पद्यन्ते' 'प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते 'इन्द्रो मायाभिः पुरुरूप ईयते 'आत्मन आकाशः सम्भूतः, 'एतस्माज्जायते प्राणः' इन्द्रो वरुणः'' इत्याकाशप्राणेन्द्रादीनां च कार्यत्वकारणत्वश्रवणाविशेषेऽप्याकाशादिशब्दानां रूढित्यागे को हेतुः? कार्य्यतयावगतानां परमकारणत्वायोग्यत्वमिति चेत्तुल्यम्। ननु न कारणविषययोर्हिरण्यगर्भरुद्रशब्दयोः प्रसिद्धार्थायोग्यता, कार्य्यत्वे सति ह्ययोग्यत्वम्. कारणविषयरुद्रादिशब्दाः प्रसिद्धपरा एव, कार्य्यविषयास्तु प्रसिद्धेतरविषयाः स्युः। न, कारणविषयाणां रुद्रादिशब्दानां प्रसिद्धार्थपरत्वे सत्येककारणत्वानुपपत्तेः। तदनुपपत्तिश्च रुद्रादिशब्दानामेकव्यक्तिविषयत्वेन व्युत्पत्त्यभावात्. कारणैकत्वञ्चावर्जनीयम्, अन्यथा अद्वितीयत्वप्रतिज्ञादृष्टान्तसमाभ्यधिकनिषेधाद्यनुपपत्तेः, अतः कारणविषयाणां रूढित्यागे प्राप्ते सत्ययोग्यार्थानामेव रूढिरनादरणीया, न तु योग्यस्वार्थानामपि। इत्थं हिरण्यगर्भादिशब्दानां प्रसिद्धार्थायोग्यत्वं नारायणादिशब्दानां

* भावप्रकाशिका *

पतप्रकरणं बाधित्वा सर्वविद्यार्थत्वमेवाभ्युपगन्तव्यम्। अत एव 'तमेतं वेदानुवचनेन' इत्यत्र दहरविद्यायाः प्रकृतत्वेपि 'धर्मेण पापमपनुदति' इतिश्रुतिप्रतिपन्नस्य कर्मजन्यस्य पापक्षयरूपद्वारस्य सर्वविद्यापेक्षितत्वाद्यज्ञादिकर्मणां सर्वविद्यासाधारण्यम्; तथा 'तस्मादेवंविच्छान्तो दान्त' इत्यादिश्रुतौ प्रकृतविद्यापरामर्शकैवंविच्छब्दे सत्यपि शमदमादिसाध्यचित्तैकाग्र्यादेस्सर्वविद्यापेक्षित्वादेव सर्वविद्यासाधारण्यमभ्युपेयत इति चेन्न; यदि प्रकरणपठितानामप्यपेक्षामात्रेण सर्वसाधारण्यम्, तर्हि दर्शपूर्णमासप्रकरणपठितानां व्रीहिप्रोक्षणावघातादीनां सन्निपत्याङ्गानां 'वर्म वा एतद्यज्ञस्य क्रियते' इत्याद्यर्थवादप्रतिपन्नयागापेक्षितोपकारजनकानां प्रयाजाद्यङ्गानामपि उपदेशत एव सर्वयागसाधारण्यप्रसङ्गः 'यज्ञेन दानेन' इत्यादिस्थलेतु 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादिसर्वविद्या-

दनपरा व्याख्याताः । व्याख्याता इतिपदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥ ७ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य चतुर्थः पादः ॥
समाप्तश्चाध्यायः ॥

---

* श्रुतप्रकाशिका *

योग्यार्थत्वं च दर्शितम् ; अतोऽन्यत्रापि रुद्रहिरण्यगर्भादिविषयाणि वाक्यान्येवमुन्नेयानि ॥ एवं दिङ्मात्रं दर्शितम् । अनन्ताः कारणपरवाक्यविशेषा एवं व्याख्येयाः । यतोऽनुवादरूपतया साधारणतया योग्येतरार्थतया योग्यार्थप्रत्यभिज्ञापकधर्मपरतया च प्रापकासाधारणयोग्यार्थतद्धर्मप्रत्यभिज्ञाप्यवस्तुविशेषविषयवाक्यसाकाङ्क्षाः सर्वे वाक्यविशेषास्तत्तदधिकरणन्यायानुगृहीता नारायणपराः, अत एव ह्युक्तं भगवता व्यासेन सूत्रकारेण "तत्त्वं जिज्ञासमानानां हेतुभिस्सर्वतो मुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः" इति । हेतुभिः— समन्वयलक्षणोक्तन्यायैः । सर्वतोमुखैः—तत्तन्मुखभेदभिन्नैरित्यर्थः । तथा सर्वविद्योपास्यश्च स एवेत्युक्तम् "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" इति । आलोड्येत्यनेन प्रमाणपर्यालोचनमुक्तम्, विचार्येत्यनेन शास्त्रतः परीक्षणमुक्तम्, सुनिष्पन्नम्— बाह्यकुदृष्ट्यविचाल्यं निश्चितमित्यर्थः । तस्मादयोगान्ययोगव्यवच्छेदेन नारायणस्य कारणत्वं पादचतुष्टयेन प्रतिपादितमिति सिद्धम् ॥ व्याख्याताव्याख्याता इत्युक्ते व्याख्यातशब्दस्य अव्याख्यातशब्दस्य च समासेनैकपद्ये सति सर्ववाक्यविशेषाणां व्याख्यातत्वमुक्तं न स्यादिति तद्व्युदासार्थमसमस्ततया पृथक्पदत्वं ज्ञापयन्नभ्यासस्य प्रयोजनमाह (व्याख्याता इतीति) नन्वभ्यासस्य कथं समाप्तिद्योतकत्वम्? श्रुतिसमाधेरिति ब्रूमः, श्रुतिषु हि कर्मभागे ज्योतिष्टोमदर्शपूर्णमासादिविषयतत्त-

७ भावप्रकाशिका ७

साधारण्यप्रतिपादकशास्त्रान्तरवशेन सर्वविद्यासाधारण्यसिद्धावप्यन्यत्र तथात्वे प्रमाणाभावाच्छमदमादिस्थलेपि शमाद्येकसाध्यचित्तैकाग्र्यैकसाध्यत्वाद्ब्रह्मोपासनस्य शा-

* श्रुतप्रकाशिका *

स्प्रकरणावसानेषु नाभ्यासो दृश्यते, वेदान्तेषु दृश्यते, यथा "न च पुनरावर्तते न च पुनरावर्त्तते" "नावर्त्तन्ते नावर्त्तन्ते" 'अमृतः समभवदमृतः समभवत्' 'इति वेदानुशासनमिति वेदानुशासनम्" तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमाप्नोति" इति च। अत्रायमभिप्रायः, कस्यचित्पुरुषस्य पुरुषार्थतदुपाय-प्रतिपादनं हि शास्त्रकृत्यम्, ज्योतिष्टोमादिज्ञानमात्रेण पुरुषार्थतदुपायज्ञानं वस्तुतो न परिसमाप्तम्, अपवर्गतत्साधनयोरविदितत्वात्. अमृतत्वतदुपायविशेषज्ञाने सति हि ज्ञातव्यज्ञानं समाप्तं भवति, तदधिकपुरुषार्थान्तरतदुपाययोरभावेनाज्ञातव्यत्वात् अपवर्गोपायभूतविद्यान्तरेषु सत्स्वप्येकेनैव विद्याविशेषेण पुरुषार्थसिद्धेर्विद्यान्त-रस्य कृतकरत्वादनपेक्षितत्वेन ज्ञातव्यत्वनियमाभावात्; अतः पुरुषार्थसिद्ध्यर्थं ज्ञात-व्यार्थस्य समाप्तिसूचको वेदान्तभागेषु तत्तत्प्रकरणावसानस्थोऽभ्यास इत्यवग-म्यते ; अत एव कर्मविचारलक्षणावसानेष्वनभ्यासः शारीरलक्षणावसानेष्व-भ्यासश्चेत्यवगम्यते , तत्राध्यायावसानशास्त्रावसानवैषम्यद्योतनार्थमाद्याध्यायत्र-यावसानेषु पदाभ्यासः शास्त्रावसाने सूत्राभ्यासश्च कृतः॥ यादवमिश्रपक्षस्था-स्त्वेवमाहुः– नाध्यायपरिसमाप्तिद्योतकत्वमभ्यासस्य युक्तम् , अर्थसमाप्तेरेवाध्याय-परिसमाप्त्यवगमात्सूचनस्य विफलत्वात्; अतोऽध्यायावसानसूचकोऽप्यभ्यासोऽ-र्थापरिसमाप्तिद्योतकः, अध्यायशेषार्थविचारश्च द्वाभ्यां पादाभ्यां वर्तिष्यते– इति। नैतद्युक्तम्; कथैः स्वाःस्यामित्येतावता वाक्यार्थापरिसमाप्तावपि वाक्यपरिसमाप्ते-रिवाध्यायार्थापरिसमाप्तावध्यायपरिसमाप्तेरनुपपन्नत्वात्कर्ममीमांसायामिवाध्यायानां पादचतुष्टयात्मकत्वनियममतिलङ्घ्य प्रथमाध्यायस्य पादषट्कात्मकत्वेन निबन्धनीय-

* भावप्रकाशिका *

मादेस्सर्वविद्यासाधारणयम्, ब्रह्मविद्यापेक्षितपापक्षयस्य भस्मोद्धूलनैकसाध्यत्वे प्रमाणाभावात् भस्मोद्धूलनस्य न सर्वब्रह्मविद्याङ्गत्वमित्यलमतिचर्चया। (ज्ञात-व्यार्थस्य समाप्तिसूचक इति) 'तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम्, 'य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते अभ्याशो ह यदेनं साधवो घोषा आगच्छे-युरुपचनिम्रेडरन् निम्रेडरन्' इत्यादौ अब्रह्मप्रतिपादकोपनिषद्भागेपि अभ्यास-दर्शनात् गौतमधर्मशास्त्रे प्रतिखण्डिकमभ्यासदर्शनाच्च प्रायिकमेतदिति मन्तव्यम्। (पादषट्कात्मकत्वेनेति) शरभादावष्टचरणत्ववद्भ्रमरादौ षट्चरणत्वस्यापि दर्शना-

चैतन्यानुपलम्भः, तथा घटादिष्वपि सदेव चैतन्यमनुद्भूतम्; अत एव चेतनाचेतनविभाग इति। नैतदुपपद्यते; यतो नित्यानुपलब्धिरसद्भावमेव साधयति, अत एव चैतन्यशक्तियोगोऽपि तेषु निरस्तः। यस्य हि क्वचित्कदाचिदपि यत्कार्यानुपलब्धिः, तस्य तत्कार्यशक्तिं ब्रुवाणो वन्ध्यासुतसमितिषु तज्जननीनां प्रजननशक्तिं ब्रूताम्। किञ्च वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चये सति घटादीनां चैतन्यशक्तेश्चैतन्यस्य वाऽनुद्भूतस्य सद्भावनिश्चयः, तन्निश्चये सति वेदान्तैर्जगतो ब्रह्मोपादानताप्रतिपादननिश्चय इतीतरेतराश्रयत्वम्, विलक्षणयोर्हि कार्यकारणभावः प्रतिपादयितुमेव न शक्यते। किं पुनः प्रकृतिविकारयोः

---

* श्रुतप्रकाशिका *

रूपस्य चैतन्यस्य विद्यमानस्यापि सुषुप्तौ स्फुटतरोपलम्भाभावाभ्युपगमात्तं प्रतिबन्दीकृत्य परिहार उक्तः। सर्वत्र चैतन्यस्य सद्भावे चेतनाचेतनव्यवस्था कथमित्यत्राह (अत एवेति) परिहरति (नैतदिति) इतरवादिभिः सुषुप्तौ चैतन्योत्पत्तिशक्तियोगस्याभ्युपगतत्वात् तत्प्रतिबन्दीकारेण घटादीनां चैतन्यानुपलम्भेऽपि चैतन्यशक्तियोगात्कारणसालक्षण्यसिद्धिरित्याशङ्क्याह (अत एव चैतन्येति) वेदान्तप्रामाण्यमभ्युपगच्छता त्वयाप्येवमङ्गीकार्य्यमित्याशङ्क्याह (किञ्चेति) ब्रह्मोपादानताप्रतिपादनस्य कथं घटादिषु चैतन्यनिश्चयसापेक्षत्वमित्यत्राह (विलक्षणयोर्हीति) न हि 'आदित्यो यूपः' इत्यादिवाक्यमयोग्यार्थप्रतिपादनक्षमम्. तस्माद्योग्यत्वनिश्चये सति ब्रह्मोपादानताप्रतिपादनसम्भव इत्यन्योन्याश्रय इत्यर्थः। सिद्धान्तिच्छायया चोदयति (किं पुनरिति) सत्तादीत्यादिशब्देन द्रव्यत्वं

* भावप्रकाशिका *

न्तिभिर्नित्यस्येति) वेदान्तप्रामाण्यमभ्युपगच्छतेति साङ्ख्येन वेदान्तप्रामाण्य-

सालक्षण्यमभिप्रेतम्, यदभावाज्जगतो ब्रह्मोपादानताप्रतिपादनासम्भवं ब्रूषे ; न तावत्सर्वधर्मसारूप्यम्, कार्यकारणभावानुपपत्तेः । न हि मृत्पिण्डकार्येषु घटशरावादिषु पिण्डत्वाद्यनुवृत्तिर्दृश्यते । अथ येन केनचिद्धर्मेण सारूप्यम्, तज्जगद्ब्रह्मणोरपि सत्तादिलक्षणं सम्भवति । तदुच्यते ; येन स्वभावेन कारणभूतं वस्तु वस्त्वन्तराद्व्यावृत्तं तस्य स्वभावस्य तत्कार्येऽप्यनुवृत्तिः कार्यस्य कारणसालक्षण्यम्, येन ह्याकारेण मृदादिभ्यो हिरण्यं व्यावर्तते, तदाकारानुवृत्तिस्तत्कार्येषु कुण्डलादिषु दृश्यते । ब्रह्म च हेयप्रत्यनीकज्ञानानन्दैश्वर्यस्वभावम्, जगच्च तत्प्रत्यनीकस्वभावमिति न तदुपादानम् । ननु च वैलक्षण्येपि कार्य्यकारणभावो दृश्यते, यथा चेतनात्पुरुषादचेतनानि केशनखदन्तलोमानि जायन्ते, यथा चाचेत-

* श्रुतप्रकाशिका *

विवक्षितम् । परिहरति ( तदुच्यत इति ) सालक्षण्यमेव स्यात्, ततः किमित्यत्राह ( ब्रह्म चेति ) ब्रह्मणो जगतश्च द्रव्यत्वावान्तरजातिविशेषः सालक्षण्यमिति फलितम्; तच्चात्र चेतनत्वम्, तेन च सालक्षण्यं नास्तीत्यर्थः । एवं वैलक्षण्यस्यासिद्धिराशङ्क्य परिहृता, अथानैकान्त्यमाशङ्क्य परिहरति (ननु चेति ) ॥ उत्तरसूत्र-

❀ भावप्रकाशिका ❀

स्याभ्युपेतत्वाज्जगतो वेदान्तप्रतीतब्रह्मोपादानकत्वसिद्ध्यर्थं चैतन्ययोगोऽङ्गीकार्य इत्याशङ्क्याहेत्यर्थः । ( द्रव्यत्वावान्तरजातिविशेषस्सालक्षण्यमितीति ) द्रव्यत्वसाक्षाद्व्याप्यजात्या उपादानोपादेययोस्सालक्षण्यं विवक्षितमित्यर्थः । ततश्च पिण्डत्वकपालत्वरुचकत्वस्वस्तिकत्वादिना सालक्षण्याभावेपि न दोष इति ध्येयम् । ( तच्चात्र चेतनत्वमिति आत्मत्वस्य द्रव्यत्वसाक्षाद्व्याप्यजातित्वादिति

नाद्गोमयाच्चेतनो वृश्चिको जायते; चेतनाच्चोर्णनाभेरचेतनस्तन्तुः, नैतदेवम्, यतस्तत्राप्यचेतनांश एव कार्यकारणभावः ॥ ४ ॥

अथ स्यात्--अचेतनत्वेनाभिमतानामपि चैतन्ययोगः श्रुतिषु श्रूयते "तं पृथिव्यब्रवीत्" "आपो वा अकामयन्त" "ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्माणं जग्मुः" इति नदीसमुद्रपर्वतादीनामपि चेतनत्वं पौराणिका आतिष्ठन्ते, अतो न वैलक्षण्यमिति। अत उत्तरं पठति—

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः, पृथिव्याद्यभिमानिन्यो देवताः 'तं पृथिव्यब्रवीत्" इत्यादिषु पृथिव्यादिशब्दैर्व्यपदिश्यन्ते। कुतः? विशेषानुगतिभ्याम्--विशेषः विशेषणम्, देवताशब्देन विशेष्य पृथिव्यादयोऽभिधीयन्ते, 'हन्ताहमिमास्तिस्रो देवताः' इति तेजोऽबन्नानि देवताशब्देन विशेष्यन्ते "सर्वा ह वै

---

* श्रुतप्रकाशिका *

मवतारयति ( अथ स्यादिति ) ॥ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ तुशब्दस्य पूर्वपक्षव्यावृत्त्यर्थता माभूदिति व्याचष्टे ( तुशब्द इति ) 'हन्ताऽहमिमाः' इत्यादिवाक्ये पृथिव्यादीनामस्पष्टत्वादाह ( तेजोऽबन्नानीति ) ॥ दृश्यते तु ॥ किं येन केनचिदाकारेण कार्यकारणयोः सालक्षण्यं विवक्षितम् तदसत्पक्षेऽप्यस्ति। सर्वधर्मसादृश्यं चेत् मृद्घटादिष्वपि नास्ति. द्रव्यत्वावान्तरचेतनत्वजात्यनुवृत्तिश्चेत्

देवता अहंश्रेयसे विवदमानाः' 'ते देवाः प्राणे निःश्रेयसं विदित्वा" इति च; अनुगतिः—अनुप्रवेशः। 'अग्निर्वाग्भूत्वा मुखं प्राविशत् आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत् वायुः प्राणो भूत्वा नासिके प्राविशत्" इत्यादिना वागाद्यभिमानित्वेनाग्न्यादीनामनुप्रवेशः श्रूयते अतो जगतोऽचेतनत्वेन विलक्षणत्वाद्ब्रह्मकार्यत्वानुपपत्तेस्तर्कानुगृहीतस्मृत्यनुरोधेन जगतः प्रधानोपादानत्वं वेदान्तैः प्रतिपाद्यते इति ॥ ५ ॥

एवं प्राप्तेऽभिधीयते—

दृश्यते तु ॥ ६ ॥

---

* श्रुतप्रकाशिका *

ब्रह्मकारणत्ववादिबहुश्रुतिस्मृतिविरोधात् बाह्यस्तर्क इति 'तर्काप्रतिष्ठाना'दितिसूत्रेण परिहरिष्यते । चेतनत्वानुवृत्तिरप्यस्ति , विशिष्टस्य कारणत्वात् । कार्येऽप्यचिदंशे अचेतत्वानुवृत्तिवच्चिदंशे चेतनत्वानुवृत्तिरपि विद्यते इति साक्षात्परिहार उपरितनाधिकरणेषु वक्ष्यते , कारणं येनाकारेण वस्त्वन्तराद्व्यावृत्तं तेनाकारेण कार्यस्य सालक्षण्यं चेत्तस्य व्यभिचारोऽस्मिन् सूत्रे विवक्षितः । माक्षिकस्य

७ भावप्रकाशिका ७

भावः ॥ ( चेतनत्वानुवृत्तिरप्यस्तीति ) अत्र केचित् , कारणकोटौ विशेष्यभूतस्य ब्रह्मणः कार्यकोटौ विशेषणभूतेष्वचेतनेष्वप्युपादानत्वमुपपादनीयम् , अन्यथा तस्य सर्वोपादानत्वासिद्धेः , अत एव श्रुतिप्रक्रियायां यद्वा जगत इति निष्कर्षकशब्दः । ब्रह्मशब्दो विशेष्यमात्रपर इत्यादि कार्यकोटौ विशेषणभूतस्य जगतः कारणकोटौ विशेष्यभूतब्रह्म प्रति उपादेयत्वशरीरत्वे स्त इत्याचार्यैरेव प्रतिपादितम्. ततश्च तत्र सालक्षण्याभावादुपादानत्वं न सम्भवतीत्याक्षेपस्य चेतनांशे चेतनांशत्वानुवृत्तिरप्यस्तीति परिहारस्यासम्भवादेतत्सूत्रोक्तन्यायेन विलक्षणयोरप्युपादानोपादेयभावोऽस्तीत्येव परिहर्तव्यमिति वदन्ति । ( माक्षि-

तुशब्दात्पक्षो विपरिवर्तते; यदुक्तं जगतो ब्रह्मविलक्षणत्वेन ब्रह्मोपादानत्वं न सम्भवतीति । तदयुक्तम्, विलक्षणयोरपि कार्यकारणभावदर्शनात् । दृश्यते हि माक्षिकादेर्विलक्षणस्य क्रिम्यादेस्तस्मादुत्पत्तिः । ननूक्तमचेतनांश एव कार्य्यकारणभावात्तत्र सालक्षण्यम् । सत्यमुक्तम्, न तावता कार्य्यकारणयोर्भवदभिमतसालक्षण्यसिद्धिः, यथाकथञ्चित्सालक्षण्ये सर्वस्य सर्वसालक्षण्येन सर्वस्मात्सर्वोत्पत्तिप्रसङ्गभयाद्वस्तुनो वस्त्वन्तराद्व्यावृत्तिहेतुभूतस्याकारस्यानुवृत्तिस्सालक्षण्यं भवताऽभ्युपेतम्, स तु नियमो माक्षिकादिभ्यः क्रिम्याद्युत्पत्तौ न दृश्यत इति ब्रह्मविलक्षणस्यापि जगतो ब्रह्मकार्य्यत्वं नानुपपन्नम् । न हि मृद्धिरण्यघटमकुटादिष्विव वस्त्वन्तरव्यावृत्तिहेतुभूतासाधारणाकारानुवृत्तिर्माक्षिकगोमयक्रिमिवृश्चिकादिषु दृश्यते ॥ ६ ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

यदि कार्यभूताज्जगतः कारणभूतं ब्रह्म विलक्षणम्

---

* श्रुतप्रकाशिका *

वस्त्वन्तराकाराद्व्यावर्तकाकारो माक्षिकत्वम्, तत्तु क्रिम्यादौ नास्तीत्यर्थः । न दृश्यत इत्येतद्विवृणोति ( न हीति )॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ आरम्भणाधिकरणार्थः प्रसङ्गादनेन सूत्रेण स्मारितिः । ( यदीति ) विलक्षणत्वकथनेन द्रव्यां-

७ भावप्रकाशिका ७

कस्येति ) मधुन इत्यर्थः । तत्तु क्रिम्यादौ नास्तीत्यर्थः । ननु द्रव्यत्वसाक्षाद्वा-

तर्हि कार्य्यकारणयोर्द्रव्यान्तरत्वेन कारणे परस्मिन् ब्रह्मणि कार्य्यं जगन्न विद्यत इत्यसत एव जगत उत्पत्तिः प्रसज्यत इति चेत्,— नैतदेवम् ; कार्य्यकारणयोः सालक्षण्यनियमप्रतिषेधमात्रमेव हि पूर्वसूत्रेऽभिप्रेतम्, न तु कारणात्कार्य्यस्य द्रव्यान्तरत्वम्, कारणभूतं ब्रह्मैव स्वस्माद्विलक्षणजगदाकारेण परिणमत इत्येतत्तु न परित्यक्तम् , क्रिमिमाक्षिकयोरपि हि सति च वैलक्षण्ये कुण्डलहिरण्ययोरिव द्रव्यैक्यमस्त्येव ॥

अत्र चोदयति—

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अपीतावित्यपीतिपूर्वकसृष्ट्यादेः प्रदर्शनार्थम्, 'सदेव

---

* श्रुतप्रकाशिका *

न्तरत्वमुक्तं भवति, ततोऽसत्कार्यवादः स्यादिति पूर्वपक्षिणोऽभिप्रायः । (नैतदेवमित्यादि) कार्यकारणयोः सजातीयत्वमेव । अस्येदमिति प्रत्यभिज्ञानार्हावान्तरजात्या सालक्षण्यनियमः प्रतिषिद्धः, न त्वेकद्रव्यत्वमित्यर्थः ॥ उत्तरसूत्रमवतारयति (अत्रेति) ॥ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ (सृष्ट्यादेरिति) आदिशब्देन स्थितिरुच्यते । अपीतेस्सृष्ट्यादिप्रदर्शनार्थत्वं कथमित्यत्राह (सदेवेति)

* भावप्रकाशिका *

न्यजात्या सालक्षण्यस्य पूर्वं विवक्षितत्वात्तत्र व्यभिचारः प्रदर्शित इति चेन्न ; माक्षिकस्य पृथिवीत्वात् क्रिम्यादेश्चेतनत्वेनात्मत्वात्तदानीमपि व्यभिचार एवेति भावः । किञ्च पार्थिवेभ्यो रत्नादिभ्यः वह्नेस्सामुद्रजलात्पार्थिवस्य मुक्ताफलस्योत्पत्तिदर्शनाद्व्यभिचारस्य तादवस्थ्यमिति द्रष्टव्यम् ॥ भाष्ये— कारणे परस्मिन् ब्रह्मणि कार्यं जगदिति । तादात्म्येनेतिशेषः । कारणावस्थायां कार्यं जगत्कारणात्मना न विद्यत इति असत उत्पत्तिप्रसङ्ग इत्यर्थः । (कार्यकारणयोस्सजा-

सोम्येदमग्र आसीत् 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिष्वप्ययावस्थोपदेशपूर्वकत्वदर्शना-त्सृष्ट्यादेः । यदि कार्यकारणयोर्द्रव्यैक्यमभ्युपेतम् तदा कार्यस्य जगतो ब्रह्मण्यप्ययसृष्ट्यादिषु सत्सु ब्रह्मण एव तत्तदवस्थान्वय इति कार्यगतास्सर्वे एवा-पुरुषार्था ब्रह्मणि प्रसज्येरन्, सुवर्णे इव कुण्डलगता विशेषाः । ततश्च वेदान्तवाक्यं सर्वमसमञ्जसं स्यात्, "यस्सर्वज्ञस्सर्ववित्" "अपहतपाप्मा विजरो विमृत्युः" "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्य-धिकश्च दृश्यते" "तयोरन्यः पिप्पलं स्वाद्वत्ति 'अनी-शश्चात्मा बध्यते भोक्तृभावात्' 'अनीशया शोचति

---

* श्रुतप्रकाशिका *

सुवर्णकुण्डलादिदृष्टान्तस्य बुद्धिस्थत्वात् तद्वदित्युक्तम् । यद्वा ब्रह्मणि जगद्वदपुरु-षार्थादिप्रसङ्गादित्यर्थः । यद्वा तद्वदिति मत्वर्थीयप्रत्ययः, जगद्गतापुरुषार्थादिम-त्त्वप्रसङ्गादित्यर्थः । असमञ्जसत्वं दर्शयति (यः सर्वज्ञ इत्यादिना) परस्पर-

छ भावप्रकाशिका छ

तीयत्वमेवेति ) प्रतिषिद्धमितिशेषः । तस्य व्याख्यानमस्येदमितिप्रत्यभिज्ञानार्हा-वान्तरजात्या सालक्षण्यनियमः प्रतिषिद्धः, न त्वेकद्रव्यत्वमित्यर्थ इति ॥ भाष्ये— अपीतिपूर्वकसृष्ट्यादेः प्रदर्शनार्थमिति । अत्र केचित्— प्रपञ्चस्थितिकाले तद्दो-षैर्दुष्टत्वेपि तत्प्रलये निर्दोषं कल्याणगुणविशिष्टं ब्रह्मावतिष्ठत इति तद्विषयत्वं वेदान्तवाक्यानामुपपद्यतें चैत्रस्सुखं जीवतीतिवाक्यानामिव व्याध्यादिरहित-कालविषयत्वमिति शङ्कानिराकरणार्थमपीताविति प्रलयस्य सूत्रे विशिष्यग्रह-णम्. प्रलयेपि भाविकल्पभोग्यफलहेतूनां पाप्मनां सूक्ष्मरूपापन्नेषु जीवेषु सत्त्वावश्यम्भावात्तैर्दुष्टत्वं स्थितिकाल इव प्रलयकालेपि ब्रह्मणः प्रसज्यत इति अपहतपाप्मत्वादिश्रुतीनामसामञ्जस्यमितिभाव इति वदन्ति । ( मत्वर्थीय-

मुह्यमानः" इत्येकस्मिन्नेव वस्तुन्येषां परस्परविरुद्धानां प्रसक्तेः । अथोच्येत– चिदचिद्वस्तुशरीरकस्य परस्यैव ब्रह्मणः कार्य्यकारणभावाच्छरीरभूतचिदचिद्वस्तुगतत्वाच्च दोषाणाम्, न शरीरिणि ब्रह्मणि कार्यावस्थे कारणावस्थे च प्रसङ्ग इति । तदयुक्तम्, जगद्ब्रह्मणोः शरीरशरीरिभावस्यैवासम्भवात्; सम्भवे च ब्रह्मणि शरीरसम्बन्धनिबन्धनदोषाणामनिवार्य्यत्वात्; न हि चिदचिद्वस्तुनोर्ब्रह्मणः शरीरत्वं सम्भवति, शरीरं हि नाम कर्म्मफलरूपसुखदुःखभोगसाधनभूतेन्द्रियाश्रयः पञ्चवृत्तिप्राणाधीनधारणः पृथि-

* श्रुतप्रकाशिका *

विरुद्धानाम्– विरुद्धार्थानां वाक्यानामित्यर्थः । सिद्धान्ती शङ्कते ( अथोच्येतेति ) ( शरीरसम्बन्धनिबन्धनदोषाणामिति ) रुमागतवस्त्वन्तराणां लवणत्वापत्तिर्दृश्यते 'तत्संयोगी च पञ्चमः' इत्युच्यते चेत्यभिप्रायः । शरीरत्वासम्भवमुपपादयितुं शरीरस्वभावमाह ( शरीरं हीति ) व्यापकनिवृत्त्या व्याप्यशरीरत्वनिवृत्तिं दर्शयितुं शरीरत्वव्यापकाकारान् दर्शयति ( कर्मफलेति ) अत्र परोक्तं लक्षणमप्यन्तर्गतम्. सुखदुःखेति भोगाश्रयत्वेन्द्रियाश्रयत्वोक्तिः । कर्मफलभोगसाधनत्वं मुक्तेश्वरशरीरस्थेन्द्रियव्यावर्तकम्, पञ्चवृत्तीति चेष्टाश्रयत्वोक्तिः । ततः किमि-

* भावप्रकाशिका *

प्रत्यय इति ) भावप्रधानश्च निर्देश इति भावः । ( परोक्तमिति ) चेष्टाभोगेन्द्रियाश्रयत्वरूपं तार्किकोक्तं लक्षणत्रयमित्यर्थः । अन्तर्गतत्वमेवोपपादयति ( सुखदुःखेतीति ) ( भोगाश्रयत्वे इन्द्रियाश्रयत्वोक्तेरिति ) यद्यपि सुखदुःखसाधनेन्द्रियाश्रयत्वमेकं लक्षणं सुखदुःखोपभोगसाधनत्वस्येन्द्रियविशेषणत्वात् तथाप्यर्थात्तदपि सूचितमित्यभिप्रायः । ( मुक्तेश्वरशरीरस्थेति ) मुक्तेश्वरयोश्शरीरासम्भवद्योतनार्थमित्यर्थः । ( चेष्टाश्रयत्वोक्तिरिति ) प्राणशरीरसंयोगासमवायिका-

व्यादिभूतसङ्घातविशेषः, तथाविधस्यैव लोक-वेदयोः शरीरत्वप्रसिद्धेः, परमात्मनश्च 'अपहतपाप्मा विजरः" "अनश्नन्नन्यो अभिचाकशीति 'अपाणि-पादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'अप्राणो ह्यमनाः" इत्यादिभिः कर्मतत्फलभोग-योरभावादिन्द्रियाधीनभोगत्वाभावात्प्राणवत्त्वाभावाच्च न तं प्रति चेतनाचेतनयोश्शरीरत्वम्। न चाचेतन-व्यष्टिरूपतृणकाष्ठादीनां समष्टिरूपस्य भूतसूक्ष्मस्य चेन्द्रियाश्रयत्वादि सम्भवति। भूतसूक्ष्मस्य पृथिव्या-दिसङ्घातत्वं च न विद्यते। चेतनस्य तु ज्ञानैकाका-रस्य सर्वमेतन्न सम्भवतीति नतरां शरीरत्वसम्भवः। न च भोगायतनत्वं शरीरत्वमिति शरीरत्वसम्भवः, भोगायतनेषु वेश्मादिषु शरीरत्वाप्रसिद्धेः। यत्र वर्त-

* श्रुतप्रकाशिका *

त्यपेक्षायां शरीरतयाऽभिमतपरमात्मस्वभावपर्यालोचनया शरीरत्वासम्भवमाह (परमात्मनश्चेति) कर्मसम्बन्धराहित्यमाह (अपहतेति) तत्फलाभावमाह (अनश्नन्निति) इन्द्रियानपेक्षतामाह (अपाणीति) चेष्टाश्रयत्वाभावमाह (अप्राण इति) शरीरतयाऽभिमतानां शरीरलक्षणविरुद्धस्वभावतां दर्शयति— (न चाचेतनेति) भोगायतनत्वं पृथग्दूषयति (न चेति) चेष्टाश्रयत्वेन्द्रि-याश्रयत्वयोः पूर्वोक्तं दूषणमेव। भोगायतनम्— भोगसाधनविशेषः, अत एव हि

७ भावप्रकाशिका ७

रणक्रियाया एव चेष्टात्वादिति भावः। (भोगायतनत्वं पृथग्दूषयतीति) पूर्वो-क्तानि लक्षणानि पूर्वं न दूषितानि. अपितु तेषां लक्षणानां सामाचीन्यं सिद्ध-वत्कृत्यैव चिदचितोस्तादृशलक्षणाभावाद्भगवच्छरीरत्वं न सम्भवतीति शरीरत्वमेव दूषितम्। भोगायतनलक्षणे त्वतिव्याप्त्या लक्षणमपि दूष्यत इति वैरूप्यं

मानस्यैव सुखदुःखोपभोगः, तदेव भोगायतनमिति चेन्न ; परकायप्रवेशजन्मसुखदुःखोपभोगायतनस्य परकायस्य प्रविष्टशरीरत्वाप्रसिद्धेः, ईश्वरस्य तु स्वतस्सिद्धनित्यनिरतिशयानन्दस्य भोगं प्रति चिदचितो- रायतनत्वनियमो न सम्भवति ; एतेन भोगसाधनमात्रस्य शरीरत्वं प्रत्युक्तम् । अथ मतम्— यदिच्छाधीनस्वरूपस्थितिप्रवृत्ति यत् तत्तस्य शरीरमिति, सर्वस्येश्वरेच्छाधीनस्वरूपस्थितिप्रवृत्तित्वेनेश्वरशरीरत्वं सम्भवतीति ; तदपि न साधीयः, शरीरतया प्रसिद्धेषु तत्तच्चेतनेच्छायत्तस्वरूपत्वाभावात् रुग्णशरीरस्य तदिच्छाधीनप्रवृत्तित्वाभावात् मृतशरीरस्य तदायत्तस्थितित्वाभावाच्च, सालभञ्जिकादिषु चेतनेच्छाधीनस्वरूपस्थितिप्रवृत्तिषु तच्छरीरत्वाप्रसिद्धेश्च , चेतनस्य नित्यस्येश्वरेच्छायत्तस्वरूपत्वाभावाच्च न तच्छरीरत्वसम्भवः । न च यद्यदेकनियाम्यं यदेकधार्य्यं

---

* श्रुतप्रकाशिका *

भोगसाधनमात्रस्येत्युक्तम् । सिद्धान्त्यभिमतलक्षणं दूषयति ( अथ मतमित्यादिना ) अव्याप्तिमाह ( शरीरतयेति ) अतिव्याप्तिमाह ( सालभञ्जिकादिष्विति ) असम्भवमाह ( चेतनस्येति ) ( न चेत्यादि ) आदिशब्देन गुणो विवक्षितः । तद्द्वैविध्याद्बहुवचनम्, एवं परमात्मनश्चिदचितोश्च स्वभावालोचनया शरीरत्वं प्रतिक्षिप्तम् । अथ परस्य शरीरप्रतिषेधाच्च कस्यचित् तं प्रति शरीरत्वास-

ॐ भावप्रकाशिका ॐ

द्रष्टव्यमिति भावः । ( असम्भवमाहेति ) चेतनेषु शरीरतयाभिमतेषु लक्षणस्याभावमाहेत्यर्थः । न त्वव्याप्त्यतिव्याप्तिसमभिव्याहृतमसम्भवरूपं लक्षणं दूषण-

यस्यैकशेषभूतम्, तत्तस्य शरीरमिति वाच्यम्; क्रियादिषु व्यभिचारात्। "अशरीरं शरीरेषु" 'अपाणिपादो जवनो ग्रहीता" इत्यादिभिश्चेश्वरस्य शरीराभावः प्रतिपाद्यते, अतो जगद्ब्रह्मणोः शरीरशरीरिभावस्यासम्भवात्तत्सम्भवे च ब्रह्मणि दोषप्रसङ्गाद्ब्रह्मकारणवादे वेदान्तवाक्यानामसामञ्जस्यमिति ॥ ८ ॥

अत्रोत्तरम्—

न तु दृष्टान्तभावात् ॥ ९ ॥

नैवमसामञ्जस्यम्—एकस्यैवावस्थाद्वयान्वयेपि गुणदोषव्यवस्थितेर्दृष्टान्तस्य विद्यमानत्वात्। तुशब्दोऽत्र हेयसम्बन्धगन्धस्यासम्भावनीयतां द्योतयति। एतदुक्तं भवति; चिदचिद्वस्तुशरीरतया तदात्मभूतस्य परस्य ब्रह्मणः सङ्कोचविकासात्मककार्यकारणभावावस्थाद्व-

---

* श्रुतप्रकाशिका *

म्भवमाह (अशरीरमिति) 'अपाणी'त्यादिवाक्यमिन्द्रियाभावज्ञापनाय पूर्वमुपात्तम्, इदानीमिन्द्रियाधिष्ठानावयवनिषेधमुखेन शरीराभावज्ञापनार्थम् ॥ न तु दृष्टान्तभावात् ॥ अक्षरार्थमाह (नैवमिति) नेतिपदेनैव पूर्वपक्षे व्यावर्तितेपि तुशब्दः शरीरशरीरिभावसम्भवज्ञापनार्थः। (तुशब्दोऽत्रेति) शरीरात्मत्वसम्भवादित्यभिप्रायः। हेयसम्बन्धस्यासम्भावनीयत्वे दृष्टान्तः क इत्यत्राह (एतदुक्तमिति) अमुख्यत्वमाशङ्क्याह (अथ चेति) 'पञ्चम्यामाहुतावापः

* भावप्रकाशिका *

मिति मन्तव्यम्। (इन्द्रियाधिष्ठानावयवनिषेधमुखेनेति) पाण्यादिमत एव शरीरत्वादिति भावः ॥ असामञ्जस्यं प्रतिषेधता नेत्यनेनैव हेयसम्बन्धगन्धासम्भवस्य सिद्धतया तुशब्दस्य शरीरशरीरिभावसम्भवज्ञापकत्वमेव तुशब्दोत्रेति भाष्येपि विवक्षितमित्यभिप्रेत्याह (नेतिपदेनैवेत्यादि) केचित्तु 'तद्धर्मप्रसङ्गाद-

यान्वयेऽपि न कश्चिद्विरोधः, यतः सङ्कोचविकासौ परब्रह्मशरीरभूतचिदचिद्वस्तुगतौ। शरीरगतास्तु दोषाः नात्मनि प्रसज्यन्ते, आत्मगताश्च गुणा न शरीरे; यथा देवमनुष्यादीनां सशरीराणां क्षेत्रज्ञानां शरीरगता बालत्वयुवत्वस्थविरत्वादयो नात्मनि सम्बध्यन्ते; आत्मगताश्च ज्ञानसुखादयो न शरीरे। अथ च 'देवो जातो मनुष्यो जातः' तथा स एव बालो युवा स्थविरश्च' इति व्यपदेशश्च मुख्यः, भूतसूक्ष्मशरीरस्यैव क्षेत्रज्ञस्य देवमनुष्यादिभाव इति 'तदन्तरप्रतिपत्तौ' इति वक्ष्यत इति। यत्पुनरुक्तं–चिदचिदात्मकस्य जगतः स्थूलस्य सूक्ष्मस्य च परमात्मानं प्रति शरीरभावो नोपपद्यत इति; तदनाकलितसम्यङ्न्यायानुगृहीतवेदान्तवाक्यगणस्य स्वमतिपरिकल्पितकुतर्कविजृम्भितम्; सर्व एव हि वेदान्ताः स्थूलस्य

---

* श्रुतप्रकाशिका *

पुरुषवचसो भवन्ती'त्यपामेव देवत्वादिधर्माः, न पुरुषस्येत्यत्राह ( भूतसूक्ष्मशरीरस्येति ) यद्वा जीवस्य शरीरोत्पत्तेः प्रागप्यचित्सम्बन्धे सति हि ब्रह्मणः कार्यकारणोभयावस्थायामपि चिदचिद्विशिष्टस्य तद्गतदोषराहित्ये दृष्टान्तत्वमित्यत्राह– भूतसूक्ष्मेति । परोक्तं शरीरत्वासम्भवमनुवदति ( यत्पुनरिति ) सम्यङ्न्यायः– प्रमाणानुगुणन्यायः। कुतर्कः– प्रमाणविरुद्धस्तर्कः । सर्वत्र व्याप्तं लक्षणं विवक्षुश्चिदचितोर्ब्रह्मशरीरत्वेन वेदे प्रयोगं दर्शयति ( सर्व एव हीति ) 'सोऽभिध्याय

ಛ भावप्रकाशिका ಛ

समञ्जसम्' इति सूत्रेणापुरुषार्थसम्बन्धप्रसङ्गादसामञ्जस्यमिति शङ्कितेनेत्यनेनासामञ्जस्यं निषिद्ध्यते, तुशब्देन तद्वत्प्रसङ्गादित्युक्तहेयसम्बन्धगन्धाभावः प्रदर्श्यत

सूक्ष्मस्य चेतनस्याचेतनस्य समस्तस्य च परमात्मानं प्रति शरीरत्वं श्रावयन्ति; वाजसनेयके तावत्काण्व-शाखायां माध्यन्दिनशाखायां चान्तर्यामिब्राह्मणे "यः पृथिव्यां तिष्ठन्.... यस्य पृथिवी शरीरम्" इत्यारभ्य पृथिव्यादिसमस्तमचिद्वस्तु "यो विज्ञाने तिष्ठन्.... यस्य विज्ञानं शरीरम्" 'य आत्मनि तिष्ठन्.... यस्यात्मा शरीरम्' इति चेतनं च पृथक्पृथङ्निर्दिश्य तस्य तस्य परमात्मशरीरत्वमभिधीयते। सुबालोपनिषदि च "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम्' इत्या-रभ्य तद्वदेव चिदचितोस्सर्वावस्थयोः परमात्मशरी-रत्वमभिधाय "एष सर्वभूतान्तरात्माऽपहतपाप्मा दि-व्यो देव एको नारायणः" इति तस्य सर्वभूतानि प्रत्यात्मत्वमभिधीयते। स्मरन्ति च "जगत्सर्वं शरीरं ते" "यदम्बु वैष्णवः कायः" "तत्सर्वं वै हरेस्तनुः" "तानि सर्वाणि तद्वपुः" "सोऽभिध्याय शरीरात्स्वात्" इत्यादि। भूतसूक्ष्मात्स्वाच्छरीरादित्यर्थः। लोके च शरीरशब्दो घटादिशब्दवदेकाकारद्रव्यनियतवृत्ति-

---

* श्रुतप्रकाशिका *

शरीरात्स्वात्' इत्यत्र चिदचितोश्शरीरत्वमस्पष्टमिति तद्व्याचष्टे (भूतसूक्ष्मादिति) 'आसीदिदं तमोभूत'मिति प्रकृतमेव शरीरत्वेनोच्यत इत्यर्थः। (लोके चेत्यादि) (घटादिशब्दवत्) यथा घटादिशब्दाः एकाकारवस्तुषु मुख्याः प्रयुज्यन्ते, न तथा शरीरशब्दः, अपि त्वनेकाकारवस्तुषु मुख्यः प्रयुक्तः, अतोऽनुगतत्वाय हि क्रिमिकीटादिव्यापकं लक्षणमुक्तम्, तस्याप्यव्याप्तत्वात् सार्वत्रिकं लक्षणान्तरं

मनासादितः क्रिमिकीटपतङ्गसर्पनरपशुप्रभृतिष्वत्यन्त-विलक्षणाकारेषु द्रव्येष्वगौणः प्रयुज्यमानो दृश्यते, तेन तस्य प्रवृत्तिनिमित्तव्यवस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यम्। त्वदुक्तं च 'कर्मफलभोगहेतुः' इत्यादिकं प्रवृत्तिनिमित्तलक्षणं न सर्वप्रयोगानुगुणम्, यथोक्तेष्वीश्वरशरीरतयाऽभिहितेषु पृथिव्यादिष्व-

* श्रुतप्रकाशिका *

स्वीकार्यमिति भावः। (अगौणः प्रयुज्यमानो दृश्यत इति) अस्यायमभिप्रायः, द्विपात्त्वं मनुष्यत्वं ब्राह्मणत्वं वा शरीरलक्षणत्वेन किमिति नोच्यते? अन्यत्रापि मुख्यप्रयोगदर्शनादिति चेत्तर्हि लोकवेदयोर्यत्र यत्र प्रयोगो दृश्यते तदनुयायिलक्षणं वाच्यम्; न त्वननुयायिलक्षणमुक्त्वाऽन्यत्र गौणत्वं कल्पनीयमिति। ततः किमित्यत्राह (तेन तस्येति) अनुगुणं निमित्तं ह्युक्तमित्यत्राह (त्वदुक्तं चेति) (प्रवृत्तिनिमित्तलक्षणमिति) प्रवृत्तिनिमित्तम्—समुदायशक्तिनिमित्तम्. वाच्यभूतम्. तच्च तल्लक्षणम्. तेन व्युत्पत्तिनिमित्तभूतस्योपलक्षणभूतस्य च लक्षणस्य व्यावृत्तिः, गोशब्दस्य गमिधात्वर्थो व्युत्पत्तिनिमित्तम्, पृथिवीशब्दवाच्यस्य पृथिवीत्वस्योपलक्षणभूतं गन्धवत्त्वम्, तदुभयमपि न प्रवृत्तिनिमित्तम्; अयमर्थः शरीरदेहादिव्युत्पत्तिनिमित्तभूता विशरणापचयादयो नानुगताः, गन्धोपलक्ष्यपृथिवीत्ववच्छब्दप्रवृत्तिनिमित्तभूतमुपलक्षणान्तरोपलक्ष्यं जात्यादिकमपि न दृश्यते, अतो लक्षणतयाऽभिमतमिदमेव प्रवृत्तिनिमित्तमेष्टव्यम्। तच्चायुक्तम्; अननुगतत्वा-

ॐ भावप्रकाशिका ॐ

इति यथाश्रुतभाष्यमेव समर्थयन्ते (तच्च तल्लक्षणमिति) प्रवृत्तिनिमित्तभूतं लक्षणमित्यर्थः। अयं भावः, गोर्हि त्रीणि लक्षणानि, गमिकर्तृत्वरूपं व्युत्पत्तिलक्षणमेकं लक्षणम्, गोशब्दप्रवृत्तिनिमित्तं गोशब्दप्रवृत्तिनिमित्तगोत्वव्यञ्जकं सास्नादिमत्त्वमेकम्, गोशब्दप्रवृत्तिनिमित्तभूतं गोत्वमेकमिति. इह च शरीरशब्दव्युत्पत्तिनिमित्तलक्षणम्, विशरणं कर्मफलभोगः इत्यादिकं तु सास्नादिवदुपलक्षणरूपलक्षणं न भवितुमर्हति, सास्नादिव्यञ्जयगोत्वरूपजातिवद्भोगेन्द्रि-

व्याप्तेः । किञ्च ईश्वरस्येच्छाविग्रहेषु मुक्तानां च "स एकधा भवति' इत्यादिवाक्यावगतेषु विग्रहेषु तल्लक्षणमव्याप्तम्, कर्मफलभोगनिमित्तत्वाभावात्तेषाम् ; परमपुरुषेच्छाविग्रहाश्च न पृथिव्यादिभूतसङ्घातविशेषाः "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" इति स्मृतेः । अतो भूतसङ्घातरूपत्वं च शरीरस्याव्याप्तम्, पञ्चवृत्तिप्राणाधीनधारणत्वं च स्थावरशरीरेष्वव्याप्तम् । स्थावरेषु हि प्राणसद्भावेऽपि तस्य पञ्चधा अवस्थाय शरीरस्याधारकत्वेनावस्थानं नास्ति । अहल्यादीनां कर्मनिमित्तशिलाकाष्ठादिशरीरेष्विन्द्रियाश्रयत्वं च सुखदुःखहेतुत्वं चाव्याप्तम् ; अतो यस्य चेतनस्य यद्-

* श्रुतप्रकाशिका *

दिति । पाणिपादादिमच्छरीरेष्वव्याप्तिमाह (किञ्चेति) (तल्लक्षणमिति) प्रथमोपात्तं कर्मफलोपभोगहेतुत्वं विवक्षितम् । भूतसङ्घातरूपत्वस्याव्याप्तिं दर्शयितुमाह (परमपुरुषेच्छेति) (पञ्चवृत्तीति) प्राणसद्भावमात्रविवक्षायां चेतनेष्वव्यक्तादिषु चेश्वरशरीरभूतेष्वव्याप्तिरभिप्रेता । (अहल्यादीनामिति) इन्द्रियाश्रयत्वम्— ज्ञानप्रवृत्तिजननपटुतरेन्द्रियाश्रयत्वम् । इन्द्रियसद्भावमात्रविवक्षायां पूर्ववदव्याप्तिरभिप्रेता । (अत इति) अतः—अनुयायिनो

* भावप्रकाशिका *

याश्रयत्वादिव्यञ्ज्याया शरीरत्वजातेरभावादिदमेव प्रवृत्तिनिमित्तभूतं लक्षणमिति पर्यवस्यतीत्यभिप्रेत्य कर्मफलहेतुरित्यादिकं प्रवृत्तिनिमित्तलक्षणमिति प्रवृत्तिनिमित्तलक्षणत्वेन भाष्येऽनूदितमितिभावः । (प्रथमोपात्तमिति) इन्द्रियाश्रयत्वादेर्मुक्तशरीरेषु सम्भवादितिभावः । नन्वाकल्पमिन्द्रियाणामवस्थानात् 'तदन्तरप्रतिपत्तौ रंहति' इत्यधिकरणे भूतसूक्ष्मेन्द्रियाणामनुवृत्तिकथनाच्च कथमहल्यादिशरीराणामिन्द्रियाश्रयत्वाभाव इत्याशङ्क्याह (इन्द्रियाश्रयत्वं ज्ञानप्रवृत्तिजननेति) (चेष्टे-

द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च तत्तस्य शरीरमिति शरीरलक्षणमास्थेयम् । रुग्णशरीरादिषु नियमनाद्यदर्शनं विद्यमानाया एव नियमनशक्तेः प्रतिबन्धकृतम्, अग्न्यादेः शक्तिप्रतिबन्धादौष्ण्याद्यदर्शनवत् । मृतशरीरं च चेतनवियोगसमय एव विशरितुमारब्धम्, क्षणान्तरे च विशीर्य्यते । पूर्वं शरीरतया परिक्लृप्तसङ्घातैकदेशत्वेन च तत्र शरीरत्वव्यवहारः, अतस्सर्वं

---

* श्रुतप्रकाशिका *

लक्षणत्वात् त्वदुक्तस्य चाननुयायित्वादित्यर्थः । "चेष्टेन्द्रियार्थाश्रयः शरीरम्" इति न्यायसूत्रे शरीरस्य लक्षणत्रयमुक्तम् . 'चेष्टाभोगेन्द्रियाश्रय' इति हि न्यायविदः । अस्य लक्षणत्रयस्याव्याप्तत्वाद्वयापिलक्षणत्रयमाह ( यस्येत्यादिना ) यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरम्, यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे धारायतुं शक्यं तत्तस्य शरीरम्, यस्य चेतनस्य यद्द्रव्यं शेषतैकस्वरूपं तत्तस्य शरीरमिति लक्षणत्रयम् । ( तच्छेषतैकस्वरूपमिति ) अत्र एकशब्दप्रयोगः सर्वात्मनेतिपदस्य स्थाने द्रष्टव्यः । सर्वात्मनेतिपदेन यावद्द्रव्यभावित्वं विवक्षितम् । तच्छेषतैकस्वरूपमिति पृथगुक्तिः स्वार्थशक्यशब्दप्रयोगानपेक्षणात् । यस्येतिपदेन शरीरस्य न घटपटादिवदप्रतियोगिपदार्थत्वम्, अपि तु पितृपुत्रादिवत् सप्रतियोगिकपदार्थत्वमिति दर्शितम्, सप्रतियोगिकपित्रादीनां शरीरत्वव्यावृत्त्यर्थं नियाम्यमित्युक्तम् । नियाम्यमित्युक्ते भृत्यादीनामपि शरीरत्वं स्यादिति तद्व्यावृत्त्यर्थं सर्वात्मनेतिपदम्, यावद्द्रव्यभावीत्यर्थः । क्रियागुणादिव्यावृत्त्यर्थं द्रव्यमित्युक्तम् । आकाशादिप्रदेशगमनादिषु अशक्येष्वर्थेषु शरीरस्य नियमनासम्भवात्तद्व्यावृत्त्यर्थं स्वार्थ इत्युक्तम्, स्वविषय इत्यर्थः । "अर्थः स्याद्विषये मोक्षे" इत्यभिधानविदः । स्वशब्दः शरीरपरः, तत्तच्छरीरसम्पाद्येषु कार्येष्विति यावत् । रुग्णशरीरेषु व्यभिचारो माभूदिति शक्यमित्युक्तम् । तत्र शक्तेः प्रतिबन्ध एव, न शक्त्यभावः, अ-

परमपुरुषेण सर्वात्मना स्वार्थे नियाम्यं धार्यं तच्छेषतैकस्वरूपमिति सर्वं चेतनाचेतनं तस्य शरीरम्। 'अशरीरं शरीरेषु' इत्यादि च कर्मनिमित्तशरीरप्रतिषेधपरम्; यथोक्तसर्वशरीरत्वश्रवणात; उपरितनाधिकरणेषु चैतदुपपादयिष्यते। 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' 'न तु दृष्टान्तभावात्' इति सूत्रद्वयेन 'इतरव्यपदेशात्' इत्यधिकरणसिद्धोऽर्थः स्मारितः ॥९॥

स्वपक्षदोषाच्च ॥ १० ॥

न केवलं ब्रह्मकारणवादस्य निर्दोषतयैतत्समाश्रयणम्; प्रधानकारणवादस्य दुष्टत्वाच्च तत्परित्यज्यैतदेव समाश्रयणीयम्। प्रधानकारणवादे हि जगत्प्रवृत्तिर्नोपपद्यते। तत्र हि निर्विकारस्य चिन्मात्रैकरसस्य पुरुषस्य प्रकृतिसन्निधानेन प्रकृतिधर्माध्यास-

---

* श्रुतप्रकाशिका *

न्यादावौष्ण्यादिवत्। ज्ञानव्यावृत्त्यर्थं चेतनस्येत्युक्तम्। न हि ज्ञानं ज्ञानविशिष्टेन नियाम्यम्, अपि तु स्वाश्रयेण, तस्माच्चेतननियाम्यत्वाभावेन न तत्रानैकान्त्यम्, एवं लक्षणान्तरद्वयेऽपि व्यावर्त्यमुच्यते, यस्य सर्वात्मना द्रव्यं शक्यमितिपदानां पूर्ववद्व्यावृत्तिः, चेतनस्येतिपदेन प्रभाव्यावृत्तिः। शरीरत्वप्रयुक्तदोषादिशङ्काव्यावृत्त्यर्थमाह (उपरितनाधिकरणेष्विति) ॥ स्वपक्षदोषाच्च ॥ या तु परेण पूर्वं निर्दोषत्वजगदुपादानत्वादिव्याहतिरुक्ता सैव व्याह-

छ भावप्रकाशिका छ

न्द्रियार्थाश्रय इति) अर्थशब्दो भोगपरः। (नहि ज्ञानं ज्ञानविशिष्टेनेति) अयमर्थः, यदीयधर्मभूतज्ञानेन यद्धार्यं यन्नियाम्यं च तत्तस्य शरीरमिति विवक्षितम्। ततश्च यावद्दत्तं धार्ये युकादौ गर्भस्थविनष्टजन्तौ वा नातिव्याप्तिः। (प्रभाव्यावृत्तिरिति)

निबन्धना जगत्प्रवृत्तिः। निर्विकारस्य चिन्मात्ररूपस्य प्रकृतिधर्माध्यासहेतुभूतं प्रकृतिसन्निधानं किंरूपमिति विवेचनीयम्। किं प्रकृतेः सद्भाव एव, उत तद्गतः कश्चिद्विकारः, अथ पुरुषगत एव कश्चिद्विकारः ?। न तावत्पुरुषगतः, अनभ्युपगमात्। नापि प्रकृतेर्विकारः, तस्याध्यासकार्य्यतयाऽभ्युपेतस्याध्यासहेतुत्वासम्भवात्; सद्भावमात्रस्य सन्निधानत्वे मुक्तस्याप्यध्यासप्रसङ्ग इति त्वत्पक्षे जगत्प्रवृत्तिर्नोपपद्यते। अयमर्थः साङ्ख्यपक्षप्रतिक्षेपसमये "अभ्युपगमेऽप्यर्थाभावात्" इत्यादिना प्रपञ्चयिष्यते ॥ १० ॥

तर्काप्रतिष्ठानादपि ॥ ११ ॥

तर्कस्याप्रतिष्ठितत्वादपि श्रुतिमूलो ब्रह्मकारणवाद एव समाश्रयणीयः, न प्रधानकारणवादः। शाक्योलूक्याक्षपादक्षपणकपिलपतञ्जलितर्काणामन्योन्यव्याघातात्तर्कस्याप्रतिष्ठितत्वं गम्यते ॥ ११ ॥

---

* श्रुतप्रकाशिका *

तिरनेन सूत्रेण परस्यापादिता। ( अनभ्युपगमात् ) नित्यनिर्विकारत्वादिति भावः॥ तर्काप्रतिष्ठानादपि॥ ( तर्कस्येति ) केवलतर्कस्येत्यर्थः ।॥ अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः॥ 'तर्काप्रतिष्ठाना'दित्यादिकम् 'अनिर्मोक्षप्रसङ्ग' इत्यन्तं नैकं सूत्रम्. सूत्रकारशैलीविरोधात्. प्रयुक्तहेतुशैथिल्याशङ्कापरिहारौ हि सूत्रान्तरकृतौ दृष्टौ, यथा "ईक्षतेर्नाशब्दम्' 'गौणश्चेन्नात्मशब्दात्, आनन्दमयोऽभ्यासात्, विकारशब्दान्नेति चेन्न प्राचुर्यात्, ज्ञेयत्वावचनाच्च, वदतीति चेन्न प्राज्ञो

ꕥ भावप्रकाशिका ꕥ

प्रभायाः प्रभावता नित्यश्रार्यत्वादिति भावः॥ मृषावादिपक्षं दूषयति ( तर्काप्रतिष्ठा-

**अन्यथाऽनुमेयमिति चेदेवमप्यनि-र्मोक्षप्रसङ्गः ॥ १२ ॥**

इदानीं विद्यमानानां शाक्यादीनां तर्कानुद्दूष्याऽन्यथा प्रधानकारणवादमतिक्रान्ततदुपदर्शितदूषणत्वेनानुमास्यामह इति चेत्, एवमपि पुरुषबुद्धिमूलतर्कैकावलम्बनस्य तथैव देशान्तरकालान्तरेषु त्वदधिककुतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसम्भावनया तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः, अतोऽतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम्, तदुपबृंहणायैव तर्क उपादेयः, तथा चाह "आर्षं धर्म्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इति। वेदा-

---

* श्रुतप्रकाशिका *

हि प्रकरणात्" इति च। ननु 'व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्यय' इत्यत्र कथं सूत्रैक्यम्? उक्तहेतुदौस्स्थ्यशङ्कापरिहारपरत्वाभावात्. साध्याभावेऽनिष्टप्रसञ्जनमुखेन हेतुदार्ढ्यपरो हि न चेदित्यादिकः सूत्रांशः। न तूक्तहेतुदौःस्थ्यशङ्कापरिहारपरः। (इदानीमित्यादि) भूततर्कस्य भूततर्कान्तरप्रतिहतिवत् भावितर्कस्यापि भावितर्कान्तरप्रतिहतिः सम्भवतीत्यर्थः। वेदशास्त्राविरोधिनेत्यत्र वेदशास्त्रशब्दयोर्वैयधिकरण्ये साङ्ख्यशास्त्रस्याप्यनुरोधः स्यादिति तद्व्यावृत्त्यर्थं व्याचष्टे (वेदेति) यथा "पितृदेवमनुष्याणां वेदश्चक्षुस्सनातनम्। अतर्क्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः" इति। अतर्क्यम्— बाधकागोचर-

* भावप्रकाशिका *

नादित्यादिकमिति) (व्यपदेशाच्च क्रियायामिति) अस्यायमर्थः, 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्ता जीवः। ननु विज्ञानशब्देन नात्मनो व्यपदेशः, अपि तु अन्तःकरणस्येति चेत्; एवं सति निर्देशविपर्ययः स्यात् बुद्धेः करणत्वात्, विज्ञानेनेतिकरण-

ख्यशास्त्राविरोधिनेत्यर्थः । अतो वेदविरोधित्वेन वेदार्थविशदीकरणरूपवेदोपबृंहणतर्कोपादानाय साङ्ख्यस्मृतिर्नादरणीया ॥ १२ ॥ ॥ विलक्षणत्वाधिकरणं समाप्तम् ॥

* श्रुतप्रकाशिका *

भूतम् । अप्रमेयम्– साधकाविषयभूतम् ॥ अपीतावित्यादिसूत्रत्रयं परैस्त्वेवं व्याख्यातम्, अपीतौ लीयमानं कार्यं स्वाकारेण कारणं दूषयेत्, लवणमिव मधुरोदकम्, ततश्च स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वादिधर्मकत्वं ब्रह्मणः स्यात् । समस्तस्य ब्रह्मण्यविभागे सति नियामकाभावात् पुनर्भोक्तृविभागस्तेषां भोग्यनियमश्चानुपपन्नः । प्रलयेऽपि ब्रह्मणि विभक्तं चेदपीतिरेव न सम्भवति, ब्रह्मणि प्रलीनानां पुनरुत्पत्तौ मुक्तानामप्युत्पत्तिप्रसङ्ग इत्यसामञ्जस्यमपीताविति सूत्रम्. तत्र दृष्टान्तेन परिहरति– न तु दृष्टान्तेति । घटशरावादय उच्चावचाः सन्तोऽपि स्वाकारप्रहाणेन प्रलीनत्वान्नोच्चावचाकारेण कारणं दूषयन्ति, एवं जगदपि स्थूलत्वाद्याकारप्रहाणेन लीनत्वादविभागदशायामपि न ब्रह्म दूषयति, स्वप्नदर्शी च पुरुषः स्वमायया न स्पृश्यते, सुप्तप्रबुद्धपुरुषाणामिव पुनर्विभागेन निष्क्रमणोपपत्तिः, मिथ्याज्ञानस्यानपोदितत्वात् ; तस्यापोदितत्वादेव मुक्तानां न पुनरुत्पत्तिः, जगतो ब्रह्मणि विभागेन स्थित्यभावादप्ययोपपत्ति-

* भावप्रकाशिका *

विभक्तिनिर्देशस्स्यादिति । ( सूत्रत्रयं परैस्त्वेवं व्याख्यातमिति ) इतरेषां सूत्राणामत्यन्तवैरूप्याभावान्न तानि दूषितानि, यद्यपि 'असदितिचेन्न प्रतिषेधमात्रत्वात्' इति सूत्रे यदि विलक्षणाद्ब्रह्मणो विलक्षणं जगदुत्पद्यते तर्हि प्रागुत्पत्तेः कार्यमसत्स्यादित्यसत्कार्यवादप्रसङ्ग इतिचेन्नैष दोषः । प्रागुत्पत्तेरसदितिवादस्य प्रतिषेधमात्रत्वात्प्रतिषेधस्य शून्यत्वान्निर्विषयत्वादित्यर्थः । प्रागुत्पत्तेः कार्यमसत्स्यादिति किं कार्यस्य कारणात्मना सत्त्वं न स्यादित्यापाद्यते, उत कारणात्मतां विहाय स्वातन्त्र्येण ? नाद्यः, कारणात्मना सत्त्वस्य प्रागुत्पत्तेरपि सत्त्वात् । न द्वितीयः, स्वातन्त्र्येण सत्त्वस्येदानीमप्यभावात् ; अत उत्पत्तेः प्रागसदित्युक्तिरुक्तिमात्रमेव नार्थवतीत्यर्थो वर्णितः । तथापि तस्यार्थस्यात्यन्तविरुद्धत्वाभावादुपेक्षितम् । यथा स्वप्नदृगेकस्वप्नदर्शनमायया न संस्पृश्यते, प्रबोधस-

* श्रुतप्रकाशिका *

रिति। शब्दादिहीनात् प्रधानात् तद्युक्तविलक्षणकार्योदयानुपपत्तिः सर्वविकारप्रलये पुनः सृष्टाविदमस्योपादानम्, न त्विदमिति नियामकाभावात्। भोक्तॄणां भोग्याव्यवस्थितिः नियामकाभावेऽपि नियमाभ्युपगमे कारणाभावसाम्यान्मुक्तानां पुनर्बन्धप्रसङ्गः कतिपयविभागस्थितौ तेषां प्रधानकार्यत्वाभाव इति दोषसाधारण्यापादनं 'स्वपक्षदोषाच्चे'ति सूत्रितमिति। तदिदमनुपपन्नं, तथा हि स्थूलत्वह्रस्वत्वाद्याकारे परित्यक्तेऽपि जडत्वानृतत्वपरित्यागाभावात् अविद्याकर्मवासनाप्रहाणाभावाच्च ब्रह्मण्यविभक्तं जगत्तेनाकारेण ब्रह्म दूषयेत्। यदि जडत्वानृतत्वकर्मवासनादिप्रहाणेन प्रपञ्चलयः तर्ह्यविद्यातत्कृतजीवभेदश्च निवृत्तः स्यात्। न हि जडत्वानृतत्वविरहे निःस्वभावायाः अविद्याया अवस्थानमुपपद्यते सवासनकर्मप्रहाणात्तन्मूलाविद्यानिवृत्त्या च जीवाश्च मुक्ताः स्युः, ततश्च पुनर्जगदुत्पत्तिर्न सम्भवेत्। अविद्यान्तरेण सर्वसम्भवे तस्यास्तत्कल्पितजीवानां चादिमत्त्वं स्यात् वैषम्यनैर्घृण्यादि च प्रसजेत्, मोक्षोपायनिष्पादनवैयर्थ्यं च; प्राकृतप्रलयादेवाविद्यानिवृत्तेस्तस्यास्सदादियत्ननिरपेक्षत्वाच्च; अतोऽप्ययदशायामपि जडत्वानृतत्वादिप्रहाणाभावात्तेनाकारेण ब्रह्मणो दूष्यत्वं दुस्तरम्। जडत्वाद्याकारोऽपरमार्थ इति चेत्तर्ह्यपरमार्थत्वं ब्रह्मास्त्रं विहाय किमर्थं स्वाकारप्रहाणदुर्बलयष्टिग्रहणे प्रयस्यते, अपरमार्थत्वापाश्रयणमपि विफलम्. मिथ्यात्वमपि हि प्रपञ्चा-

* भावप्रकाशिका *

म्प्रसादयोरनन्यगतत्वात्, एवमवस्थात्रयसाक्षी एकः, अव्यभिचारी अवस्थात्रयेण व्यभिचारिणा न स्पृश्यते, मायामात्रं ह्येतत्। यत्परमात्मनोऽवस्थात्रयभासनं रज्ज्वा इव सर्पादिभावेनेतिपरभाष्योक्तं दृष्टान्तमर्थतोऽनुवदति (स्वप्नदर्शी च पुरुषः स्वमायया न स्पृश्यत इति) अस्य चायमर्थः, एको जागरितसुषुप्त्योरनुवर्तमानः स्वप्नदृक् स्वप्नदर्शनरूपया स्वप्नोपादेयमाययोपादानभूतो यथा न स्पृश्यते, अवस्थान्तरेऽनुवृत्त्यदर्शनात्, एवमुत्पत्तिस्थितिप्रलयरूपावस्थादर्शी परमात्मापि नावस्थात्रयेण संसृज्यते, अवस्थात्रयस्यापि मिथ्यात्वादिति। (इदमस्योपादानमिति) इदमस्य भोगसाधनं मन इन्द्रियादीत्यर्थः। (जडत्वानृतत्वपरित्यागाभावादिति) यद्यपि शाङ्करभाष्ये अत्यर्थं चेदमुच्यते, कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति स्थितावपि समानोयं प्रसङ्गः।

* श्रुतप्रकाशिका *

कारः, न हि मिथ्यात्वस्य मिथ्यात्वम्; अतो न मिथ्यात्वप्रहाणमिति मिथ्याभूतं जगदविभक्तं स्वाकारेण मिथ्यात्वेन ब्रह्म दूषयत्येव मिथ्याभूतेनापि जडत्वाद्याकारेण च दूषयेत्। ननु न मिथ्यात्वेन मिथ्याभूतजडत्वादिना च दूषितत्वप्रसङ्गः, शुक्तिरूप्यस्य मिथ्यात्वेऽपि मिथ्यात्वेन मिथ्याभूतरजताकारेण च शुक्तेर्दूषितत्वाभावादिति चेन्न, शुक्तेरपि त्वन्मते मिथ्यात्वात्; पातकिसंसर्गेण पुरुषस्य रुमासंसर्गेण तद्गतवस्तुनश्च मिथ्याभूतपातकित्वलवणत्वाकारापत्त्या दूषितत्वदर्शनाच्च, पातकिरुमादयो हि पदार्थास्त्वन्मते मिथ्याभूताः, तेषां व्यावहारिकसत्यत्वाद्दूषकत्वमिति चेत्तर्हि जगतश्च व्यावहारिकसत्यत्वात् ब्रह्माविभक्तं जगद्दूषकं स्यात्. स्वप्नदृक्पुरुषो मायया न स्पृश्यत इतीदमपि निरूपणीयम्। अस्पर्शो न तावदज्ञानस्य पुरुषानाश्रितत्वम्, आरोप्यग्राहिपुरुषाश्रयत्वात्तत्कल्पकाज्ञानस्य। नाप्यकार्य्यकारित्वम्, हस्तिशस्त्रादिकार्य्यकल्पकत्वात्। नापि कार्य्यस्य देशविप्रकर्षः, हस्तिशस्त्रादेरविप्रकर्षात्। नापि कार्यस्यापुरुषार्थत्वविरहः, स्वप्ने भयशोकव्यथादर्शनात्। नापि दुःखस्यापरमार्थत्वम्, शस्त्रादिदुःखहेतोरिव दुःखस्य प्रबोधे बाधाभावात् अपरमार्थभूतस्यापि तस्य निरसनीयतया पुरुषं प्रत्यवभासमानत्वात्। जाग्रद्दशायामपि स्वगतत्वेन दुःखसाक्षात्कर्तृत्वमेव हि दुःखित्वम्, अवभासप्रतिसम्बन्धित्वमप्यपरमार्थ

* भावप्रकाशिका *

कार्यकारणयोरनन्यत्वाभ्युपगमात्। 'इदं सर्वं यदयमात्मेति' श्रुतिः त्रिष्वपि कालेष्वविशेषेण कार्यकारणानन्यत्वं ब्रूते, तत्र यः परिहारः कार्यस्य कार्यधर्माणां चाविद्याध्यारोपितत्वान्न तैः कारणं संसृज्यत इति अपीतावपि समान इति अप्ययस्थित्यवस्थयोस्साम्यप्रतिपादनात् कार्यकारणानन्यत्वप्रयुक्तदोषस्योद्भावनीयत्वे स्थूलत्वह्रस्वत्वादिदोषाणामपि जडत्वानृतत्ववदापादयितुं शक्यत्वात् स्थूलत्वाद्याकारे परित्यक्तेपि जडत्वानृतत्वपरित्यागाभावादितिवैषम्यं किन्निबन्धनम्?। नहि स्थूलत्वादिदशायामैक्यम्. अप्ययदशायां जडेनैक्यमस्तीति तैरभ्युपगतम् येनायं संरम्भस्सफलस्स्यात्, तथाप्यपीताविति सूत्रे अप्ययस्य विशिष्योक्त्या तत्र किञ्चिद्वैषम्यं वक्तव्यमित्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यमिति (हस्तिशस्त्रादेरविप्रकर्षादिति) हस्तिशस्त्रादेरपि कार्यस्य ज्ञानोपादानकस्योपादानादनधिकदे-

* श्रुतप्रकाशिका *

इति चेन्न; बाधकप्रत्ययाभावात्। हस्तिशस्त्रादिविषयस्यैव प्रबोधे बाधः, न तु शस्त्रादिज्ञानस्य भयादेश्च। भोक्तृभेदानियमप्रसङ्गस्य साङ्ख्यपक्षे तुल्यत्वापादनमप्ययुक्तम्, आत्मनां स्वतो भिन्नत्वात् तत्पक्षे कृत्स्नविकारप्रलयेऽपि तेषां तत्कर्मानुगुणभोग्यविशेषे पुनरपि भोक्तृत्वव्यवस्थोपपत्तेः, त्वन्मते त्वात्मभेदस्यान्तःकरणभेदकल्पितत्वान्मनोबुद्ध्यहङ्काराणां प्रलयेऽप्ययश्रवणादात्मभेदाभावेन पुनःसृष्टावन्येनान्तःकरणेनोपहितस्यात्मन इदमदृष्टमिदं शरीरमिदं भोग्यमिति नियमानुपपत्तेश्च। प्रलयेऽप्यन्तःकरणस्थित्यभ्युपगमे तेषामन्तःकरणानामनादितया ब्रह्मकार्य्यत्वं न स्यात्। साङ्ख्यपक्षे तु तेषां न प्रधानकार्यत्वहानिः, अन्तःकरणप्रलयेऽपि स्वत आत्मभेदसद्भावेनान्तःकरणस्थितेरनपेक्षितत्वात्। आत्मभेदस्य तत्तत्कर्मविशेषाणां च सद्भावान्नियामकहेत्वभावसाम्यं दुर्वचम्, साङ्ख्यपक्षे मुक्तानां पुनर्बन्धप्रसङ्गोऽपि दुर्वचः, यस्य सम्यग्ज्ञानेन निश्शेषकर्मक्षयः, तस्य हेत्वभावेन पुनः शरीरयोगाभावादक्षीणकर्मणां पुनर्बन्ध इति पुनर्देहसम्बन्धोपपत्तेश्च। त्वन्मते मूलभूताविद्याया एकत्वादात्मन एकत्वादिदानीमपि बन्धानुवृत्तेश्चेतःपूर्वं न कश्चिन्मुक्तः सम्भवति, अस्ति चेत्स एवात्मा पुनरपि देहयोगमनुभवतीति मुक्तस्य पुनरुत्पत्तिप्रसङ्गो दुर्वारः, वर्तमानाविद्याया आदिमत्त्वं च भवेत्, जीवाज्ञानपक्षस्य भवद्भिरेव दूषितत्वात्तदवष्टम्भेन बन्धमोक्षव्यवस्थोक्तिरयुक्ता। तत्रापि मुक्तानां पुनरुत्पत्तिप्रसङ्गो दुष्परिहरः, अध्यस्तजीवभावनिवृत्त्या ब्रह्मैकतापत्तिर्हि मोक्षः, तत्रापि ध्वस्तजीवभावोऽयमंशो मुक्तः, अध्यस्तजीवभावमंशान्तरं तु देहभाग् भवतीति न वक्तुं शक्यम्, ब्रह्मणः स्वतो निरंशत्वात्; अतो ब्रह्मैकतापन्नानामेव पुनरुत्पत्तिः स्यात्, उपहितांशभेदाभावात्। नन्वंशभेदस्यापि काल्पनिकतयाभ्युपगमान्नोक्तदोष इति चेत्, मुक्तौ निवृत्तजीवभावेंशे स काल्पनिकभेदोऽस्ति वा, न वा? अस्ति चेन्मुक्त एव न स्यात्, न चेत्पूर्वोक्तदोषः स्यात्। निवृत्तोपाधित्वमेव भेद इति चेत् उपाधि-

* भावप्रकाशिका *

शत्वादितिभावः। (वर्तमानाविद्याया आदिमत्त्वं च भवेदिति) पूर्वाविद्यायाः पूर्वं मुक्तिकाले नष्टत्वादितिभावः। (बन्धमोक्षव्यवस्थोक्तिरिति) जीवोपाधिभूतानामविद्यानां नानात्वात् यस्य जीवस्य तत्त्वज्ञानेनाज्ञानं नष्टं तस्य मुक्तिः

* श्रुतप्रकाशिका *

निवृत्तिः स्वरूपातिरिक्ता, न वा? न चेत्तत्स्वरूपमेव जीवभावेन पुनरपि संसरतीत्युक्तदोषः स्थितः, अतिरिक्तत्वे स निवृत्तिरूपविशेषः किं कृत्स्नब्रह्मवृत्तिः? उत ब्रह्मैकदेशवृत्तिः? । आद्ये पूर्वोक्तदोषः, द्वितीये त्वेकदेशस्यांशान्तराद् भेदो वक्तव्यः, भेदकान्तरयोगेन चेत्तस्य भेदकोपाधेः पारमार्थ्ये अद्वैतहानिः । अपारमार्थ्ये मुक्तांशस्यैव बद्धत्वं स्यात्, अपरमार्थोपाधिसम्बन्धो हि त्वन्मते बन्धः । न भेदकान्तरयोगापेक्षा, अपि तूपाधिविरह एव भेद इति चेत्, स किं बाध्यः, उताबाध्यः? उपाधिविरहस्य बाध्यत्वे तदवच्छिन्नांशस्य पुनरुपाधिसम्बन्धान्मुक्तोत्पत्तिः स्यात् । अंशभेदस्याबाध्यत्वे तस्य भेदस्याभेदवत् परमार्थत्वात् भेदाभेदपक्ष एवाङ्गीकृतः स्यात्; अथ तत्परिहाराय परमार्थतोऽशभेदो नाभ्युपगतः तर्हि मुक्तस्य पुनरुत्पत्तिरवर्जनीया स्यात् ॥ यत एवं शरावादीनां पृथिव्यामिव स्थूलत्वादिस्वाकारप्रहाणेन ब्रह्मण्यविभागापन्नस्य जगतस्तद्दूषकत्वाभावः प्रतिक्षिप्तः, अत एव 'न तु दृष्टान्तभावात्' इति सूत्रस्य भास्करोक्तयोजनापि व्युदस्ता भवति । तस्यापरमार्थत्वानाश्रयणेन क्षणमात्रमप्यपसरणमप्यशक्यमिति विशेषः । यादवमिश्रास्तु— असदिति चेदिति सूत्रमेकमधिकरणान्तरं 'नासदासी'दित्यादिविषयं वर्णयन्ति, सत्त्वासत्त्वनिषेधौ न परस्परप्रतिपक्षविधिरूपौ, व्याघातात्; अतोऽनुभयात्मकं निस्स्वभावं शून्यं प्रतीयत इति पूर्वपक्षीकृत्य लोकतः प्राप्तस्य प्रतिषेध्यत्वाल्लोके च कार्यावस्थायामेव घटसंस्थानादिव्याप्तिरूपसत्त्वं तदभावरूपकपालत्वादिव्याप्तिलक्षणमसत्त्वञ्चोपलभ्यत इति कारणदशायां तदुभयं निषिध्यते "आनीदवातम्" इति

* भावप्रकाशिका *

नान्यस्येति व्यवस्थोक्तिरित्यर्थः । (पूर्वोक्तदोष इति) निवृत्ताविद्यानां पुनरुत्पत्तिस्स्यादित्यर्थः । (उपाधिविरह एव भेद इतिचेदिति) यद्यपि निवृत्तोपाधित्वमेव भेद इति चेदिति पूर्वमेव शङ्कितम् तथापि दूषणान्तरदानाय पुनरुपन्यास इति द्रष्टव्यम् । (अंशभेदस्याबाध्यत्व इति) उपाधिविरहरूपांशभेदस्य बाध्यत्व इत्यर्थः । (क्षणमात्रमपसरणमपीति) मृषावादिमतमपरमार्थकञ्चुकाश्रयणादेकां कक्ष्यां सहते, भास्करमतं तु तावदपि न सहत इत्यर्थः । (कार्यावस्थायामेवेति) मूलकारणदशाव्यति-

* श्रुतप्रकाशिका *

वाक्यशेषविरोधाच्च ; अतो न स्वरूपसत्त्वनिषेधः , अह्रस्वमदीर्घं व्योमेतिवत् । नह्यत्र परस्परप्रतिपक्षविधिः , नापि निःस्वभावत्वोक्तिः , तद्वदिति सिद्धान्तितम् । अपीतावित्यादि चाधिकरणान्तरमाहुः, तत्र भावाभावरूपसर्वावस्थाप्रतिषेधोऽनुपपन्नः, विनाशहेतुवैयर्थ्यप्रसङ्गात् । विनाशहेतुना न कारणमेव निष्पाद्यम् तस्य प्रागपि सत्त्वात् । नापि कार्यान्तरम्, प्रलये सर्वकार्यविनाशानुपपत्तिप्रसङ्गात्, अतोऽवस्थान्तरोत्पादः प्रलयः, अतः पूर्वाधिकरणसिद्धान्तानुपपत्तेः शून्यं तत्त्वमित्याक्षिप्य घटत्वकपालत्वादिस्थानीयभावाभावरूपविकल्पशब्दवाच्यस्थूलावस्थानिषेधेऽपि शक्तिमात्रावशेषसूक्ष्मावस्थाभ्युपगमात्तत्र दृष्टान्तभावान्न तद्वत् प्रसङ्गादसामञ्जस्यमितिसिद्धान्तितम् । दृष्टान्तश्च तप्तलोहसमावर्तितं जलम् , तद्धि जलं जलरूपेणानुपलभ्यम् , सक्तुपिण्डशैथिल्यहेतुजलवत् खड्गधाराद्यशैथिल्यहेतुसूक्ष्मरूपेण पुनर्जलपरिणामशक्तियुक्तं लोहादन्यत्वबुद्ध्यविषयस्तिष्ठतीत्युक्तम् । तत्र तावत् 'असदिति चे' दितिसूत्रव्याख्यानमयुक्तम्, सूत्राक्षरानुगुण्याभावात् । सदसतोरन्यतरकोटिवाचकोऽसच्छब्दः कथं कोटिद्वयोत्तीर्णतामुपस्थापयेत् ? अन्यतरकोटिसमर्पकतया हि सच्छब्दस्यानुभयात्मकत्वानुपस्थापकत्वम् , निरूपणीयाभावाच्च तदयुक्तम् , 'नासदासीन्नो सदासीत्तदानी' मित्यत्र प्रलयदशायां निषिध्यमानं सच्छब्दवाच्यं कार्यावस्थं किमपीति सिद्धम् । सहप्रयोगान्नञ्समाससामर्थ्याच्चासच्छब्दवाच्यमपि सद्व्यतिरिक्तमिति सर्वसम्मतम्; तदुभयं किमित्यपेक्षायां 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्' 'विज्ञानं चाविज्ञानं च' इति वाक्येन चेतनमचेतनं चेति ज्ञायते , इदञ्च गतिसामान्यनयस्थानप्रमाणाभ्यां सिद्धमिति न पूर्वपक्षोत्थानम् । किञ्च यद्यर्थान्तरपरत्वं शङ्कनीयं तर्हि सदसदात्मकत्वं किं न शङ्क्यते ? एकस्य तथात्वं विरुद्धमिति चेदेकस्यानुभयात्मकत्वमपि विरुद्धम्, अदर्शनात् । अह्रस्वमदीर्घ

❀ भावप्रकाशिका ❀

रिक्तदशायामित्यर्थः । ( आनीदवातमिति ) 'अन प्राणने' आनीदिति सत्त्वलक्षणाननसम्बन्धकथनादितिभावः । ( विनाशहेतुवैयर्थ्यप्रसङ्गादिति ) प्रलयहेतुभूतसञ्जिहीर्षादिवैयर्थ्यप्रसङ्गादित्यर्थः । ( तद्वत्प्रसङ्गादसामञ्जस्यमिति ) तद्वत्प्रसङ्गात्— शून्यत्वप्रसङ्गादित्यर्थः । ( असच्छब्दवाच्यमपीति ) कार्यावस्थ-

# एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

* श्रुतप्रकाशिका *

व्योमेतिवदनुभयात्मकत्वमविरुद्धमिति चेत् दशाङ्गुलं चतुरङ्गुलापेक्षया दीर्घं द्वादशाङ्गुलापेक्षया ह्रस्वमितिवदविरोधादुभयात्मकत्वमपि शङ्कनीयम्। सदसद्रूपेणो-भयात्मकत्वं विरुद्धमिति चेत् तदुभयवैलक्षण्यरूपमनुभयात्मकत्वमपि विरुद्धत्वान्न शक्यम् । आपाततः शङ्केत्यप्ययुक्तम् , उभयात्मकत्वेऽप्यापाततः शङ्काया नि-वारकाभावात् । किञ्च उत्तरत्र 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेणे'ति शङ्कापरि-हारयोरुत्थानायोगाच्च नैवमधिकरणद्वयं कल्पनीयम्. तत्र हि कार्यस्यासत्त्वात् कारणादभेदोऽनुपपन्न इत्याक्षिप्य भावविकारषट्कान्तर्गतनामरूपसंयोगलक्षण-सत्त्वादर्थान्तरेण शक्तिमात्रावशेषवस्तुमात्रत्वरूपेण धर्मान्तरेणासद्व्यपदेशः, न तु स्वरूपसत्त्वाभावेनेति भवद्भिर्व्याख्यास्यते । इह च विकल्पसंज्ञकभावा-भावात्मकस्थूलरूपनामसंयोगलक्षणं सत्त्वं प्रलयदशायां निषेध्यम्, न तु स्वरूप-सत्त्वमित्यधिकरणद्वयेन निर्णीयते, कथमसद्व्यपदेशः स्वरूपासत्त्वशङ्कामङ्कुरयेत् ?। नन्वत्र सत्त्वासत्त्वयोरुभयोरपि प्रतिषेधो निरूपितः, तत्र तु केवलासत्त्वविधि-र्निरूप्यत इति चेन्न ; अपीतावित्यधिकरणे प्रलयदशायां निषेध्यं सत्त्वं स्थूलावस्थायोगलक्षणम्, शक्तिमात्रावशेषवस्तुमात्ररूपेण सत्त्वं तु न निषेध्यमिति शिक्षितत्वादसच्छब्दस्य सत्त्वप्रतिषेधकत्वात्तदभावस्य शक्तिमात्रावशेषसूक्ष्मदशा-रूपत्वादसच्छब्दस्य तदवस्थवस्तुमात्रोपस्थापकत्वसिद्धेरधिकाशङ्काभावाच्च। पर-स्परप्रतिपक्षाकारद्वयनिषेधेन व्याकुलत्वाभाव एव 'असद्वा इद'मितिवाक्यस्य वैष-म्यम् , तत्कथं शिक्षितार्थशैथिल्यशङ्कां जनयेत् ? तस्मात्सालक्षण्यनियमनिषेधानन्त-रमसतः कार्यत्वशङ्कानिरासपरम् 'असदिति चेदि'ति सूत्रम् , कार्यकारणयोरनन्यत्वे कारणस्य ब्रह्मणः परिणामादिदोषशङ्काव्युदासकमपीतावित्यादिसूत्रद्वयमित्येषां सूत्राणां परमप्रकृतसालक्षण्यनियमभङ्गानुबन्धित्वादैकाधिकरण्यं युक्तम् ॥

❁ भावप्रकाशिका ❁

मित्यनुषज्यते । ( अधिकरणद्वयेन निर्णीयत इति ) असदिति चेत् अपीता-वित्यधिकरणद्वयेनेत्यर्थः । ( तदभावस्येति ) सत्त्वाभावस्येत्यर्थः ॥ ७ ॥

४ अधिकरणम्

शिष्टाः— परिशिष्टाः, न विद्यते वेदपरिग्रहो येषामित्यपरिग्रहाः; शिष्टाश्चापरिग्रहाश्च शिष्टापरिग्रहाः। एतेन वेदापरिगृहीतसाङ्ख्यपक्षक्षपणेन परिशिष्टाश्च वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्याः। परमाणुकारणवादेऽमीषां सर्वेषां संवादात्कारणवस्तुविषयस्य तर्कस्या-

---

* श्रुतप्रकाशिका *

॥ एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ किं ब्रह्मकारणत्वं विचाल्यम् ? उत न ? इति . किं वेदान्तवाक्यानां कणादाक्षपादादितर्कविरोधोऽन्यपरत्वमापादयति नेति . किं बहुवादिसम्मतपरमाणुकारणवादनिरसने तर्काप्रतिष्ठानहेतुः प्रभवति न ? इति। यदा न प्रभवति तदा कणादाद्युक्ततर्कविरोधेन श्रुतीनामन्यपरत्वात् ब्रह्मकारणत्वं विचाल्यं भवति, यदा प्रभवति तदा तदुक्तविरोधस्य श्रुतीनामन्यपरताहेतुत्वाभावात् ब्रह्मकारणत्वमविचाल्यं भवति, शिष्टशब्दमपरिग्रहशब्दं समासं च व्याचष्टे (शिष्टा इत्यादिना) अनेन शिष्टैरपरिगृहीता इति परोक्तव्याख्यानव्यावृत्तिः, तथा सति हि प्रधानकारणवादस्यापि शिष्टैरपरिगृहीतत्वासिद्धिः। ननु कथं मोक्षधर्मादिषु परिगृहीतस्य साङ्ख्यस्य शिष्टापरिगृहीतत्वम्. कथं धर्मशास्त्रपरिगृहीतस्य न्यायवैशेषिकादिपक्षस्य शिष्टापरिगृहीतत्वम् ? स्मर्यते हि "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश" इति "अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या

* भावप्रकाशिका *

(तथा सति हीति) शिष्टाश्च ते अपरिग्रहाश्चेति व्याख्याने पूर्वोक्तप्रधानकारणवादस्यापि शिष्टापरिग्रहाऽसिध्यति। शिष्टैरपरिगृहीता इति व्याख्याने तु वक्ष्यमाणानां वैशेषिकादिमतानामेव शिष्टापरिगृहीतत्वं पूर्वोक्तस्य प्रधानकारणवादस्य तु शिष्टपरिगृहीतत्वमित्येव प्रतीतेरितिभावः। प्रतिबन्द्या समाधत्ते (कथं धर्मशास्त्रपरिगृहीतस्येति) ननु मीमांसान्याय-

प्रतिष्ठितत्वं न शक्यते वक्तुमित्यधिकाशङ्का । तावन्मात्रसंवादेऽपि तर्कमूलत्वाविशेषात्परमाणुस्वरूपेऽपि शून्यात्मकत्वाशून्यात्मकत्वज्ञानात्मकत्वार्थात्मकत्वक्षणिकत्वनित्यत्वैकान्तत्वानेकान्तत्वसत्यासत्यात्मकत्वादिविसंवाददर्शनाच्चाप्रतिष्ठितत्वमेवेति परिहारः ॥ ७ ॥

* श्रुतप्रकाशिका *

श्चेताश्वतुर्दश" इति पराशरः । तत्प्रणीता प्रमाणप्रमेयव्यवहारमर्यादा सर्वाङ्गीकार्या । वेदप्रामाण्यमीश्वरस्तदुपासनान्मोक्ष इत्यादि च तैरभ्युपेतम्, तत्कथं तस्यापरिग्रहः? नैयायिको वैशेषिकश्चेति नातीव भेद इति । कारणतत्त्वस्य प्रधानप्रतिपाद्यत्वात् परमाणुकारणवादस्यौपनिषदब्रह्मकारणत्वविरोधात् विरुद्धांशस्यापरिगृहीतत्वात्तदभिप्रायो वैशेषिकादीनां शिष्टापरिग्रहव्यपदेश इति चेत् स्वतन्त्रप्रधानकारणवादस्यापि ब्रह्मकारणवादविरुद्धत्वादुपनिषद्विरुद्धे प्रधानप्रतिपाद्ये परिग्रहाभावाच्च साङ्ख्यपक्षस्यापि शिष्टापरिग्रहव्यपदेशस्तुल्यतया प्राप्तः, एकदेशाविरोधोऽपि प्रधानप्रतिपाद्यांशविरोधस्याविशिष्टत्वात् । सूत्राभिप्रेतार्थमाह (परमाणिवत्यादिना) माध्यमिकमतं शून्यात्मकत्वम्, योगाचारमतं ज्ञानात्मकत्वम्, क्षणिकत्वं बौद्धत्रयाभिमतम्, एकान्तत्वमार्हतव्यतिरिक्तानामभिमतम्, सत्यत्वं वैशेषिकादिमतम् असत्यत्वं योगाचारमतम्, आदिशब्देनैकविधत्वचतुर्विधत्वं विवक्षितम्, एकविधत्वमार्हमते । परैस्तु सौगतवैशेषिकादीनां तर्ककुशलताप्रसिद्धेरधिका शङ्का, तर्कामूलत्वाविशेषात्परिहार इत्युक्तम्। तर्कमूल-

७ भावप्रकाशिका ७

विस्तर इति न्यायमतस्य परिगृहीतत्वेपि वैशेषिकमतस्य परिगृहीतत्वं नेत्याशङ्क्याह (नैयायिकोवैशेषिकश्चेति) शङ्कते (कारणत्वस्येति) भाष्ये— परमाणुकारणवाद इत्यादिना परमाणुत्वकीर्तनेनान्यदपि शङ्काकारणं सूचितम्. अल्पाधिकपरिमाणयोर्हि तन्तुपटादिषूपादानोपादेयभावो दृष्टः, नतु वैपरीत्यं दृष्टम् । अतस्त्रिसरेणुप्रभृतिषु पृथिवीलोकादिपर्यन्तेषु कार्येषु परमाणूनामेव कारणत्वं युक्तम्, नतु कार्येभ्योऽधिकपरिमाणस्य प्रधानादेरित्यानन्दगिरिणो-

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

५ अधिकरणम्

पुनरपि साङ्ख्यः प्रत्यवतिष्ठते— यदुक्तं स्थूलसूक्ष्मचिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणः कार्यकारणरूपत्वाज्जीवब्रह्मणोः स्वभावविभाग उपपद्यत

---

* श्रुतप्रकाशिका *

त्वाविशेषेऽपि परमाणुकारणवादे सर्वसंवादात्प्रतिष्ठितत्वमिति शङ्का त्ववतिष्ठते, अस्यां तु परिहृतायां तार्किकत्वप्रसिद्धिरकिञ्चित्करी; अतः प्रबलशङ्कापरिहारावेव सूत्राभिप्रेताविति युक्तम् ॥ इति शिष्टापरिग्रहाधिकरणं समाप्तम् ॥

॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ सङ्गतिमाह ( पुनरपीति ) 'न तु दृष्टान्तभावा'दित्यत्र शरीरगतबालत्वयुवत्वादिधर्माणां शरीरिण्यप्रसङ्गं दृष्टान्तीकृत्य परमात्मनि शरीरभूतचिदचिद्गतदोषाप्रसक्तिरुक्ता ; अत्र शरीरसंसर्गप्रयुक्तभोक्तृत्वप्रसङ्गः परिह्रियते, पूर्ववदेव प्रथमो विचारः, तदर्थं किं भोक्तृजीवशरीरकस्य ब्रह्मणस्स्वशरीरभूताज्जीवान्निरतिशयानन्दस्वभावतया विलक्षणत्वमस्ति? न? इति. तदर्थं किं ब्रह्मणः सशरीरत्वे जीववत्सुखदुःखभोक्तृत्वं प्रसज्यते ? उत न? इति। दुःखादिभोक्तृत्वं किं शरीरप्रयुक्तम् ? उतान्यप्रयुक्तम् ? इति। 'न ह वै सशरीरस्ये'तिश्रुतौ शरीरशब्दः किं शरीरमात्रपरः ? उत पुण्यापुण्यनिमित्तशरीरपरः ? इति। अत्र चरमो विचारः प्रस्तुतोपयोगेन बुद्धिस्थतया कृतः, न त्वसाधारणतया कर्त्तव्यत्वात्. यदा शरीरमात्रपरः तदा दुःखादिभोगस्य शरीरत्वप्रयुक्तत्वात् ब्रह्मणोऽपि तद्भोगप्रसङ्गेन शरीरभूताज्जीवान्निरतिशयानन्दतया विलक्षणत्वं नास्तीति स्यात्, यदा तस्मिन् वाक्ये शरीरशब्दः कर्मकृतशरीरपरः; तदा दुःखादिभोगस्य शरीरत्वप्रयुक्तत्वाभावात् ब्रह्मणः तद्भोगाप्रसङ्गेन शरीरभूताज्जीवान्निर-

* भावप्रकाशिका *

क्तमनुवदति ( तर्ककुशलताप्रसिद्धेरिति ) ॥ इति शिष्टापरिग्रहाधिकरणम् ॥

(चरमो विचार इति) न ह वै सशरीरस्येत्यर्थः । ( न त्वसाधारणतयेति ) भोक्तृत्वं किं सशरीरत्वप्रयुक्तम् , उत कर्मपारतन्त्र्यप्रयुक्तम् ?

इति ; स तु विभागो न सम्भवति, ब्रह्मणः सशरीरत्वे तस्य भोक्तृत्वापत्तेः, सशरीरत्वे जीवस्येवेश्वरस्यापि सशरीरत्वप्रयुक्तसुखदुःखयोर्भोक्तृत्वस्यावर्जनीयत्वात् । ननु च 'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' इत्यत्रेश्वरस्य भोगप्रसङ्गपरिहार उक्तः, नैवम्, तत्र ह्युपास्यतया हृदयायतने सन्निहितस्य शरीरान्तर्वर्तित्वमात्रेण भोगप्रसङ्गो न विद्यत इत्युक्तम्, इह तु जीववद्ब्रह्मणोऽपि सशरीरत्वे तद्वदेव सुखदुःखयोर्भोक्तृत्वप्रसङ्गो दुर्वार इत्युच्यते ; दृश्यते हि सशरीराणां जीवानां शरीरगतबालत्वस्थविरत्वादिविकारासम्भवेऽपि शरीरधातुसा-

---

* श्रुतप्रकाशिका *

तिशयानन्दतया वैलक्षण्यमस्तीति सिध्यति । कथं शरीरित्वे भोक्तृत्वमिति शङ्कायां विवृणोति ( सशरीरत्व इति ) अधिकरणारम्भमाक्षिपति ( ननु चेति ) परिहरति ( नैवमिति ) ( शरीरान्तर्वर्तित्वमात्रेणेति ) मात्रशब्देन शरीरं प्रति स्वाम्यव्यावृत्तिः, जीववत्सशरीरत्व इत्यनेन शरीरस्वाम्यमभिप्रेतम्, एवं शङ्काया मुखभेदो दर्शितः । यथा कार्यवशात्परगृहं प्रविष्टस्य गृहसन्निधिमात्रेण गृहपतित्वप्रयुक्तानर्थाभ्युदयभाक्त्वं न भवति तथोपास्यत्वाय हृदयस्थस्य शरीरसन्निधिमात्रेण शरीरत्वप्रयुक्तभोक्तृत्वापत्तिर्नास्तीति 'सम्भोगप्राप्तिरितिचे'दित्यत्रोक्तम्, अत्र तु शरीरस्वामित्वप्रयुक्तभोक्तृत्वमाशङ्क्यमितिभेद इत्यर्थः । तथापि परिहारैक्याच्छङ्कानुदय इति न वाच्यम् ; अत्रैव वक्तव्यं दुःखादेः कर्मोपाधिकत्वमुपजीव्य सन्निधिमात्रप्रसक्तायाः भोक्तृत्वशङ्कायास्तत्र परिहृतत्वात् । सूत्रभेदस्तु भोक्तृत्वाशङ्काद्वारभेदनिबन्धनः । ( असम्भवेऽपीति ) अनेन 'न तु दृष्टान्तभावा'दित्यत्र

छ भावप्रकाशिका छ

इति चिन्ताया एव तदधिकरणकृत्यत्वादितिभावः । ( सूत्रभेदस्त्विति ) सम्भोग-

म्यवैषम्यनिमित्तसुखदुःखयोगः । श्रुतिश्च "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति । अतः सशरीरब्रह्मकारणवादे जीवेश्वरस्वभावविभागासम्भवात् केवलब्रह्मकारणवादे मृत्सुवर्णादिवज्जगद्गतापुरुषार्थादिसर्वविशेषाश्रयत्वप्रसङ्गाच्च प्रधानकारणवाद एव ज्यायानिति चेत्—

अत्रोत्तरम्—स्याल्लोकवदिति। स्यादेव विभागो जीवेश्वरस्वभावयोः, नहि जीवस्य शरीरधातुसाम्यवैषम्यनिमित्तं सुखदुःखयोर्भोक्तृत्वं सशरीरत्वकृतम्, अपि तु पुण्यपापरूपकर्म्मकृतम् ।'न ह वै सशरीरस्य' इत्यपि कर्मारब्धदेहविषयम्, 'स एकधा भवति त्रिधा भवति' 'स यदि पितृलोककामो भवति' 'स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः' इति कर्मबन्धविनिर्मुक्तस्याविर्भूतस्वरूपस्य सशरीरस्यैवापुरुषार्थगन्धाभावात् । अपहतपाप्मनस्तु परमात्मनः स्थूलसूक्ष्मरूपकृत्स्नजगच्छरीरत्वेऽपि कर्मसम्बन्धगन्धो ना-

* श्रुतप्रकाशिका *

परिहृतांश उक्तः । अपरिहृतांशमाह (अत इति) परिहरति (अत्रोत्तरमिति) अत्र व्युत्पाद्यन्यायं दर्शयति (अपि त्विति) (न ह वै सशरीरस्येत्यपीति) मुक्तिपादे वक्ष्यमाणमर्थमुपजीव्यात्र निर्वाहः कृतः ।

७ भावप्रकाशिका ७

प्राप्तिरित्यस्य भोक्त्रापत्तेरिति सूत्रस्य चेत्यर्थः । (मुक्तिपाद इति) भावं जै-

स्तीति नतरामपुरुषार्थगन्धप्रसङ्गः। लोकवत्– यथा लोके राजशासनानुवर्तिनां तदतिवर्तिनां च राजानुग्रहनिग्रहकृतसुखदुःखयोगेऽपि न शरीरित्वमात्रेण शासके राज्ञ्यपि शासनानुवृत्त्यतिवृत्तिनिमित्तसुखदुःखयोर्भोक्तृत्वप्रसङ्गः। यथाह द्रमिडभाष्यकारः "यथा लोके राजा प्रचुरदन्दशूके घोरेऽनर्थसङ्कटेऽपि प्रदेशे वर्त्तमानो व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते, अभिप्रेतांश्च लोकान् परिपालयिष्यसि भोगांश्च गन्धादीनविश्वजनोपभोग्यान् धारयति, तथाऽसौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते, रक्षति च लोकान् ब्रह्मलोकादीन् भोगांश्चाविश्वजनोपभोग्यान् धारयति" इति। मृत्सुवर्णादिवद्ब्रह्मस्वरूपपरिणामस्तु नैवाभ्युपगम्यते, अविकारत्वनिर्दोषादिश्रुतेः। यत्तु परैर्ब्रह्मकारणवादे भोक्तृ-

---

* श्रुतप्रकाशिका *

नत्वत्रैव निर्वाह्यत्वाच्छ्रुतेः (व्यजनादीति) आदिशब्देन तत्तदनिष्टनिवारणसाधनानि विवक्षितानि। (भ्रमत्स्वसामर्थ्यचामर इति) अत्र चामरग्रहणमनिष्टनिवारणानुरूपवस्तूनामुपलक्षणम्. सशरीरब्रह्मकारणत्वे जीवेश्वरविभागाभावः परिहृतः, केवलब्रह्मकारणवादे पूर्वोक्तजगद्गतापुरुषार्थादिप्रसङ्गमनभ्युपगमेन परिहरति (मृत्सुवर्णादीति)। अस्य सूत्रस्य परैः कृतमन्यथाव्याख्यानमनुवदति (यत्त्विति) भोक्तृशब्दो भोक्तृत्वपर इति तैरप्युक्तम्.

ϑ भावप्रकाशिका ϑ

मिनिरितिसूत्र इति भावः। भाष्ये— प्रचुरदन्दशूक इति। दन्दशूकशब्दो दन्दश्यत इत्यवयवव्युत्पत्त्या दंशमशकादिपरः, नतु रूढ्या सर्पपर इति द्रष्टव्यम्।

भोग्यविभागाभावमाशङ्क्य समुद्रफेनतरङ्गदृष्टान्तेन विभागप्रतिपादनपरं सूत्रं व्याख्यातम्, तदयुक्तम्; अन्तर्भावितशक्त्यविद्योपाधिकाद्ब्रह्मणस्सृष्टिमभ्युपगच्छतामेवमाक्षेपपरिहारयोरसङ्गतत्वात् कारणान्तर्गतशक्त्यविद्योपाध्युपहितस्य भोक्तृत्वादुपाधेश्च भोग्यत्वात्। विलक्षणयोस्तयोः परस्परभावापत्तिर्हि न सम्भवति, स्वरूपपरिणामस्तु तैरपि नाभ्युपेयते 'न कर्माविभागादिति चेन्नानादित्वात्' इति क्षेत्रज्ञानां तद्गत-

---

* श्रुतप्रकशिका *

भोग्यस्य भोक्तृत्वापत्तिं भोक्तुर्भोग्यत्वापत्तिं चाशङ्क्य परैः परिहृतम्. तद्दूषयति (तदयुक्तमिति) आक्षेपपरिहारयोरसङ्गतत्वमुपपादयति (कारणान्तर्गतेति) (उपाधेश्च भोग्यत्वादिति) अत्रोपाधिशब्दः शक्त्यविद्योपाधीनां त्रयाणामपि वाचकः, यथा वादशब्दः कथासामान्यवाची कथाविशेषवाची च तद्वत्। यद्वा उपाधिशब्देनाचिदंशो विवक्षितः, उपहितब्रह्मणो भोक्तृत्वमुपाधेर्भोग्यत्वं चास्तु, तथापि तयोरुपाधिब्रह्मणोरविभाग आशङ्क्य परिह्रियत इत्यत्राह (विलक्षणयोरिति) स्वरूपस्यैव परिणामे शङ्कापरिहारावुपपद्येते इत्यत्राह (स्वरूपेति) कुत इत्यत्राह (न कर्मेति) क्षेत्रज्ञानादित्वाभ्युपगमे उपहितस्य ब्रह्मणः क्षेत्रज्ञत्वेनोपाधेश्च भोग्यत्वरूपेण नित्यत्वाभ्युपगमान्नित्यत्वेनाभ्युपगतयोस्तयोरविभागाभावः सिद्ध एवेत्यर्थः। अभ्युपगम्य दूषणमाह

* भावप्रकाशिका *

(भोग्यस्य भोक्तृतापत्तिमिति) एकब्रह्मोपादेयत्वेन भोक्तृभोग्ययोरुपादानभूतब्रह्मानन्यतया भोक्तृभोग्ययोः परस्पराभेदप्रसङ्ग इत्याशङ्क्य एकसमुद्रोपादानकतया समुद्रादनन्ययोरपि फेनतरङ्गयोः परस्परभेदवद्भोक्तृभोग्यव्यवस्थेति परिहृतमित्यर्थः। (त्रयाणामपि वाचक इति) कारणान्तर्गतशक्त्यविद्योपाध्युपहितस्येति कुदृष्टित्रयाभिहितानां त्रयाणामपि परामर्शादिति भावः ॥ * ॥

कर्म्मणां चानादित्वप्रतिपादनात् । स्वरूपपरिणामाभ्युपगमेऽपि भोक्तृभोग्याविभागाशङ्का कस्यचिदपि न जायते मृत्सुवर्णादिपरिणामरूपघटशरावकटकमुकुटादिविभागवद्भोक्तृभोग्यविभागोपपत्तेः । स्वरूपपरिणामे च ब्रह्मण एव भोक्तृभोग्यत्वापत्तिरिति पुनरप्यसामञ्जस्यमेव ॥ १४ ॥ ॥ इति भोक्त्रापत्त्यधिकरणम् ॥

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥

६ अधिकरणम्

'असदिति चेन्न प्रतिषेधमात्रत्वात्' इत्यादिषु कारणभूताद्ब्रह्मणः कार्य्यभूतस्य जगतोऽन-

---

* श्रुतप्रकाशिका *

( स्वरूपपरिणामाभ्युपगमेऽपीति ) दृष्टान्तमाह ( मृत्सुवर्णादीति ) कटकमुकुटादीनां कालभेदेन अविभाग उपपद्यत इति चेत् तत्फेनतरङ्गदृष्टान्तेपि समानम् । यस्तु विभागः फेनतरङ्गदृष्टान्तेन साध्यते स स्वरूपपरिणामाभ्युपगमेऽपि स्वयमेव सिध्यतीति भावः । स्वरूपपरिणामाभ्युपगमे 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' 'न तु दृष्टान्तभावात्' इति विकारापुरुषार्थापातान्निर्विकारत्वादिश्रुतीनामसामञ्जस्यमुक्तं परिहृतम्, तच्च दूषणमपरिहृतं स्यादित्याह ( स्वरूपपरिणामे चेति ) ॥

॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ सङ्गतिमाह ( असदितीति ) इत्यादिषु– सूत्रेष्वित्यर्थः । ब्रह्मणो जगत्कारणत्वं सम्भवति नेति । किं ब्रह्मकार्यत्वे जगतः श्रुतिसिद्धं ब्रह्मणोऽनन्यत्वं सम्भवति, नेति । किं 'वाचारम्भण'मित्यादिवाक्यानि कारणस्यैवावस्थान्तरापत्त्या कार्यत्वं बोधयितुं प्रभवन्ति नेति । किं बुद्धिशब्दान्तरादयोऽवस्थाभेदनिबन्धनाः, उत द्रव्यभेदनिबन्धनाः ? इति । यदा बुद्धिभेदादयः स्वरूपान्यत्वनिबन्धनाः तदा कार्यस्य कारणादन्यतया जगतो ब्रह्मान्यत्वापत्तेस्तदनन्यतया व्यपदिश्यमानं ब्रह्म न कारणं भवतीति स्यात् । यदा बुद्धिभेदादीनामवस्थान्तरनिबन्धनत्वं तदा कार्यस्य कारणादनन्यत्वेन जगतो ब्रह्मानन्यत्व-

**न्यत्वमभ्युपगम्य ब्रह्मणो जगत्कारणत्वमुपपादितम्, इदानीं तदेवानन्यत्वमाक्षिप्य समाधीयते । तत्र**

* श्रुतप्रकाशिका *

सिद्धेस्तदनन्यतया व्यपदिश्यमानस्य ब्रह्मणो जगत्कारणत्वं सम्भवतीति सिध्यति। अत्र केचित्तदनन्यत्वं वर्णयन्ति, तस्मात्—कारणाद्ब्रह्मणः कार्यस्यानन्यत्वम्, परमार्थतो व्यतिरेकेणाभाव इति। जडाजडयोरेकत्वायोगादनन्यत्वं नाम नैक्यम्, किन्तु भेदाभावः। भेदस्य प्रतीयमानत्वादसत्त्वस्य दुर्वचत्वात् परमार्थतो व्यतिरेकेणाभाव इत्युक्तम्; तत्तावन्निरूप्यम्। यद्यनन्यशब्दो बहुव्रीहिरभिमतः तदाऽन्यशून्यत्वमनन्यत्वम्, तेन कार्यधर्मिनिषेधात् प्रपञ्चमिथ्यात्वं सिध्यति, यथा निर्धनत्वमिति धनाभावः, तथा सति तस्यानन्यत्वमिति योजनीयम्, न तु तस्मादिति, पुरुषस्य निर्धनत्वमिति हि व्यपदेशः, न तु पुरुषान्निर्धनत्वमिति; तस्मात्कारणात् परमार्थतोऽनन्यत्वम् व्यतिरेकेणाभावः कार्यस्यावगम्यत इति हि तेषां योजना, अतस्तत्पुरुषसामर्थ्यादनन्यत्वमन्यत्वाभावः स्यात्, ततश्चैक्यं विहितं स्यात्, न तु मिथ्यात्वम्, यथा मनुष्यादनन्यत्वं ब्राह्मणस्य वृक्षादनन्यत्वं पलाशस्येति न हि ब्राह्मणपलाशयोर्मिथ्यात्वमुच्यते, अतोऽनन्यत्वशब्देन न कार्यमिथ्यात्वसिद्धिः। परमार्थत इत्यध्याहारश्च तन्निरपेक्षार्थे सम्भवत्यनुपपन्नः । यदि परमार्थव्यतिरेकाभावशब्द ऐक्यपरो न भवेत् तदा व्यतिरेकशब्दवैयर्थ्यञ्च, परमार्थतोऽभाव इत्येतावता कार्यमिथ्यात्वसिद्धेः, अतस्तदसत्त्वमिति सूत्रं शिक्षणीयम्। 'मृत्तिकेत्येवे'ति विषयवाक्यस्य इतिशब्दश्च वृथा स्यात् । ननु तत्पुरुषपक्षेऽपि चन्द्रादनन्यो द्वितीयश्चन्द्र इत्यत्र द्वितीयचन्द्रस्येव कार्यस्य मिथ्यात्वसिद्धिरिति चेन्न; तत्रापि द्वित्वस्यैव मिथ्यात्वाच्चन्द्रैकत्वसिद्धेः। रज्जोरनन्यः सर्प इत्यत्र सर्पमिथ्यात्ववत्कार्यमिथ्यात्वमिति चेन्न; मातुरनन्या वन्ध्येतिवद्वाक्यस्य व्याहतार्थत्वात्। न व्याहतिः, सर्पमिथ्यात्वस्य विवक्षितत्वादिति चेन्न; अशाब्दत्वान्मिथ्यात्वस्य ।

❀ भावप्रकाशिका ❀

(तदसत्त्वमिति सूत्रं शिक्षणीयमिति) न विलक्षणत्वादित्यादिषु प्रपञ्चस्यापि प्रकृतत्वाविशेषेण तच्छब्देन प्रपञ्चस्यापि परामर्शः सम्भवतीति भावः।

* श्रुतप्रकाशिका *

ननु अग्निना सिञ्चेदित्यत्र सेचनवाचिशब्दस्य दाहवाचित्वाभावाद्धि व्याघातः, अत्र त्वमुख्यवृत्त्या व्याहतिपरिहार इति चेत्, अनन्यसर्पशब्दयोः कस्यामुख्यता मता ? यद्यनन्यशब्दस्यारोपितपरत्वमाश्रित्य सर्पो रज्ज्वारोपित इत्यर्थो विवक्षितः स्यात् तर्हि तद्वदेव तदनन्यत्वमिति सौत्रं पदमप्यारोपितपरं स्यात्, तदानीं 'सत्त्वाचापरस्ये'ति सूत्रवैयर्थ्यं स्यात्, तद्धि कारणदशायामपि कार्यस्य कारणे सत्त्वं ब्रूते, न ह्यारोपः पाश्चात्यः, आरोपितवस्तु प्रागपि सदिति युज्यते। प्रागपि कारणात्मना सत्त्वं युक्तमिति चेन्न; असतः कार्यस्य परमार्थभूतकारणात्मना सत्त्वायोगात्। यदि सर्पशब्देनाधिष्ठानं लक्ष्यते, एवमेव कार्यशब्दोपलक्षितस्य सन्मात्रस्य कारणादनन्यत्वं स्यात्; तथा सति कार्यस्य कारणादनन्यत्वं न सिध्यति, सन्मात्रस्यापरिणामिनो निर्दोषस्य कारणत्वाभावादविकारस्याकल्पितस्य कार्यत्वाभावाच्च। ननु सन्मात्रमेव कारणाविद्याशबलं कारणम्, कल्पिताकारोपहितं घटस्सन् पटस्सन् इत्यवभासमानं तदेव कार्यमित्यनन्यत्वमिति चेत्, अविद्याशबलत्वं नाम किमविद्योपलक्षितत्वम्, उताविद्याविशिष्टत्वम् ? प्रथमे ब्रह्मकारणत्वासिद्धिरेव, न हि शाखोपलक्षितस्य चन्द्रस्य पत्रपुष्पाद्युपादानत्वम् नापि सारसोपलक्षितकेदारस्य सारसगतगतिशब्दाद्युपादानत्वम्; यदि कारणाविद्याविशिष्टं सन्मात्रमेव कल्पिताकारविशिष्टं कार्यमित्यनन्यत्वम् ततोऽपि कारणावस्थप्रकृतिशरीरकमेव ब्रह्म कार्य्यावस्थप्रकृतिशरीरकमित्यनन्यत्वोपपादनं वरम्, 'यस्याव्यक्तं शरीरम्' 'यस्य पृथिवी शरीर'मिति श्रुत्यनुगुण-

* भावप्रकाशिका *

( सन्मात्रस्य कारणादनन्यत्वं स्यादिति ) कार्यस्य कारणानन्यत्वं नाम कार्यशब्दोपलक्षितस्य सन्मात्रस्य कारणशब्दोपलक्षितत्वात्सन्मात्रादनन्यत्वमिति पर्यवसितार्थ इति भावः। ( पत्रपुष्पाद्युपादानत्वमिति ) शाखागतपत्रपुष्पाद्युपादानत्वमित्यर्थः। ननु शाखागतपत्रपुष्पाणां चन्द्रगतत्वे प्रमाणाभावात् चन्द्रोपादानकत्वाभावेपि प्रपञ्चस्याविद्यागतत्वमेव न ब्रह्मगतत्वमित्यत्र प्रमाणाभावात्, प्रत्युत ब्रह्मण एव उपादानत्वग्राहकश्रुतिसत्त्वात् तदुपलक्षितस्य ब्रह्मण उपादानत्वं वक्तुं सुशकमिति चेन्न, ब्रह्मणो निर्विकारत्वश्रुतिबलेन तदसम्भवात्। न च विकारस्यापारमार्थिकत्वात्तदविरोध इति वाच्यम्; अद्याप्यपारमार्थिकत्वासिद्धस्तथा निर्वोहा-

* श्रुतप्रकाशिका *

निर्वाहे सम्भवत्यश्रुतकल्पनानुपपत्तेः सकलप्रमाणबाधाभावात् परमार्थत इत्यध्याहारनैरपेक्ष्यात् श्रुताविति शब्दवैयर्थ्याभावाच्च । यद्व्यतिरेकेण यस्य नोपलम्भसद्भावौ स तस्मादनतिरिक्तः, यथा मृदो घट इत्यनुमानपरं "भावे चोपलब्धेः" इति सूत्रं व्याख्यातम्, उपलम्भसद्भावयोः समुच्चयात् धूमाग्न्योरालोकचाक्षुषरूपयोश्चानन्यत्वव्युदास इति। अत्रोच्यते, न तावत्कार्यावस्थायाः कारणे नैकत्वं साध्यम्, अनुवृत्तसत्यनित्याजडस्य तस्य व्यावृत्तासत्यानित्यजडावस्थायाश्चैकत्वव्याघातात्. जातिव्यक्त्योरनेकान्तत्वाच्च. तत्राप्यभेदेऽभिमते गुणगुणिनोरनैकान्त्यम्. तत्राप्यभिन्नत्वं दुर्वचम्, जातिगुणयोरैक्यप्रसङ्गात् । जात्यभिन्नं हि वस्तु जातिरेव, तस्यैव गुणादभिन्नत्वे जातिरेव गुणः स्यात् । अस्त्विति न वाच्यम्; अयं नीलः पटः नायं नील इति जातिसद्भावेऽपि गुणाभावव्यवहारदर्शनात् । कार्य्यमिथ्यात्वे साध्ये दृष्टान्तः साध्यविकलः, मृत्कार्यस्य घटस्य बाधादर्शनात् । शुक्तिरूप्यदृष्टान्तपरिग्रहेऽप्यनैकान्त्यम्, हेतोर्घटेऽपि वृत्तेः प्रतिपन्नोपाधौ बाधितत्वेन सोपाधिकश्च, कार्यग्राहिप्रमाणबाधितत्वञ्च । तृतीये च सूत्रे यस्य कारणे पूर्वं सत्त्वं नास्ति न तत्ततो जायते, यथा सिकतासु तैलमित्यनन्यत्वे युक्तिरुक्ता. इयं च कार्यमिथ्यात्ववादिनोऽनुपपन्ना, रज्जौ प्रागसतः काल्पनिकसर्पस्यारोपदर्शनात् । प्रागपि सोऽस्ति चेत् प्रतीयेत, काल्पनिकानामर्थानां प्रतीयमानतयैव हि सत्त्वम् । ननु कल्पिताकारोपहितमधिष्ठानं कार्यम्, तत्राधिष्ठानस्वरूपं प्राङ्नास्ति चेत् न तत्र

❀ भावप्रकाशिका ❀

योगादिति भावः । (यद्व्यतिरेकेणेति) 'भावे चोपलब्धे'रितिसूत्रे भाव इत्येतदुपलब्धेरप्युपलक्षणम्, उपलब्धेरित्येतद्भावस्याप्युपलक्षणम्; तथा च भावे उपलब्धौ च भावादुपलब्धेश्चेत्यर्थः, ततश्च कारणभावे कार्यस्य भावात् कारणोपलब्धौ कार्योपलब्धेश्च कार्यस्य कारणादनन्यत्वमिति व्याख्यातमित्यर्थः । (धूमाग्न्योरिति) अग्निभाव एव धूमस्य भावः । आलोकोपलम्भे सत्येव रूपोपलम्भ इति एकैकसत्त्वेपि धूमस्याग्न्युपलम्भानुविधाय्युपलम्भविषयत्वाभावाद्रूपस्य चालोकसद्भावानुविधायित्वसद्भावाच्च न व्यभिचार इति भावः । (जातिव्यक्त्योरनेकान्तत्वाच्चेति) यद्यपि जात्युपलम्भ एव व्यक्त्युपलम्भ इति न नियमोऽस्ति, दूर-

* श्रुतप्रकाशिका *

कार्यकल्पना भवतीति सूत्रार्थ इति चेत्, तत्तु निरधिष्ठानभ्रमासम्भवनिराकरणेन दत्तोत्तरं भवति। यदुक्तं कारणस्य सत्त्वं प्रामाणिकम् कार्यं च सदेवावभासते तत्र सत्त्वद्वयानुपलम्भात्सन्मात्रातिरिक्तः कार्याकारो मिथ्येति। तदयुक्तम्; सामान्यरूपमुपाधिरूपमसद्व्यावृत्तिरूपं वा सत्त्वं विशेषणविशेष्ययोः साधारणं दृष्टमिति तावता विशेषणमिथ्यात्वासिद्धेः । न हि दण्डिनि स्पन्दमाने स्पन्दमानत्वमेकं दृष्टमिति दण्डदेवदत्तयोरनन्यत्वम् ; अतो मृषावाद्यभिमतमनन्यत्वमनुपपन्नम्॥— औपाधिकभेदाभेदवादेऽपि परिणामास्पदस्योपाधेश्च ब्रह्मणश्च भिन्नाभिन्नतयाऽनन्यत्वं वाच्यम्; तत्र खण्डगतशृङ्गलोमादीनां खण्डादभिन्नेन मुण्डेनानन्यत्ववज्जगद्ब्रह्मणोरनन्यत्वममुख्यम्। ननु न केवलं खण्डमुण्डयोरिव भिन्नाभिन्नत्वमात्रमचिद्ब्रह्मणोः, किन्तु ब्रह्मणः शक्तिरूपत्वादुपाधेः, यथाऽग्नेरौष्ण्यादिः, अतः शक्तिशक्तिमद्रूपेणोपाधिब्रह्मणोर्भिन्नाभिन्नत्वाज्जगतो ब्रह्मानन्यत्वमिति। उच्यते; शक्तिर्नाम किं सामर्थ्यपर्यायो ब्रह्मधर्मविशेषः? उत सूक्ष्मावस्था प्रकृतिरेव? आद्ये ब्रह्मणो निर्विकारत्वश्रुतिविरोधः। ब्रह्मणो मृत्पिण्डनिर्विशेषत्वात्, मृत्पिण्डो हि घटादिपरिणामशक्तियुक्तो विकारीत्युच्यते। द्वितीये तु खण्डकार्यस्य शृङ्गादेर्मुण्डादनन्यत्ववदमुख्यत्वम्, अतस्तदनुपपन्नम्॥ यादवप्रकाशमतेऽपि भोक्तृभोग्यनियन्तॄणां ब्रह्मांशत्वाभ्युपगमान्महदादिकार्याणां भोक्तृनियन्तृभ्यामनन्यत्वमयःकार्यस्य रूपस्य सुवर्णरजताभ्यामिवानुपपन्नम्, महदादीनां प्रकृतेरनन्यत्वे ब्रह्मकारणवादासिद्धिः, सन्मात्रब्रह्मणोऽनन्यत्वं सच्छब्दप्रवृत्तिनिमित्तविशेषनिरूपणाच्छिथिलीभवति, अबाध्यत्वादिकं हि प्रवृत्तिनिमित्तत्वेन वर्तते, जगत्सतोऽनन्यदित्युक्ते जगदबाध्यमित्युक्तं भवति, ततश्च ब्रह्मानन्यत्वमनुक्तं स्यात्. यस्य भाव एव यदुप-

* भावप्रकाशिका *

त्वादिदोषवशेन गोत्वब्राह्मणत्वाद्यग्रहेपि व्यक्तिग्रहणसम्भवात्; तथाप्यसति बाधके तदुपलम्भानुविधाय्युपलम्भवत्त्वमस्तीति भावः । (निरधिष्ठानभ्रमासम्भवनिराकरणेनेति) "स्वरूपानादित्वस्वपरघटने दुर्घटनता प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः। असत्या विद्याया वदितुमनवस्थापरिहृतौ मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ" इति दत्तोत्तरमित्यर्थः। (सामान्यरूपमिति) जातिरूपमित्यर्थः। (उपाधिरूपमिति) अर्थक्रियाकारित्वप्रमाविषयत्वतद्योग्यत्वादिरू-

काणादाः प्राहुः— न कारणात्कार्य्यस्यानन्यत्वं सम्भवति, विलक्षणबुद्धिबोध्यत्वात्; न खलु तन्तुपटमृत्पिण्डघटादिषु कार्य्यकारणविषया बुद्धिरेकरूपा। शब्दभेदाच्च, न हि तन्तवः पट इत्युच्यन्ते, पटो वा

* श्रुतप्रकाशिका *

लब्धिस्तत्तस्य कारणम्, तदवस्थतन्त्वादिभाव एव प्रावरणादिकार्यदर्शनात्तन्त्वादिकं प्रावरणादेः कारणम्, एवं तत्कारणभूते तन्तावपि न द्रव्यान्तरं कारणमिति द्रव्यान्तरकल्पकतया पराभिमतस्य कार्यभेदस्यान्यसिद्धिपरं द्वितीयसूत्रं व्याख्यातम्। तदयुक्तम्; पूर्वपक्षयुक्तीनामन्यथासिद्धेराद्यसूत्र एव विवक्षितत्वात् तद्विषयभूते वाक्यैकदेश एव विकारनामधेययोर्वाक्पूर्वकसर्वव्यवहारसिद्ध्यर्थतोपपादनात्, अतस्तत्रान्यत्वहेत्वन्यथासिद्धावुक्तायामनन्यत्वनियामकहेतुपरत्वं द्वितीयस्य युक्तम्, इदं सत् इदं सदिति कार्यस्य सर्वस्य सत्त्वविषयप्रतीतिः सर्वैरविभज्यमानं सन्मात्रमुपस्थापयति तदेव सन्मात्रं ब्रह्म; अतो ब्रह्मानन्यत्वमिति प्रत्यक्षादेवानन्यत्वोपपादनपरं सत्त्वाच्चापरस्येति सूत्रं व्याख्यातम्. तदत्यन्तानुपपन्नम्; "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः' 'सहैव सन्तं न विजानन्ति देवाः', 'न संदृशे तिष्ठति रूपमस्य' 'हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' 'क इत्था वेद यत्र सः' 'तं दुर्दर्शं गूढमनुप्रविष्टम्' 'अध्यात्मयोगाधिगमेन देवं मत्वा" इत्यादिभिः श्रुतिभिः प्रत्यक्षाद्यगोचरत्वाभिधानात्, योमैकदृश्यत्वाभिधानाच्चादृश्यत्वादिविषयं शास्त्रमीश्वरविषयम्, न तु सन्मात्रब्रह्मविषयमिति चेन्न, 'यत्तदद्रेश्यमग्राह्यं 'यद्भूतयोनिं परिपश्यन्ति धीराः' 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" इति कृत्स्नोपादानस्य ब्रह्मण एवादृश्यत्वाद्यभिधानादीश्वरातिरिक्तब्रह्मणो निष्प्रमाणकत्वात् कारणवाक्यानां निर्विषयत्वप्रसङ्गाच्च। सद्द्रव्यं हि प्रत्यक्षसिद्धम् अवस्थाविशेषाच्च द्रव्यानन्यत्वं च अनन्यत्वसाधकयुक्तिभिः सिद्धं किमत्र वेदान्तकृत्यम्, अतः सूत्राणां वक्ष्यमाण एवार्थ उपपन्नः। काणादाः—वैशेषिकाः। विलक्षणबुद्धिबोध्यत्वम्— शब्द-

ꣷ भावप्रकाशिका ꣷ

पमित्यर्थः। (तदवस्थतन्त्वादिभाव एव प्रावरणादिकार्यदर्शनादिति) पटा-

तन्तव इति । कार्य्यभेदाच्च, न हि मृत्पिण्डेनोदकमाह्रियते घटेन वा कुड्यं निर्म्मीयते । कालभेदाच्च, पूर्वकालञ्च कारणम् , अपरकालं च कार्य्यम् । आकारभेदाच्च, पिण्डाकारं कारणम्, कार्य्यं च पृथुबुध्नोदराकारम्, तथा सत्यामेव मृदि घटो नष्ट इति व्यवह्रियते । सङ्ख्याभेदश्च दृश्यते बहवस्तन्तवः एकश्च पटः । कारकव्यापारवैयर्थ्यञ्च, कारणमेव चेत्कार्य्यं किं कारकव्यापारसाध्यं स्यात् ? सत्यपि कार्य्ये कार्योपयोगितया कारकव्यापारेण भवितव्यं चेत् , सर्वदा कारकव्यापारेण नोपरन्तव्यम् । सर्वस्य सर्वदा सत्त्वेन नित्यानित्यविभागश्च न स्यात् । अथ कार्य्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यज्यते , अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोच्यते, तदसत्; अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वेऽनव-

---

* श्रुतप्रकाशिका *

भेदः, कार्यभेदः, कालभेदः, आकारभेदः, परिणामभेदः, भावाभावविरोधः, सङ्ख्याभेदः, कारकव्यापारवैयर्थ्यम् , नित्यानित्यविभागानुपपत्तिश्चेति हेतवः उच्यन्ते । ( न कारणादित्यादिना ) न खल्वित्यादिभिस्तत्तद्धेतुनिर्देशानन्तरभाष्यग्रन्थैर्हेत्वसिद्धिशङ्काव्यावृत्तिः क्रियते ( सत्यपीति ) कार्योपयोगितया— उदकाहरणादिकार्योपयोगितयेत्यर्थः । कार्य्योपयोगः सामर्थ्योत्पादनद्वारेण वा , साक्षाद्वा ? तत्र वैशेषिकैः शक्त्यनभ्युपगमात्साक्षादुपयोगः परिशिष्यत इति तत्र दूषणमुक्तम् । ( तदसदित्यादि ) किमभिव्यक्तिरुत्पद्यते, उताभिव्यज्यते ?

७ भावप्रकाशिका ७

वस्त्रतन्त्वादित एव प्रावरणादिलक्षणस्य घटकार्यस्य दर्शनात्तन्त्वादिरेव प्राव-

स्थानात्, अनपेक्षत्वे कार्य्यस्य नित्योपलब्धिप्रसङ्गात्, तदुत्पत्त्यभ्युपगमे चासत्कार्य्यवादप्रसङ्गात्। किञ्च कारकव्यापारस्याभिव्यञ्जकत्वे घटार्थेन कारकव्यापारेण करकादेरप्यभिव्यक्तिः प्रसज्यते, सम्प्रतिपन्नाभिव्यञ्जकभावेषु दीपादिष्वभिव्यङ्ग्यविशेषनियमादर्शनात्; न हि घटार्थमारोपितः प्रदीपः करकादीन्नाभिव्यनक्ति, अतोऽसतः कार्य्यस्योत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्वम्, अतश्च सत्कार्य्यवादासिद्धिः। न च नियतकारणोपादानं सत एव कार्य्यत्वं

* श्रुतप्रकाशिका *

उताभिव्यक्त्यनपेक्षानित्या ? इति विकल्पाभिप्रायेण दूषयति। (अभिव्यक्तेरित्यादिना) दूषणान्तरमाह (किञ्चेति) (न चेति) मृत्पिण्डे घटो न विद्यते चेत् अदसत्त्वाविशेषात्तन्तुरपि घटचिकीर्षुणोपादीयेत, न च तथा क्रियते,

* भावप्रकाशिका *

रणादेः कारणम्, न तन्त्वादिव्यतिरेकेण पटादिः कश्चिदस्तीत्यर्थः। निर्विषयत्वप्रसङ्गमेवोपपादयति (सद्द्रव्यं हीति) (तत्र दूषणमुक्तमिति) सत्यपीत्यादिना सर्वदा कारकव्यापारेण नोपरन्तव्यमित्यन्तेन भाष्येणेत्यर्थः। नहि घटार्थमारोपित इति। ननु वर्णनित्यत्वपक्षे उच्चारणविशेषाणां वर्णविशेषव्यञ्जकत्वनियमवत्कारकव्यापारेष्वप्यभिव्यङ्ग्यनियमोपपत्तेः, वर्णनित्यत्वपक्षेपि रविकिरणैर्युगपदभिव्यङ्ग्ययोर्नैल्योत्पलत्वयोः प्रदीपप्रभया उत्पलत्वस्यैवाभिव्यक्तिर्न नैल्यस्य, वियति विक्षिप्तकूपजलगतशौक्ल्यजलत्वयोः रविकिरणैस्सहोपलब्धावपि कूपान्तरावस्थितिसमये रविकिरणैर्जलत्वस्यैवाभिव्यक्तिरित्यादिव्यवस्थादर्शनादवस्थानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमुपपद्यत इति चेदुच्यते, केयमभिव्यक्तिः ? ज्ञानं चेत्तदा दण्डचक्रादिमेलनस्य घटज्ञानकारणत्वापत्त्या तदपनयनानन्तरं घटज्ञानादयो न स्युः, आवरणापनयश्चेत् घटसामग्र्या किमा-

साधयति, कारणशक्तिनियमादेव तदुपपत्तेः । नन्वसत्कार्य्यवादिनोऽपि कारकव्यापारो नोपपद्यते, प्रागुत्पत्तेः कार्य्यस्यासत्त्वात्, कार्य्यादन्यत्र कारकव्यापारेण भवितव्यम् ; तत्रान्यत्वाविशेषात्तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्यते, नैवम् ; यत्का-

* श्रुतप्रकाशिका *

अतः कारणविशेषोपादाननियमानुपपत्त्या कार्यं सदेवेत्यर्थः । परिहरति (कारणेति) घटो मृत्पिण्ड एव विद्यते, न तन्तुष्विति नियमः कथम्? तदेव तत्सद्भावयोग्यमिति चेत्तदुत्पादनयोग्यं तदेवेति तस्यैवोपादाननियमो युक्त इत्यर्थः । एवमुपादानकारणनियमानुपपत्तिरूपं चोद्यं परिहृतम् । अथ कारकव्यापारानुपपत्तिमुखेन चोदयति । (नन्विति) परिहरति (नैवमिति) अनन्यत्वश्रुतीनाममुख्य-

* भावप्रकाशिका *

वरणमपनीयते? ननु मृदि पूर्वस्थिता पिण्डावस्था तस्यां नित्यमेव स्थिताया अपि घटावस्थाया आवरणं तदा आवृतत्वात् सा तदा न प्रतीयते, घटसामग्र्या पिण्डावस्थोपमर्दे सति तिलपीडनेन तैलमिव अवघातेन तण्डुलमिव दोहने पय इव खनने कूपजलमिव प्रक्षालने पटशौक्ल्यमिव प्रतीयते । नच तथासति मुद्गरपातानन्तरमपि घटावस्थायाः प्रतीतिप्रसङ्गः, तदावरणभूतायाः पिण्डावस्थाया अपि तिरोहितत्वादिति वाच्यम्, मुद्गरपाताभिव्यक्तायाः कपालत्वावस्थायास्तदावरणत्वात्कारणेऽभिव्यक्तायाः कस्याश्चित्कार्यावस्थायास्तद्गतसकलकार्यावस्थान्तरावरणत्वाभ्युपगमात् । नच तथा सति कपालेषु कदाचिद्घटकारणमेलने सति घटावस्थाभिव्यक्तिप्रसङ्गः, इष्टापत्तेः । कपालानि चूर्णीकृत्य जलमृदन्तरसंयोजनमर्दनव्यापारैर्मार्दवं प्रापय्य दण्डचक्रादिमेलने घटावस्थाभिव्यक्तिदर्शनात् । नच दग्धपटानां पुनः पटाभावो न दृश्यत इति वाच्यम्, तद्भस्मनां क्षितितलपतितानां क्षितिप्ररूढकार्पासतरुफलपरिणतौ क्रमेण तेषां पटाभावोपपत्तेः । न च तन्त्ववस्थायाः पटावरणत्वस्य वक्तव्यत्वाद्विरलतन्त्वारब्धपटे तत्तिरोधानशङ्कानास्पदे पटावस्थाभिव्यक्तिर्न स्यादिति वाच्यम् ; फलबलेन कुविन्दकृतसंयोगविशेष-

र्योत्पादनशक्तं यत्कारणम् तद्गतकारकव्यापारेण तत्कार्य्योत्पत्तिसिद्धेः। अत्राहुः— कारणादनन्यत्कार्य्यम्, न हि परमार्थतः कारणव्यतिरिक्तं कार्य्यं नाम वस्त्वस्ति ; अविद्यानिबन्धनत्वात्सकलकार्यतद्व्यवहारयोः, अतो यथा कारणभूतात् मृद्द्रव्याद्घटादिषु विकारेषूपलभ्यमानाद्व्यतिरिक्तं घटशरावादिकार्यं व्यवहारमात्रालम्बनं मिथ्या, कारणभूतं मृद्द्रव्यमेव सत्यम् तथा निर्विशेषसन्मात्रात् कारणभूताद्ब्रह्मणोऽन्योऽहङ्कारादिव्यवहारालम्बनः कृत्स्नः प्रपञ्चो मिथ्या, कारणभूतं सन्मात्रं ब्रह्मैव सत्यम् ; तस्मात्कारणव्यतिरिक्तं कार्य्यं नास्तीति कारणादनन्यत्कार्य्यम्। न च वाच्यं शुक्तिकारजतादीनामिव घटादिकार्य्याणामसत्यत्वाप्रसिद्धेर्दृष्टान्तानुपपत्तिरिति ; यतस्तत्रापि

* श्रुतप्रकाशिका *

त्वमभिमतम्। अस्मिन् पक्षे सिद्धान्त्येकदेशिमुखेनोत्तरमाह (अत्राहुरिति) वाचारम्भणमित्यादिवाक्यस्यार्थमभिप्रेत्याह (अतो यथेति) (विकारेषूपलभ्यमानादिति) अनेनानुवर्त्तमानत्वहेतुर्विवक्षितः। एकमेवाद्वितीयमित्यस्यार्थमाह (तथेति) अहङ्कारादिव्यवहारालम्बनः— 'अहमिति प्रथमोऽध्यास इति हि तेषां ग्रन्थः, आदिशब्देन ज्ञेयमुच्यते, ब्रह्मव्यतिरिक्तपरमार्थभूतकार्याभावस्तदनन्यत्वशब्दार्थ इति भावः। दृष्टान्तस्य साध्यविकलतां शङ्कते (न च वाच्यमित्यादिना) परिहरति (यत इति)

७ भावप्रकाशिका ७

रहिततन्त्ववस्थायास्तदावारकत्वकल्पनात्, तस्मादविशेषिता वा पूर्वकार्यावस्थैव घटपटाद्यवस्थानामावरणमिति, नैतद्युक्तम् ; तथा परिणाहशालिनी पटावस्था कुविन्दव्यापारात्प्रागपि यथादृष्टेन स्थूलेनैव रूपेण सती तन्तुत्वेनाव्रियते, उत

युक्त्या मृद्द्रव्यमात्रमेव सत्यतया व्यवस्थाप्यते, तदतिरिक्तं तु युक्त्या बाध्यते, का पुनरत्र युक्तिः, मृद्द्रव्यमात्रस्यानुवर्त्तमानत्वं तदतिरिक्तस्य च व्यावर्तमानत्वम् । रज्जुसर्पादिषु ह्यनुवर्त्तमानस्याधिष्ठानभूतस्य रज्ज्वादेस्सत्यता व्यावर्त्तमानस्य च सर्पभूदलनाम्बुधारादेरसत्यता दृष्टा तथाऽनुवर्त्तमानमधिष्ठानभूतं मृद्द्रव्यमेव सत्यम् व्यावर्त्तमानास्तु घटशरावादयोऽसत्यभूताः । किञ्च सत आत्मनो विनाशाभावादसतश्च शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाशयोगि कार्य्यं सदसद्भ्यामनिर्वचनीयमिति गम्यते । अनिर्वचनीयं च

* श्रुतप्रकाशिका *

यथा ज्वालावत् क्षणिकमित्युक्ते ज्वालाभेदस्याप्रत्यक्षत्वेन न तत्र साध्यवैकल्यं तद्वदित्यर्थः । ( का पुनरित्यादि ) सदसद्विलक्षणत्वं नाम मिथ्यात्वे हेत्वन्तरमाह ( किञ्चेति ) कार्यस्य सदसद्विलक्षणत्वे व्यतिरेकिणं हेतुमाह ( सत आत्मन इति ) सदसद्विलक्षणत्वं मिथ्यात्वेऽन्वयिहेतुरिति दर्शयति ( अनिर्वचनीयं चेति )

* भावप्रकाशिका *

कूर्माङ्गवत्सङ्कुचितेन रूपेण सती ? । नाद्यः, यथा दृष्टरूपायाः पटावस्थायास्तन्तुषु कुविन्दव्यापारात्प्राग्व्यस्तेषु समस्तेषु वा विप्रकीर्णेषु संहतेषु वा पर्य्याप्त्यवृत्त्यसम्भवात् । न द्वितीयः; यथा दृष्टपटावस्थायाः आगन्तुकत्वापरिहारात् । न च वाच्यमनादिरेव सा पटावस्था अद्यतनेषु तन्तुषु न वर्तते, किन्तु मूलकारण इति ; तथा सति यत्रेदानीं भविष्यत्पटप्रादुर्भावप्रदेशे तन्तवो न सन्ति, तत्रावरणाभावेन तदभिव्यक्तिप्रसङ्गात् । न च तत्र या काचन कार्यावस्थाऽस्ति सैवावरणं स्यादिति वाच्यम्; तस्याः कुविन्दव्यापारानन्तरमपि सर्वत्रावर्जनीयत्वेन सर्वदा पटानभिव्यक्तिप्रसङ्गः, तस्मात् कार्याणि सर्वाण्यपि सादीन्येवेति भावः । ( मिथ्यात्वे हेत्वन्तरमिति ) मिथ्यात्वं तु सदसद्विलक्षणत्वादन्यज्ज्ञाननिवर्त्यत्वादिकमितिभावः । ( व्यतिरेकिणं हेतुमाहेति ) उपलब्धिविनाशयोगित्वलक्षणं

शुक्तिकारजतादिवन्मृषैव। तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धम्। किञ्च कार्यमुत्पादयन्मृदादिकारणद्रव्यं किमविकृतमेव कार्यमुत्पादयति ? उत किञ्चन विशेषमापन्नम्? न तावदविकृतमुत्पादयति सर्वदोत्पादकत्वप्रसङ्गात्। नापि विशेषान्तरमापन्नम्, विशेषान्तरापत्तेरपि विशेन्तरापत्तिपूर्वकत्वेन भवितव्यम् तस्या अपि तथेत्यनवस्थानात्। अविकृतमेव देशकालनिमित्तविशेषसम्बन्धं कार्यमुत्पादयतीति चेन्न; देशादिविशेषसम्बन्धोऽपि ह्यविकृतस्य विशेषान्तरमापन्नस्य च पूर्ववन्न सम्भवति। न च वाच्यं मृत्सुवर्णदुग्धादिभ्यो घटरुचकदध्यादीनामुत्पत्तिर्दृश्यते; शुक्तिकारजतादिवत् देशकालादिप्रतिपन्नोपाधौ बाधश्च न दृश्यते, अतः प्रतीतिशरणानां कारणात्कार्य्योत्पत्तिरवश्याश्रयणीयेति; विकल्पासहत्वात्— किं हेमादिमात्र-

* श्रुतप्रकाशिका *

सपक्षस्य शुक्तिरजतादेरनिर्वचनीयत्वं दर्शयति ( तस्य चेति ) व्यावर्त्तमानत्वहेतोरुपाधिशङ्कापरिहाराय कार्यस्य दुर्निरूपितामनुग्राहकतर्करूपेणाह ( किञ्चेति ) सत्यं चेत् सुनिरूपं स्यादित्यर्थः। ( नापीति ) विशेषान्तरापत्तिः किं विकृतस्य, उत न ? नोचेत्सर्वदा विशेषान्तरापत्तिप्रसङ्गः, विशेषान्तरापत्तिपूर्वकत्वे तस्यापि विशेषान्तरापत्तिपूर्वकत्वम्, तस्यापि तथेत्यनवस्थेत्यर्थः। ( अविकृतमेवेत्यादि ) विशेषशब्दो देशकालनिमित्तैः प्रत्येकं सम्बध्यते। अविकृतस्य चेत् सर्वदा देशकालादिसमवधानं स्यात् विकृतस्य चेदनवस्थेत्यर्थः। उक्ततर्कस्य प्रत्यक्षविरोधमाशङ्क्याह ( न च वाच्यमिति ) परिहरति ( विकल्पासहत्वादिति ) किं द्रव्यमात्रं कारणम्, उताकारमात्रम्, उताकारविशिष्टं द्रव्यम् ? इति विकल्पाः, तेषु

मेव स्वस्तिकादेरारम्भकम्, उत रुचकादि, अथ रुचकाद्याश्रयो हेमादिः? न तावद्धेमादिमात्रमारम्भकम्; हेमव्यतिरिक्तस्य कार्यस्याभावात्, स्वात्मानं प्रत्यात्मन आरम्भकत्वासम्भवाच्च। हेमव्यतिरिक्तं स्वस्तिकं दृश्यत इति चेत्— न, हेमव्यतिरिक्तं तत्, हेमप्रत्यभिज्ञानात्तदतिरिक्तवस्त्वन्तरानुपलब्धेश्च। बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वं साधितमिति चेन्न, अनिरूपितवस्त्ववलम्बनानां बुद्धिशब्दान्तरादीनां शुक्तिकारजतशब्दबुद्ध्यादिवत् भ्रान्तिमूलत्वेन वस्त्वन्तरसद्भावस्यासाधकत्वात्। नापि रुचकादि स्वस्तिकादेरारम्भकम्, स्वस्तिके हि रुचकं पट इव तन्तवो भवतापि नोपलभ्यते। नापि रुचकाश्रयभूतं हेम, रुचकाश्रयाकारेण हेम्नः स्वस्तिकेऽनुपलब्धेः, अतो मृदादिकारणातिरि-

---

* श्रुतप्रकाशिका *

प्रथमं शिरो दूषयति (न तावदित्यादिना) समवायिकारणांशविषयं प्रत्यभिज्ञानमित्याशङ्क्याह (तदतिरिक्तेति) तर्हि तत्र व्यक्तिद्वयमुपलभ्येत, न तथोपलब्धिरित्यर्थः। द्वितीयं शिरो दूषयति (नापीति) कार्ये समवायिकारणानुवृत्त्या तदुपलब्धिः परेणाभ्युपगम्यते, तत्र पटे तन्तव इव स्वस्तिके रुचकमुपलभ्येतेत्यर्थः। तृतीयं शिरो दूषयति (नापीति) रुचकाकारविशिष्टं कारणं चेत् स्वस्तिके रुचकाकारविशिष्टहेमोपलम्भप्रसङ्ग इत्यर्थः। एवमत्र केवलप्रमाणात्तर्कानुगृहीतं प्रमाणं प्रबलमिति प्रत्यक्षविरोधपरिहार इत्युक्तं भवति। (अत इति) कारणातिरिक्तवस्त्वनुपलब्ध्या न प्रत्यक्षबाध इत्यर्थः। तत एव न सोपाधिकत्वम्, पक्षेऽपि साधितत्वेनोपाधित्वाभावादितिभावः। ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वे मृत्तिकादीनां

* भावप्रकाशिका *

व्यतिरेकिहेतुमाहेत्यर्थः। (पक्षेपि साधितत्वेनेति) प्रतिपन्नोपाधौ बाधितत्वरूपो

क्तस्य कार्यस्यासत्यत्वदर्शनाद्ब्रह्मव्यतिरिक्तं कृत्स्नं जगत्कार्य्यत्वेन मिथ्याभूतम्, तदिदं ब्रह्मव्यतिरिक्तमिथ्यात्वसुखप्रतिपत्तये काल्पनिकमृदादिसत्यत्वमाश्रित्य कार्यस्यासत्यत्वं प्रतिपादितम्। परमार्थतस्तु मृत्सुवर्णादिकारणमपि घटरुचकादिकार्य्यवन्मिथ्याभूतम्, ब्रह्मकार्य्यत्वाविशेषात्। "ऐतदात्म्यमिदं सर्वं तत्सत्यम्", 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्येवमादिभिः श्रुतिभिश्च ब्रह्मव्यतिरिक्तस्य मिथ्यात्वमवगते। न चागमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीयः। यथोक्तप्रकारेण कार्यस्य सर्वस्य मिथ्यात्वावगमात् प्रत्यक्षस्य सन्मात्रविषयत्वाच्च, विरोधे सत्यप्यसम्भा-

* श्रुतप्रकाशिका *

सत्यत्वं व्याहतमित्यत्राह (तदिदमिति) न मृत्तिकासत्यत्वे तात्पर्यम्, अपि तु ब्रह्मव्यतिरिक्तमिथ्यात्व एव तात्पर्यमित्यर्थः। न केवलं ब्रह्मकार्यत्वेन जगतो मिथ्यात्वं सिध्यति, कण्ठोक्तमपीत्याह (ऐतदात्म्यमिति) 'ऐतदात्म्यमिदं सर्वं' मिति बाधार्थे सामानाधिकरण्यमिति भावः। 'आदित्यो यूप' इत्यादिषु प्रत्यक्षेण बाधमभिप्रेत्य इहापि तमाशङ्क्याह (न चागमावगतेति) परिहरति (यथोक्तेति) आदित्यो यूप इत्यादिवाक्यमन्यपरम्, अत्र तूपक्रमोपसंहारादिलिङ्गैस्तात्पर्यमस्त्येवेति न प्रत्यक्षेण बाध इत्यभिप्रायः। अविरोधमाह (प्रत्यक्षस्येति) यद्वा किं-

* भावप्रकाशिका *

बाधः पक्षवृत्तित्वेन साधनव्यापकत्वादितिभावः। उपसंहारादितात्पर्यलिङ्गस्य

वितदोषस्य चरमभाविनः स्वरूपसद्भावादौ प्रत्यक्षा-द्यपेक्षत्वेऽपि प्रमितौ निराकाङ्क्षस्य निरवकाशस्य शास्त्रस्य बलीयस्त्वात्; अतः कारणभूताद्ब्रह्मणोऽन्य-त्सर्वं मिथ्या । न च प्रपञ्चमिथ्यात्वेन जीवमिथ्या-त्वमाशङ्कनीयम्, ब्रह्मण एव जीवभावात् । ब्रह्मैव हि सर्वशरीरेषु जीवभावमनुभवति, "अनेन जीवेनात्म-नाऽनुप्रविश्य" "एको देवः सर्वभूतेषु गूढः" "एको देवो बहुधा निविष्टः "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" "नान्योऽतोस्ति द्रष्टा' इत्येवमादिभ्यः। नन्वेकमेव ब्रह्म सर्वशरीरेषु जीवभावमनुभवतीति चेत् 'पादे मे वेदना शिरसि मे सुखम्' इतिवत्सर्वशरीरेषु सुखदुःखप्रतिसन्धानं स्यात्, जीवेश्वरबद्धमुक्तशिष्या-

---

* श्रुतप्रकाशिका *

शब्दतः प्रतीत्यभावात्, प्रत्यक्षविरोधाद्वाऽन्यपरत्वं शङ्क्यत इत्यभिप्रेत्य शब्दतः प्रतिपत्त्यभावं परिहरति—यथोक्तेति । प्रत्यक्षविरोधं परिहरति— प्रत्यक्षस्येति । विरोधमभ्युपगम्याह (विरोधे सत्यपीति) भेदवासनामूलत्वम्— सम्भावित-दोषत्वम्, अपच्छेदन्यायाभिप्रायेणाह (चरमभाविन इति) (स्वरूपेति) आदि-शब्देन व्युत्पत्तिरभिप्रेता । (प्रमितौ निराकाङ्क्षस्येति) प्रमितौ— प्रमितिहेतुत्वे; अर्थनिश्चायकत्व इत्यर्थः । शास्त्रस्य शब्दस्वरूपग्रहणव्युत्पत्त्यादिषु प्रत्यक्षाद्यपेक्षा अस्ति, तथापि शास्त्रज्ञानं स्मृतिज्ञानवत् स्वार्थविषयज्ञानान्तरानुभूतत्वेन न स्ववि-षयं दर्शयति, अपि तु अनन्यगोचरमेव दर्शयतीत्यर्थः । (नन्वित्यादि) पादे मे

❀ भावप्रकाशिका ❀

प्रागनुक्ततया यथोक्तशब्देन परामर्शो न सम्भवतीत्यस्वरसादाह (यद्वा किंशब्दत इति) यद्यपि नचागमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीय इति ग्रन्थस्योपरि किंशब्दतः प्रतीत्यभावादितिपक्षस्य नोत्थितिः सम्भवति, तथापि सम्भावनामात्रे-

चार्यज्ञत्वाज्ञत्वादिव्यवस्था च न स्यात्॥ अत्र केचिदद्वितीयत्वं ब्रह्मणोऽभ्युपयन्त एवैवं समादधते—एकस्यैव ब्रह्मणः प्रतिबिम्बभूतानां जीवानां सुखित्वदुःखित्वादय एकस्यैव मुखस्य प्रतिबिम्बानां मणिकृपाणदर्पणादिषूपलभ्यमानानामल्पत्वमहत्त्वमलिनत्वविमलत्वादिवत्तत्तदुपाधिवशाद्व्यवस्थाप्यन्ते। ननु 'अनेन जीवेनात्मनाऽनुप्रविश्य' इत्यादिश्रुतेर्न जीवा ब्रह्मणो भिद्यन्त इत्युक्तम्. सत्यं परमार्थतः, काल्पनिकं तु भेदमाश्रित्येयं व्यवस्थोच्यते। कस्य पुनः कल्पना? न तावद्ब्रह्मणः, तस्य परिशुद्धज्ञानात्मनः कल्पनाशून्यत्वात्। नापि जीवानाम्, इतरेतराश्रयत्वप्रसङ्गात्, कल्पनाधीनो हि जीवभावः, जीवाश्रया च कल्पनेति। नैतदेवम्, अविद्याजीवभावयोर्बीजाङ्कुरन्यायेनानादित्वात्। किञ्च प्रासादनिगरणादिवदनुपपन्नतैकवेषा-

* श्रुतप्रकाशिका *

वेदना इत्यादिना जीवेश्वरेत्यादिना च लौकिकवैदिकव्यवस्थानुपपत्तिरुक्ता। एतद्व्यवस्थासिद्ध्यर्थं जीवाज्ञानवादपक्षमुपन्यस्यति (अत्र केचिदिति) (नन्वित्यादि) सत्यं परमार्थतः—परमार्थतो न भिद्यन्ते इति सत्यम्, वयं त्वौपाधिकभेदमाश्रित्य ब्रूम इत्यर्थः। (कस्येत्यादि) अत्रोक्तमितरेतराश्रयं परिहरति (नैतदेवमिति) मुखान्तरेणापि परिहरति (किञ्चेति) अवस्तुभूतायाम्—अपरमार्थभूता-

* भावप्रकाशिका *

णैवमुक्तमितिद्रष्टव्यम्। (जीवाज्ञानपक्षमिति) 'तदधीनत्वादर्थवत्' इतिसूत्रे अविद्यात्मिका सा बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, इतिशाङ्करभाष्यं व्याचक्षाणेन वाचस्पतिना जीवाधिकरणाप्यविद्यानि-

यामवस्तुभूतायामविद्यायां नेतरेतराश्रयत्वादयो वस्तुदोषा अनवक्लृप्तिमावहन्ति। वस्तुतो ब्रह्माव्यतिरिक्तानां जीवानां स्वतो विशुद्धत्वेऽपि कृपाणादिगतमुखप्रतिबिम्बश्यामतादिवदौपाधिकाशुद्धिसम्भवादविद्याश्रयत्वोपपत्तेः काल्पनिकत्वोपपत्तिः। प्रतिबिम्बग-

---

* श्रुतप्रकाशिका *

याम्। अनवक्लृप्तिः— असिद्धिः। यथा ब्रह्मणः स्वतः शुद्धत्वेन नाविद्याश्रयत्वम् तथा ब्रह्माव्यतिरिक्तस्यापि जीवस्य स्वतःशुद्धत्वेनाविद्याश्रयत्वानुपपत्त्या तत्कार्यजन्मजरामरणादिभ्रमानुपपत्तिरित्यत्राह ( वस्तुतो ब्रह्मेति ) यथौपाधिकाशुद्धिर्वस्तुतो मुखाव्यतिरिक्तत्वेपि मुखप्रतिबिम्बे सम्भवति तथा वस्तुतो ब्रह्माव्यतिरिक्तत्वेन स्वतःशुद्धत्वे सत्यप्यौपाधिकाशुद्धिसम्भवादविद्याश्रयत्वेन काल्पनिकत्वमित्यर्थः। अशुद्धिर्नाम स्वतः शुद्धत्वप्रतियोग्याकारः, अविद्यासम्बन्धयोग्यतेत्यर्थः। काल्पनिकत्वोपपत्तिः— जन्मजरामरणादेः काल्पनिकत्वोपपत्तिरित्यर्थः। औपाधिकाशुद्धेरपि ज्ञानानिवर्त्यत्वं स्यादित्यत्राह ( प्रतिबिम्बगतेति ) अशु-

* भावप्रकाशिका *

मित्ततया विषयतया वेश्वरमाश्रयत इति ईश्वराश्रयेत्युच्यते, न त्वाधारतया। विद्यास्वभावे ब्रह्मणि तदनुपपत्तेरितिप्रतिपादनात्, तत्रैव न वयं प्रधानवदविद्यां सर्वजीवेषु एकामाचक्ष्महे; येनैवमुपलभ्येमहि, किन्त्वियं प्रतिजीवं भिद्यते, तेन यस्यैव जीवस्य विद्योत्पद्यते तस्यैव साऽविद्यापनीयते, न जीवान्तरस्य, भिन्नाधिकरणयोः विद्याविद्ययोरविरोधात्. तत्कुतः समस्तसंसारोच्छेदप्रसङ्गः, न चाविद्योपाधिभेदाधीनः जीवभेदः जीवभेदाधीनोऽविद्याभेद इति परस्पराश्रयादुभयासिद्धिरपि साम्प्रतम्। अनादित्वाद्बीजाङ्कुरादिवदुभयसिद्धेः, अविद्यात्वमात्रेण एकत्वव्यवहार इति प्रतिपादनात् तथा 'ज्योतिरुपक्रमा'दिति सूत्रे 'यो योनिंयोनि'मितिवीप्सावशाद्योनिशब्दिताविद्या प्रतिजीवं भिद्यत इति वाचस्पतिनोक्तेश्च वाचस्पत्यभिमतं जीवाज्ञानपक्षमुपन्यस्यतीत्यर्थः। अविद्याश्रयत्वोपपत्तेरित्यन्तभाष्यस्यैव एतावानर्थ इति भावः। काल्पनिकत्वोपपत्तिरि-

तश्यामतादिवज्जीवगताशुद्धिरपि भ्रान्तिरेव, अन्यथाऽनिर्म्मोक्षत्वप्रसङ्गात्। जीवानां भ्रमस्य प्रवाहानादित्वान्न तद्धेतुरन्वेषणीय इति। तदेतदविदिताद्वैतयाथात्म्यानां भेदवादश्रद्धालुजनसबहुमानावलोकनलिप्साविजृम्भितम्। तथा हि; जीवस्याकल्पितस्वाभाविकरूपेणाविद्याश्रयत्वे ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात्। तदतिरिक्तेन तस्मिन् कल्पितेनाकारेणाविद्याश्रयत्वे जडस्याविद्याश्रयत्वमुक्तं स्यात्। न खल्वद्वैतवादिनस्तदुभयव्यतिरिक्तमाकारमभ्युपगच्छन्ति। कल्पिताकारविशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमिति चेत्,

* श्रुतप्रकाशिका *

द्धिविषयभ्रमेणोत्तरोत्तराविद्याश्रयत्वम्, अविद्याश्रयत्वेनोत्तरोत्तराशुद्धिविषयभ्रम इत्यन्योन्याश्रयत्वमाशङ्क्याह (जीवानां भ्रमस्येति) जीवाज्ञानपक्षसमाप्तिद्योतनार्थमितिकरणम्। दूषयति (तदेतदिति) अविदिताद्वैतयाथात्म्यानाम्— अद्वैतानिपुणानाम्। श्रद्धालुशब्देन भेदवादेऽप्यकौशलं विवक्षितम्, उभयतोपि भ्रष्टैरेवमुक्तमिति भावः। किमकल्पितस्वाभाविकरूपेणाविद्याश्रयत्वम्, उत कल्पिताकारेण, अथ कल्पिताकारविशिष्टरूपेण? इति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति (जीवस्येति) द्वितीयं दूषयति (तदतिरिक्तेनेति) कथं जडस्याविद्याश्रयत्वमुक्तं स्यात्? जीवो ह्यविद्याश्रय इत्यत्राह (न खल्विति) ब्रह्म चिद्रूपम्, कल्पितं तु जडम्. तदुभयातिरिक्तानभ्युपगमात् कल्पिताकारेण अविद्याश्रयत्वे जडस्यैवाविद्याश्रयत्वमुक्तं स्यादित्यर्थः। तृतीयं शिरः शङ्कते (कल्पितेति) दूषयति (तन्नेति)

❀ भावप्रकाशिका ❀

त्यस जन्मजरामरणादिकाल्पनिकत्वपरतयोत्तरत्र व्याख्यास्यमानत्वादिति द्रष्टव्यम्। (अशुद्धिविषयभ्रमेणेति) शुद्धस्याविद्याश्रयत्वासम्भवादशुद्ध्यधीनापि अविद्या अविद्याधीना चाशुद्धिरित्यर्थः। (भेदवादेप्यकौशलं विवक्षितमिति)

तन्न; स्वरूपस्याखण्डैकरसस्याविद्यामन्तरेण विशिष्टरूपत्वासिद्धेः, अविद्याश्रयाकार एव हि निरूप्यते। किञ्च बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं हि जीवाज्ञानवादाश्रयणम्, सा तु व्यवस्था जीवाज्ञानपक्षेऽपि न सिध्यति। अविद्याविनाश एव हि मोक्षः, तत्रैकस्मिन् मुक्ते अविद्याविनाशादितरेऽपि विमुच्येरन्। अन्यस्यामुक्तत्वादविद्या तिष्ठतीति चेत् तर्ह्येकस्याप्यमुक्तिः स्यात्, अविद्याया अविनष्टत्वात्। प्रतिजीवमविद्याभेदः कल्प्यते, तत्र यस्याविद्या विनष्टा स मोक्ष्यते, यस्य त्वविनष्टा स बत्स्यत इति चेत्— तन्न; प्रतिजीवमिति जीवभेदमाश्रित्य ब्रूषे, स जीवभेदः किं स्वाभाविकः, उताविद्याकल्पितः? । न तावत्स्वाभाविकः, अनभ्युपगमात्, भेदसिद्ध्यर्थस्य चाविद्याकल्प-

* श्रुतप्रकाशिका *

ततः किमित्यत्राह (अविद्याश्रयाकार इति) अविद्याश्रयत्वे सति विशिष्टत्वम्, विशिष्टाकार एवाविद्याश्रय इत्यात्माश्रयणमित्यर्थः। (किञ्चेत्यादि) अविद्या किमेका, उत बह्वी? इति विकल्पमभिप्रेत्य एकत्वपक्षे दूषणमाह (तत्रैकस्मिन्निति) तत्रापि किमविद्या नश्यति, उत न नश्यति? इति विकल्पमभिप्रेत्य नाशपक्षे दूषणमुक्तम्— तत्रेति। अविनाशपक्षं दूषयति (अन्यस्येति) अथाविद्याबहुत्वपक्षमनुवदति (प्रतिजीवमिति) बत्स्यते— बद्धो भविष्यतीत्यर्थः। दूषयति (तन्नेति) अत्रापि विकल्पयति (स जीवभेद इति) अनभ्युपगमात्— अद्वैतहानिप्रसङ्गेनानभ्युपगमात्। द्वितीयं शिरो विकल्पयति (किमिति)

❀ भावप्रकाशिका ❀

सबहुमानावलोकनकर्तॄणामित्यर्थः। (उभयतोपि भ्रष्टैरिति) मतान्तरस्थस्य मतान्तरस्थबहुमानलिप्सया उभयतो भ्रष्टत्वावश्यम्भावादित्यर्थः। भाष्ये— आगतोसि मदीयं

नस्य व्यर्थत्वात् । अथाविद्याकल्पितः तत्रेयं जीवभेदकल्पिकाऽविद्या किं ब्रह्मणः, उत जीवानाम् ?। ब्रह्मण इति चेत् आगतोऽसि मदीयं मार्गम् । अथ जीवानाम् किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसि । अथ प्रतिजीवं बद्धमुक्तव्यवस्थासिद्ध्यर्थं याः अविद्याः कल्प्यन्ते ताभिरेव जीवभेदोऽपीति मनुषे, जीवभेदसिद्धौ तास्सिद्ध्यन्ति तासु सिद्धासु जीवभेदसिद्धिरितीतरेतराश्रयत्वम् । न चात्र बीजाङ्कुरन्यायः सिद्ध्यति , बीजाङ्कुरेषु ह्यन्यदन्यद्बीजमन्यस्यान्यस्याङ्कुरस्योत्पादकम् , इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते तानेवाश्रित्य तासां सिद्धिरित्यशकनीयता । अथ बीजाङ्कुरन्यायेन पूर्वपूर्वजीवा-

* श्रुतप्रकाशिका *

प्रथमपक्षस्योत्तरमाह ( ब्रह्मण इति चेदिति ) द्वितीयं शिरो दूषयति ( अथेति ) ( किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसीति ) जीवभेदकल्पकाऽविद्या जीवकल्पनात् प्रागेव न जीवानाश्रयितुं क्षमा, जीवासिद्धेरित्यर्थः । यां जीवभेदकल्पका अविद्यास्ता एव जीवाश्रयाः बद्धमुक्तादिव्यवस्थाहेतव इति पक्षमनूद्य दूषयति । ( अथ प्रतिजीवमिति ) बीजाङ्कुरन्यायेन परिहारस्यानुपपत्तिमाह ( नचेति ) बीजाङ्कुरेषूत्पादकबीजस्योत्पाद्याङ्कुरापेक्षा नास्ति , उत्पादकाङ्कुरमन्यत् उत्पाद्यं चान्यत् , अत्र तु जीवभेदकल्पकाविद्यायाः कल्पनीयजीवाश्रयापेक्षाऽस्ति कल्पकाविद्याश्रयो जीवः , स एव कल्प्यश्चेति वैषम्यम् । अशकनीयता— साधयितुमशक्यतेत्यर्थः । उत्पाद्योत्पादकाङ्कुरव्यक्तिभेदवत् कल्पका-

७ भावप्रकाशिका ७

मार्गमिति । ब्रह्मज्ञानवादमित्यर्थः । (या जीवभेदकल्पिकेति) बद्धमुक्तव्यवस्थाहेतु-

श्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे, तथा सति जीवानां भङ्गुरत्वमकृताभ्यागमकृतविप्रणाशादि-प्रसङ्गश्च; अत एव ब्रह्मणः पूर्वपूर्वजीवाश्रयाभिरविद्या-भिरुत्तरोत्तरजीवभावकल्पनमित्यपि निरस्तम् । अ-विद्याप्रवाहेऽभ्युपगम्यमाने तत्तत्कल्पितजीवभावस्यापि तद्वत्प्रवाहानादिता स्यात् । न ध्रुवरूपता, आमोक्षाच्च जीवस्य ध्रुवत्वमिष्टं न सिद्ध्येत् । यच्चोक्तम् अवि-द्याया अवस्तुरूपत्वेनानुपपन्नतैकवेषायां नेतरेतराश्र-यत्वादयो वस्तुदोषा अनवक्लृप्तिमावहन्तीति, तथा सति मुक्तान् परं च ब्रह्माश्रयेदविद्या; शुद्धविद्या-स्वरूपत्वादशुद्धिरूपा न तत्र प्रसजतीति चेत् किमुप-पत्त्यनुवर्तिन्यविद्या ? एवं तर्ह्युक्ताभिरुपपत्तिभिर्जीवा-

* श्रुतप्रकाशिका *

विद्याश्रयकल्प्यजीवव्यक्तिभेदार्थं प्रवाहानादित्वाभ्युपगमे दूषणमाह ( अथेति ) अकृताभ्यागमकृतनाशः श्रुत्यर्थापत्तिः । आदिशब्देन जीवस्वरूपनित्यत्वादि-श्रुतिविरोधो विवक्षितः । एवं जीवाख्यधर्मिणः प्रवाहानादित्वकल्पने दूष-णमुक्तम्, जीवत्वधर्मतत्कल्पकाविद्ययोः प्रवाहानादित्वेऽप्युक्तं दूषणमतिदिशति (अत एवेति) पूर्वपूर्वजीवाश्रयाविद्ययोत्तरोत्तरजीवभावकल्पनम्, तत्तदाश्रयाविद्यया तदुत्तरोत्तरजीवभावकल्पनमित्यर्थः । अस्य पक्षस्य निरस्ततां विवृणोति ( अवि-द्याप्रवाह इति ) धर्मिधर्मकल्पनपक्षयोरुभयोरपि तुल्यं दूषणमाह ( आमोक्षाच्चेति ) जीवस्य— जीवभावविशिष्टस्येत्यर्थः । अविद्यायाः दुर्घटत्वेन परिहारं दूषयति ( यच्चोक्तमिति ) शुद्धविद्यास्वरूपत्वात्—शुद्धज्ञप्तिरूपत्वात् । उक्ताभिरुपपत्तिभिः—

* भावप्रकाशिका *

तया जीवाश्रयतया च या अविद्याः सम्प्रतिपन्नास्तासामेव जीवभेदकल्पकत्वमस्ती-तिपक्षमनूद्य तत्कल्पकस्य तदाश्रयत्वासम्भवादिति पूर्वोक्तदूषणेनैव दूषयतीत्यर्थः ।

नपि नाश्रयेत् । किञ्च जीवाश्रयाया अविद्यायास्त-त्त्वज्ञानोदयान्नाशे सति जीवो नश्येद्वा, न वा ? यदि नश्येत्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात् ; नो चेद-विद्यानाशेऽप्यनिर्मोक्षः, ब्रह्मस्वरूपव्यतिरिक्तजीवत्वाव-स्थानात् । यच्चोक्तं मणिकृपाणदर्पणादिषूपलभ्यमान-मुखमलिनत्वविमलत्वादिवच्छुद्ध्यशुद्ध्यादिव्यवस्थोप-पत्तिरिति । तत्रेदं विमर्शनीयम्; अल्पत्वमलिनत्वादय औपाधिका दोषाः कदा नश्येयुरिति । कृपाणाद्युपा-ध्यपगम इति चेत्- किं तदाल्पत्वाद्याश्रयः प्रतिबिम्बं तिष्ठति वा, न वा ? । तिष्ठतीति चेत् तत्स्थानीयस्य जीव-स्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः । नश्यति चेत् तद्वदेव जीवनाशात्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात् । किञ्च यस्य ह्यपुरुषार्थरूपदोषप्रतिभासः तस्य तदुच्छेदः

---

* श्रुतप्रकाशिका *

अन्योन्याश्रयादिभिः । मोक्षानुपपत्त्या दूषयति ( किञ्चेति ) ( नोचेदिति ) अविद्याकार्यस्य जीवत्वस्यावस्थानादनिर्मोक्ष इत्यर्थः । दार्ष्टान्तिकपर्यालोच-नया दूषणमुक्तम् ; अथ दृष्टान्तालोचनया दूषयति ( यच्चोक्तमिति ) अपुरु-षार्थप्रतिभासानुपपत्तिमुखेन दूषयिष्यन् दोषप्रतिभासस्यावश्यम्भावितामाह ( किञ्च यस्य हीति ) अपुरुषार्थदोषप्रतिभासस्य निरसनीयत्वात्तन्निरासाय हि वेदान्तारम्भः,

* भावप्रकाशिका *

ततश्च पूर्वदूषणे जाग्रति कथं पक्षान्तरोपन्यास इति न चोदनीयम् । यद्यप्यत्र कल्पिका अविद्या इतिबहुश आवृत्त्या पठ्यते तस्य च निर्वाहः सम्भति तथापि कल्पिका-विद्येति एवमित्वरहित पाठ एव समीचीनः लेखकदोषादन्यथापाठ इति द्रष्टव्यम् । ( पूर्वपूर्वजीवभावाश्रयाविद्ययेति ) पूर्वपूर्वजीवभावः आश्रयो निमित्तं यस्या इति बहु-

पुरुषार्थः । तत्र किमौपाधिकदोषप्रतिभासो बिम्बस्थानीयस्य ब्रह्मणः, उत प्रतिबिम्बस्थानीयस्य जीवस्य, उतान्यस्य कस्यचित् ?। आद्ययोः कल्पयोर्दृष्टान्तोऽयं न सङ्गच्छते, मुखस्य मुखप्रतिबिम्बस्य चाल्पत्वादिदोषप्रतिभासशून्यत्वात्, न हि मुखं तत्प्रतिबिम्बं वा चेतयते, ब्रह्मणो दोषप्रतिभासे ब्रह्माविद्याप्रसङ्गश्च । तृतीयोऽपि कल्पो न कल्पते जीवब्रह्मव्यतिरिक्तस्य द्रष्टुरभावात् । किञ्च अविद्याकल्प्यस्य जीवस्य कल्पकः क इति निरूपणीयम् । न तावदविद्या, अचेतनत्वात् । नापि जीवः, आत्माश्रयदोषप्रसङ्गात्, शुक्तिकारजतादिवदविद्याकल्प्यत्वाच्च

* श्रुतप्रकाशिका *

बिम्बप्रतिबिम्बस्थानीययोर्जीवब्रह्मणोर्दोषप्रतिभासायोगात्तन्निरासार्थो वेदान्तोऽनारभ्य इति दूषणं दर्शयितुं यस्य हीत्याद्युक्तम्। दृष्टान्ते मुखतत्प्रतिबिम्बतद्व्यतिरिक्तचेतनसद्भावात्तदभिप्रायेण विकल्पयति (उतान्यस्य कस्यचिदिति) (न हि मुखं तत्प्रतिबिम्बं वा चेतयत इति) रूपवदचेतनविशेषस्यैव प्रतिबिम्बं दृष्टम्; तस्माद्ब्रह्मजीवयोर्बिम्बप्रतिबिम्बभावाभ्युपगमे तयोरचेतनत्वमापततीति भावः। ब्रह्मणो दोषप्रतिभासपक्षेऽधिकं दूषणमाह (ब्रह्मण इति) अन्यस्येति पक्षं दूषयति (तृतीयोऽपीति) पूर्वमविद्याश्रयानुपपत्तिरुक्ता, इदानीमविद्याकार्यभ्रमाश्रयो निरूप्यते (किञ्चेति) कः कल्पकः—को भ्रमाश्रय इत्यर्थः। (नापि जीव इति) कल्पकत्वात्सिद्धिः कल्प्यत्वादसिद्धिश्चेति स्वसिद्धेः स्वापेक्षा, जीवविषयभ्रमाश्रये सिद्धे हि जीवक्लृप्तिः, जीवसिद्धेः स्वविषयभ्रमाश्रयभूतेन स्वेनैव स्वापेक्षत्वादात्माश्रयत्वमित्यर्थः। अनुपपत्त्यन्तरमाह (शुक्तिकेति) कल्पकत्वाच्च भ्रमाश्रयत्वमनुपपन्नम्,

७ भावप्रकाशिका ७

व्रीहिः, भ्रमाश्रय इत्यर्थ इति रजतकल्पकत्वं रजतभ्रान्त्याश्रयत्वमिति जीवकल्पकत्वमपि जीवविषयभ्रमाश्रयत्वमिति भावः। (स्वेनैव स्वापेक्षत्वादिति)

जीवभावस्य, ब्रह्मैव कल्पकमिति चेत् ब्रह्माज्ञानमेवायातम्। किञ्च ब्रह्माज्ञानानभ्युपगमे किं ब्रह्म जीवान् पश्यति वा न वा?। न पश्यति चेत् ईक्षापूर्विका विचित्रसृष्टिर्नामरूपव्याकरणमित्यादि ब्रह्मणो न स्यात्। अथ पश्यति, अखण्डैकरसं ब्रह्म नाविद्यामन्तरेण जीवान् पश्यतीति ब्रह्माज्ञानप्रसङ्गः, अत एव मायाऽविद्याविभागवादोपि निरस्तः, अज्ञानमन्तरेण हि मायिनोऽपि ब्रह्मणो जीवदर्शित्वं न स्यात्। न च मायावी परानदृष्ट्वा मोहयितुमलम्। नापि माया मायाविनो दर्शनसाधनम्, दृष्टेषु परेषु तन्मोहनसाधनमात्रत्वात्तस्याः। अथ ब्रह्मणो माया तस्य जीव-

* श्रुतप्रकाशिका *

न हि दोषकल्प्यं रजतमर्थान्तरविषयभ्रमाश्रय इत्यर्थः। (किञ्चेत्यादि) (अथ पश्यतीति) अपरमार्थजीवप्रतीतिरविद्यया विना न सम्भवतीत्यर्थः। अत एव—ईक्षापूर्वकसृष्ट्याद्यर्थं ब्रह्मणोऽपरमार्थजीवदर्शनार्थं चाविद्यान्वयाभ्युपगमादेवेत्यर्थः। माया परभ्रमहेतुः, अविद्या स्वभ्रमहेतुरिति हि तन्मतम्। मायिनं तु महेश्वरमिति श्रुतिरेतद्विभागहेतुः। अपरमार्थजीवदर्शनमज्ञानेनैव सम्भवतीत्येतदेवोपपादयति (अज्ञानमित्यादिना) किमविद्यया विना जीवदर्शित्वम्? उत जीवदर्शनेन विना तन्मोहनम्? इतिपक्षयोः प्रथमं दूषितम् अज्ञानमिति। अनन्तरं शिरो दूषयति (न चेति) मायैव जीवदर्शनहेतुरित्यत्राह (नापीति) न हि परमोहनहेतुरेव माया मोहयितुर्मोहनीयदर्शनहेतुः। अस्यास्तु मायाया अयं

* भावप्रकाशिका *

स्वस्यैव सापेक्षत्वे आत्माश्रयत्वमित्यर्थः। (एतद्विभागहेतुरिति) सर्वज्ञस्यापि तस्मामायिनं त्विति मायित्वावेदनान्मायाविद्ययोर्भेदोऽस्तीतिप्रति-

दर्शित्वं कुर्वती जीवमोहनस्य हेतुरिति मन्यसे तर्हि परिशुद्धस्याखण्डैकरसस्वप्रकाशस्य ब्रह्मणः परदर्शनं कुर्वती माया, मायाऽपरपर्य्याया अविद्यैव स्यात् । अथ मतम् विपरीतदर्शनहेतुरविद्या, माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेनैव दर्शयन्ती न ब्रह्मणो विपरीतदर्शनहेतुः, अतस्तस्या नाविद्यात्वमिति । नैवम्, चन्द्रैकत्वे ज्ञायमाने द्विचन्द्रदर्शनहेतोरप्यविद्यात्वात् । यदि च ब्रह्म मिथ्यात्वेनैव स्वव्यतिरिक्तं जानाति, न तर्हि तन्मोहयति । न ह्यनुन्मत्तो मिथ्यात्वेन ज्ञातान् मोहयितुमीहते । अथापुरुषार्थाऽपरमार्थदर्शनहेतुरविद्या, माया तु ब्रह्मणो नापुरुषार्थदर्शनहेतुः, अतोऽस्या नाविद्यात्वमिति मतम्। तन्न ; द्विचन्द्रज्ञानस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावेऽपि तद्धेतुरविद्यैव, तन्निरसने च प्रयस्यन्ति; यदि च नापुरुषार्थदर्शनकरी माया, तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपानुबन्धिनी

* श्रुतप्रकाशिका *

विशेष इत्याशङ्कते ( अथेति ) प्रतिवदति ( तर्हीति ) नामविवाद आवयोरित्यर्थः । शङ्कते ( अथेति ) परिहरति ( नैवमिति ) न केवलं सत्यत्वेन दर्शनहेतुरेव दोषः, अपरमार्थप्रतिभासमात्रहेतुर्दोष इत्यभिप्रायेणाह ( चन्द्रैकत्व इति ) अपुरुषार्थदर्शनहेतुत्वतदभावरूपं वैषम्यं शङ्कते ( अथेति ) परिहरति ( तन्नेति ) ( अपरिच्छिन्नेति ) स्वरूपस्यैवापरिच्छिन्नानन्दत्वादिच्छया मायादर्शनमनुपपन्नम् , तस्याश्चापरमार्थत्वादविद्याकृतमेव तद्दर्शनमित्यर्थः । तद्धत्ता–

ॐ भावप्रकाशिका ॐ

पादनादितिभावः । ( तस्याश्चापरमार्थत्वादिति ) मायायाः इच्छाधीनदर्शनानुपप-

स्यात्। अस्तु को दोष इति चेत्, द्वैतदर्शनमेव दोषः। 'यत्र हि द्वैतमिव भवति 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्याद्यद्वैतश्रुतयः प्रकुप्येयुः। परमार्थविषया अद्वैतश्रुतयः, मायायास्त्वपरमार्थत्वादविरोध इति चेत्, अपरिच्छिन्नानन्दैकस्वरूपस्य ब्रह्मणोऽपरमार्थभूतमायादर्शनं तद्वत्ता चाविद्यामन्तरेण नोपपद्यते। किञ्च अपरमार्थभूतया नित्यया मायया किं प्रयोजनं ब्रह्मणः? जीवमोहनमिति चेत्; अपुरुषार्थेन मोहनेन किं प्रयोजनम्? क्रीडेति चेत्, अपरिच्छिन्नानन्दस्य किं क्रीडया? परिपूर्णभोगानामेव क्रीडा पुरुषार्थत्वेन लोके दृष्टेति चेत्; नैवमिहोपपद्यते। न ह्यपरमार्थभूतैः क्रीडोपकरणैरपरमार्थतया प्रतिभासमानैर्निष्पन्नयाऽपरमार्थभूतया क्रीडयाऽपरमार्थभूतेन च तत्प्रतिभासेनानुन्मत्तानां क्रीडारसो निष्पद्यते। मायाश्रयतयाभिमतब्रह्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनाऽसम्भवश्च पूर्ववदेव द्रष्टव्यः, अतो ब्रह्मैवानाद्यविद्याशबलं स्वगतनानात्वं पश्य-

---

* श्रुतप्रकाशिका *

तत्सम्बन्धः। ( किञ्चेति ) अपुरुषार्थत्वाभावेन निरसनीयत्वाभावाभिप्रायेणाह ( नित्ययेति ) आश्रयविभागानुपपत्त्या [निरसनीयत्वाभावानुपपत्त्या] च मायाऽविद्याविभागानुपपत्तिमाह ( मायाश्रयतयेति ) ( पूर्ववदेवेति ) अन्योन्याश्रयादिभिर्दूषणैरित्यर्थः। मायाऽविद्याविभागानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वमुपसंहरति ( अत इति ) बन्धमोक्षादिव्यवस्थानुपपत्तिं जीवाज्ञानकल्पनहेतुभूतां

तीत्यद्वितीयत्वं ब्रह्मणोऽभ्युपयद्भिरभ्युपेतव्यम् । यत्तु बन्धमोक्षव्यवस्था नोपपद्यत इति, न तद्ब्रह्माज्ञानवादिनश्चोद्यम्, एकस्यैव ब्रह्मणोऽज्ञस्य स्वाज्ञाननिवृत्त्या मोक्ष्यमाणत्वात् बद्धमुक्तादिव्यवस्थाया एवाभावात् व्यवह्रियमाणायाश्च बद्धमुक्तशिष्याचार्य्यादिव्यवस्थायाः काल्पनिकत्वात्स्वप्नदर्शिन इव चैकस्यैवाविद्यया सर्वकल्पनोपपत्तेः, स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्य्यादयः तदविद्याकल्पिता एव ; अत एव बह्वविद्याकल्पनमपि न युक्तिमत् । पारमार्थिकी बन्धमोक्षव्यवस्था स्वपरव्यवस्था च जीवाज्ञानवादिनापि नाभ्युपेयते । अपारमार्थिकी त्वेकस्यैवाविद्ययोपपद्यते, प्रयोगश्च– बन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्च स्वा-

---

* श्रुतप्रकाशिका *

पूर्वोक्तामनूद्य परिहरति ( यत्त्विति ) नेदं चोद्यमनिष्टमित्यर्थः । तर्हि बद्धमुक्तादिव्यवहारः कथमित्यत्राह ( व्यवह्रियमाणायाश्चेति ) वक्ष्यमाणानुमानगर्भमाह ( काल्पनिकत्वादिति ) स्वाप्नव्यवस्थाः काल्पनिकत्वाद्यथैकाविद्ययोपपद्यन्ते तथा सर्वासां व्यवस्थानां काल्पनिकत्वादेकाविद्ययैव तत्कल्पनोपपत्तिरित्यर्थः । ( सर्वकल्पनोपपत्तेरिति ) अन्यथाऽनुपपन्नं हि कल्पकम् , अन्यथोपपन्नत्वान्नाविद्याभेदक्लृप्तिर्न्याय्येत्यर्थः । दृष्टान्तं शिक्षयति ( स्वप्नदृशा हीति ) अत एव– आश्रयैकत्वेऽपि सर्वव्यवस्थोपपत्तिर्येन हेतुना सिद्धा तेनैव काल्पनिकत्वेन हेतुना अविद्याबहुत्वकल्पनमपि न युक्तमित्यर्थः । परमार्थकार्याणां हि बहुहेत्वपेक्षा, अपरमार्थानां त्वेकेनैवालमित्यभिप्रायेणाह ( पारमार्थिकीति ) ततः किमित्यत्राह ( अपारमार्थिकी त्विति ) ( प्रयोगश्चेति ) जीवाज्ञानवादिनं प्रति प्रथम-

* भावप्रकाशिका *

तेरपरमार्थत्वाच्चाविद्याकृतमेव तद्दर्शनमित्यर्थः । ( वक्ष्यमाणानुमानगर्भमिति )

विद्याकल्पिताः, अपारमार्थिकत्वात्, स्वप्नदृष्टव्यवस्थाव-दिति। शरीरान्तराण्यपि मयैवात्मवन्ति, शरीरत्वात्, एतच्छरीरवत्। शरीरान्तराण्यपि मदविद्याकल्पिता-नि शरीरत्वात् कार्य्यत्वात् जडत्वात् कल्पितत्वाद्वा, एतच्छरीरवत्। विवादाध्यासितं चेतनजातमहमेव, चेतनत्वात्, यदनहं तदचेतनं दृष्टम्, यथा घटः, अतः स्वपरविभागो बद्धमुक्तशिष्याचार्य्यादिव्यवस्थाश्चैक-स्याविद्याकल्पिताः। द्वैतवादिनापि बद्धमुक्तव्यवस्था दुरुपपादा; अतीतानां कल्पानामानन्त्यादेकैकस्मिन् कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसम्भवादमुक्तानु-पपत्तेः। अनन्तत्वादात्मनाममुक्ताश्च सन्तीति चेत्, किमिदमनन्तत्वम्? असङ्ख्येयत्वमिति चेन्न; भूयस्त्वा-दल्पज्ञैरसङ्ख्येयत्वेपीश्वरस्य सर्वज्ञस्य सङ्ख्येया एव।

---

* श्रुतप्रकाशिका *

तृतीये अनुमाने उच्येते, तच्च भेदवादिनं च प्रति द्वितीयहेतुः प्रयु-ज्यते, तृतीयः प्रत्येकनिरपेक्षहेतुचतुष्टयगर्भः, तुरीयं व्यतिरेक्यनुमानम्, व्य-वस्थानुपपत्तिपरिहारमुपसंहरति (अत इति) काणादपक्षेपि स्वपक्षोक्तं दोषमापादयति (द्वैतवादिनापीत्यादि) (असङ्ख्येयत्वमिति चेदिति)

* भावप्रकाशिका *

वन्धमोक्षव्यवस्था स्वपरव्यवस्थाश्च स्वाविद्याकल्पिता इत्यादिवक्ष्यमाणानुमानैः काल्पनिकत्वस्य सिद्धिं मनसि निधायाहेत्यर्थः। (तच्च भेदवादिनञ्चेति) जीवाज्ञानवादिमते शरीराणां भिन्नभिन्नजीवैरात्मवत्ताया मायैवात्मवन्तीत्य-नभ्युपगमादितिभावः। नच प्रथमतृतीययोरप्यनुमानयोर्भेदवादिनिरासकत्वं किं न स्यादिति वाच्यम्; तन्मते अपारमार्थिकत्वात्कल्पितत्वादितिहेतोरसम्प्रतिपन्न-

तस्याप्यशक्यत्वे सर्वज्ञत्वं न स्यात्; आत्मनां निस्सङ्ख्यत्वादीश्वरस्याविद्यमानसङ्ख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेत्, भिन्नत्वे सङ्ख्याविधुरत्वं नोपपद्यते। आत्मानः सङ्ख्यावन्तः, भिन्नत्वात्; माषसर्षपघटपटादिवत्। भिन्नत्वे चात्मनां घटादिवज्जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते। ब्रह्मणश्चानन्तत्वं न स्यात्। अनन्तत्वं नाम—परिच्छेदरहितत्वम्। भेदवादे च वस्त्वन्तराद्भिलक्षणत्वेन ब्रह्मणो वस्तुतः परिच्छेदरहितत्वं न शक्यते वक्तुम्, वस्त्वन्तरभाव एव हि वस्तुतः परिच्छेदः। वस्तुतः परिच्छिन्नस्य देशतः कालतश्चापरिच्छिन्नत्वं न युज्यते, वस्त्वन्तराद्भिलक्षणत्वेन वस्तुतः परिच्छिन्ना एव घटादयो देशतः कालतश्च परिच्छिन्ना हि दृष्टाः, तथा सर्वे चेतनाः ब्रह्म च वस्तुतः परिच्छिन्नाः देशकालाभ्यामपि

* श्रुतप्रकाशिका *

देशकालाद्यपरिच्छेदस्यनान्तशब्देन विवक्षितत्वव्यावृत्त्यर्थमसङ्ख्येयत्वमित्युक्तम्। भिन्नत्वेन सङ्ख्यावत्त्वं साधयति (आत्मान इति) (माषसर्षपघटपटादिवदिति) सङ्ख्यावत्तारतम्येपि सङ्ख्यावत्त्वमविशिष्टमिति भावः। भिन्नत्वे दूषणान्तरं चाह (भिन्नत्वे चेति) अत्र व्यतिरेकित्रयं विवक्षितम्, आत्मा न भिन्नः, आत्मत्वात्, यद्भिन्नं न तदात्मा; यथा घटादि। आत्मा न भिन्नः, अजडत्वात्, यद्भिन्नं न तदजडं, यथा घटादि। आत्मा न भिन्नः, अक्षयित्वात्, यद्भिन्नं न तदक्षयि, यथा घटादिरिति। दूषणान्तरमाह (ब्रह्मणश्चेति) अनन्तत्वं नाम किम्, तस्य भेदवादेऽनुपपन्नत्वं कथम्? इत्यत्राह (अनन्तत्वं नामेति) (वस्त्वन्तरभाव इति) वस्त्वन्तरवत्त्वं वस्तुतः परिच्छेद इत्यर्थः। वस्तुतः परिच्छेदव्यासं देशकालपरिच्छिन्नत्वमप्यापततीत्याह (वस्तुत इति) व्याप्तिं दर्शयति (वस्त्वन्तरादिति) अस्यार्थ-

परिच्छिद्यन्ते । एवञ्च 'सत्यं ज्ञानमनन्तम्' इत्यादिभिस्सर्वप्रकारपरिच्छेदरहितत्वं वदद्भिर्विरोधः । उत्पत्तिविनाशादयश्च जीवानां ब्रह्मणश्च प्रसज्येरन्, कालपरिच्छेद एव ह्युत्पत्तिविनाशभागित्वम्, अतः एकस्यैवापरिच्छिन्नस्य ब्रह्मणोऽविद्याविजृम्भितं ब्रह्मादिस्तम्बपर्य्यन्तं कृत्स्नं जगत्; सुखदुःखप्रतिसन्धानव्यवस्थादयोऽपि स्वाप्नव्यवस्थावदविद्यास्वाभाव्यादुपपद्यन्ते; तस्मादेकमेव नित्यमुक्तस्वप्रकाशस्वभावमनाद्यविद्यावशाज्जगदाकारेण विवर्तत इति परमार्थतो ब्रह्मव्यतिरिक्ताभावात्तदनन्यत्वं जगत इति ॥

अत्रोच्यते– निर्विशेषस्वप्रकाशमात्रं ब्रह्मानाद्यविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत् प्रकाशस्वरूपस्य निरंशस्य प्रकाशनिवृत्तिरूपतिरोधाने स्वरूपनाशप्रसङ्गेन तिरोधानासम्भवादिभ्यः

* श्रुतप्रकाशिका *

स्यानिष्टत्वं दर्शयति (एवञ्चेति) निरुपपदमनन्तपदमसङ्कुचितवृत्तित्रिविधपरिच्छेदराहित्यमाहेति भावः । एवमपरिच्छिन्नस्य परिच्छिन्नत्वप्रसङ्ग उक्तः । अथाविकारस्य सविकारत्वप्रसङ्गमाह (उत्पत्तीति) अविकारत्वश्रुतिविरोधश्चेत्यर्थः । एकस्याविद्यया सर्वव्यवस्थोपपत्तिमुपसंहरति (अत इति) ब्रह्माज्ञानवादपक्षमुपसंहरति (तस्मादिति) विवर्त्तते–अध्यासाधिष्ठानं भवति, न तु परिणमतेत्यर्थः । (ब्रह्मव्यतिरिक्ताभावात्तदनन्यत्वं जगत इति) ब्रह्मणः परमार्थभूतमन्यन्न जगदित्यर्थः । ब्रह्माज्ञानवादिनं वैशेषिकः प्रतिवदति (अत्रोच्यत इति) तिरोधानेऽपि तद्रहितांशस्तिष्ठतीति न वक्तुं युक्तम्, निरंशत्वादित्यभिप्रायेण निरंशस्येत्युक्तम् । (स्वरूपनाशप्रसङ्गेनेति) तिरोधानं नाम प्रकाशनिवृत्तिः । तत्र जडस्य प्रकाशव्यतिरिक्त-

सकलप्रमाणविरुद्धं स्ववचनविरुद्धं चेति पूर्वमेवोक्तम् । यत्पुनरुक्तं कारणव्यतिरिक्तं कार्य्यं युक्तिबाधितत्वेन शुक्तिकारजतादिवद्भ्रम इति, तदयुक्तम्; युक्तेरभावात् । यत्त्वनुवर्त्तमानस्य कारणमात्रस्य सत्यत्वं व्यावर्तमानानां घटशरावादिकार्य्याणामसत्यत्वमिति; तदप्यन्यत्र दृष्टस्यान्यत्र व्यावर्तमानता न बाधिकेत्यादिभिः पूर्वमेव परिहृतम् । यच्चोपलभ्यमानत्वविनाशित्वाभ्यां सदसदनिर्वचनीयत्वेन कार्य्यस्य मृषात्वमिति, तदसत्; उपलब्धिविनाशयोगो हि न मिथ्यात्वं साधयति, किन्त्वनित्यत्वम्, यद्देशकालसम्बन्धितया यदुपलब्धं तद्देशकालसम्बन्धितया बाधितत्वमेव हि तस्य मिथ्यात्वे हेतुः, देशान्तरकालान्तरसम्बन्धितयोपलब्धस्यान्यदेशकालसम्बन्धित्वेन बाधितत्वं देशान्तरकालान्तराव्याप्तिमात्रं साधयति;

* श्रुतप्रकाशिका *

त्वात् प्रकाशनिवृत्तावपि तस्य स्थितिरुपपद्यते, प्रकाशैकरूपस्य ब्रह्मणः प्रकाशनिवृत्तिरूपतिरोधानं नाम स्वरूपनिवृत्तिरेवेत्यर्थः। (स्ववचनविरुद्धं चेतीति) नित्यत्वादिसाधकवचनविरुद्धं निर्विशेषत्वम्, ज्ञप्तित्वविरुद्धमसत्प्रत्ययगोचरत्वमित्यर्थः। पूर्वमेवोक्तम्—अस्मिन् प्रबन्धे सिद्धान्तिनोक्तमित्यर्थः। (यत्पुनरिति) सोपाधिकत्वकालात्ययापदिष्टत्ववचनव्याहतिभिरनैकान्त्यादिभिश्च पूर्वमेव परिहृतमित्यर्थः। मिथ्यात्वानित्यत्वयोर्भेदं दर्शयति (यद्देशकालेति) यद्यनित्यत्वमेव मिथ्यात्वमुच्यते तर्हि

७ भावप्रकाशिका ७

त्वादिति द्रष्टव्यम्। (सोपाधिकत्वकालात्ययापदिष्टत्वेति) प्रतिपन्नोपाधौ निषेधेन मिथ्यात्वसाधकव्यावर्तमानत्वहेतोः सोपाधिकत्वं मिथ्यात्वस्य प्रत्यक्षादिभिर्बाधः।

न तु मिथ्यात्वम्। प्रतियोगश्च घटादिकार्य्यं सत्यम्, देशकालादिप्रतिपन्नोपाधावबाधितत्वात्, आत्मवत्। यच्चोक्तं- कारणस्वरूपादविकृताद्विकृताच्च कार्य्योत्पत्तिर्न सम्भवतीति, तदसत्; देशकालादिसहकारिसमवहितात्कारणात्कार्य्योत्पत्तिसम्भवात्। तत्समवधानं च विकृतस्याविकृतस्य च न सम्भवतीति यदुक्तं, तदयुक्तम्; पूर्वमविकृतस्यैव कालादिसमवधानसम्भवात्। अविकृतत्वाविशेषात्पूर्वमपि देशकालादिसमवधानं प्रस-

* श्रुतप्रकाशिका *

सिद्धसाधनं मिथ्यात्वानुमानम्, यद्यनित्यत्वविलक्षणं मिथ्यात्वं साध्यते तर्हि सोपाधिकत्वादिदूषणानि स्युरिति भावः। प्रत्यनुमानमाह (प्रतिप्रयोगश्चेति) ननु मिथ्यात्वानुमानं न सोपाधिकम्, उपाधेरभावात्। प्रतिपन्नदेशकालोपाधौ बाधो न साध्यसमव्याप्तः, देशकालभ्रमेषु प्रतिपन्नोपाधौ बाधाभावात्। न हि देशकालभ्रमस्य देशकालान्तरोपाधिप्रतिपत्तिः, तस्मान्न साध्यसमव्याप्तिः। यदि बाधमात्रमेव हेतुः, तन्न; पक्षेऽपि विद्यमानत्वात्, पक्षेष्वविद्यमानः सर्वसपक्षानुयायी ह्युपाधिः, तस्मान्न सोपाधिकत्वमिति। अत्रायं परिहारः, देशकालभ्रमेष्वपि प्रतिपन्नोपाधौ बाधोऽस्ति, न हि देशकालावेव सर्वत्रोपाधिः, तौ तु देशकालव्यतिरिक्तविषयभ्रमेषु। देशकालभ्रमेष्वन्ये पदार्था उपाधयः, यथा दुर्दिने सायङ्कालभ्रमान्वितः पुरुषः पश्चादादित्यदर्शनात् प्रबुद्ध एवं मन्यते, यदाहं सन्ध्यामुपासितवान्न तदा सायमिति, यदा

* भावप्रकाशिका *

ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वे साध्ये मिथ्यात्वस्य मिथ्यात्वसाधनाद्याहतिः। ब्रह्मणो व्यावर्तमानाद्व्यावर्तमानतया अनैकान्त्यमित्यादिदूषणानि द्रष्टव्यानि। (यदि बाधमात्रमेव हेतुरिति) यदि बाधमात्रमेवोपाधिरित्यर्थः। (यथा दुर्दिने सायङ्कालभ्रमान्वित इति) ननु दुर्दिने सायङ्कालभ्रमस्थले दुर्दिनरूपकालस्यैवोपाधिशब्दवाच्यधिष्ठानत्वाद्देशकालयोरुपाधित्वव्यभिचारस्य नेद-

* श्रुतप्रकाशिका *

जीवानामपि प्रत्येकं निरवयवत्वे दोषः समानः भोक्त्रंशस्याप्युपादानत्वाभावात् प्रकृत्यंशस्य तदुभयविरोधपरिहारे प्रधानकारणवादे चोद्यं परिहृतं स्यात्, न तु ब्रह्मकारणवादे। किञ्च निरवयवत्वाकृत्स्नोपयोगविषयश्रुतिबलात् ब्रह्मणो विलक्षणत्वेऽपि निरवयवत्वमाकाशरूपरसादीनां निरवयवत्वादविलक्षणं सावयवतया परिणामप्रतिभटमित्युक्तदोषप्रसङ्ग इत्याशङ्कय निरवयवत्वमपि शब्दमूलत्वादपूर्वं ब्रह्मणस्सावयवतया परिणामार्हत्वानिवारकमिति व्याख्यातम्। तदप्ययुक्तम्; धर्म्मिवैलक्षण्ये सति विलक्षणधर्मासम्भवशङ्कानुदयात्। धर्मवैलक्षण्याभावे हि धर्मिवैलक्षण्यमेव न स्यात्, तस्माद्विलक्षणधर्म्मयोगे श्रुतेरिति प्रतिपादिते तदसम्भवशङ्कायां तत्सम्भवाय शब्दमूलत्वादिति धर्म्मिवैलक्षण्यप्रतिपादनमेव युक्तम्. तथा सर्वोपेतेत्यधिकरणान्तरं च वर्णितम्, 'अशब्दमस्पर्शम्' सर्वकर्मा सर्वकामः' बहु स्याम्' 'आसीनो दूरं व्रजति शयानो याति सर्वतः 'अनेजते कर्म सतो दवीयस्तद्धावतोन्यानत्येति तिष्ठन् 'पश्यत्यचक्षुः' इत्यादि विरुद्धकार्याणां भ्रान्तिसिद्धत्वं पूर्वपक्षीकृत्यांशभेदेनोपपन्नानि तानि सत्यानि, तेषां च कार्य्याणां चक्षुःश्रोत्रपाणिपादादिसापेक्षत्वव्याप्तिभङ्गेन सर्वशक्तियोगोपपत्तेरिति सिद्धान्तितम्। तत्राधिकरणभेदोऽनुपपन्नः, सर्वोपेता चेति चशब्देन पूर्वसूत्रसाध्यस्यैवोपपादकत्वावगमात् प्रकृतसाध्यं प्रत्युपयोगितया पाश्चात्यसूत्रद्वयार्थस्य तादर्थ्यसम्भवाच्च, तत्सम्भवश्च फलफलिभावे दर्शितः। सर्वनामरूपोपेतत्वं च सर्वोपेतशब्दार्थ उक्तः, भाष्ये तु तदनुक्तिस्तस्योपपादकत्वा-

* भावप्रकाशिका *

ल्पितरूपभेदस्यावयवत्वमेव सिध्येत्, नतु सावयवत्वमिति चेन्न; अविद्याकल्पितरूपभेदेन सावयवत्वमित्यस्याविद्याकल्पितरूपभेदयुक्तं यत्सावयवत्वमित्यस्याप्यर्थस्य सम्भवात्, तत्र च सावयवत्वेन प्रतिपिपादयिषितम् अविद्याकल्पितनामरूपयुक्तं ब्रह्म किमविद्याविशिष्टम्, उतोपलक्षितम्, उत प्रधानं वेति विकल्पसम्भवान्नानुपपत्तिः, किमविद्याकल्पितं किमविद्याविशिष्टमिति ग्रन्थे अविद्याकल्पितं रूपं यस्येति बहुव्रीहिः, ततश्चाविद्याकल्पितनामरूपयुक्तमित्यर्थः। अतो नानुपपत्तिरिति द्रष्टव्यम्। (तदुभयविरोधपरिहार इति) कृत्स्नप्रसक्तिनिरवयवत्वपरिहार इत्यर्थः। (पाश्चात्यसूत्रद्वयार्थस्येति) सर्वोपे-

न प्रयोजनवत्त्वात् ॥ ३२ ॥

१० अधिकरणम्

यद्यपीश्वरः प्राक् सृष्टेरेक एव सन् सकलेतरविलक्षणत्वेन सर्वार्थशक्तियुक्तः स्वयमेव विचित्रं जगत्स्रष्टुं शक्नोति; तथापीश्वरकारणत्वं न सम्भवति, प्रयोजनवत्त्वाद्विचित्रसृष्टेः, ईश्वरस्य च प्रयोजनाभावात् । बुद्धिपूर्वकारिणामारम्भे द्विविधं हि प्रयोजनं– स्वार्थः परार्थो वा । न हि परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण किञ्चन प्रयोजनमनवाप्तमवाप्यते । नापि परार्थः, अवाप्तकामस्य परार्थता हि परानुग्रहेण भवति; न चेदृशगर्भजन्मजरामरणनरकादिनानाविधानन्तदुःखबहुलं जगत्करुणावान् सृजति, प्रत्युत सुखैकतानमेव जन-

* श्रुतप्रकाशिका *

भावात् । निरवयवस्यापि सर्वकारणत्वे सर्वशक्त्यन्वय एव ह्युपपादकः, नामरूपोपेतत्वं तूपपाद्यकोटिघटकम् । श्रुतिवाक्यं तु श्रुतेस्त्वित्यत्रैव विवक्षितम्; अत इह तदनुपादानम् ॥ ७ ॥ ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥

॥ न प्रयोजनवत्त्वात् ॥ सङ्गतिः स्पष्टा । कारणत्वं सम्भवति, न? इति विचारः । तदर्थमवाप्तसमस्तकामस्य लीला प्रयोजनम्, नेति, लीलायां वैषम्यनैर्घृण्ये प्रसज्येते, न? इति च । यदा न प्रसज्येते, यदा च लीला न प्रयोजनम् तदा लीलारूपव्यापारासम्भवात् कारणत्वासम्भवः । यदा न वैषम्यादिप्रसङ्गः,

७ भावप्रकाशिका ७

ता च । विकरणत्वान्नेतिचेदिति सूत्रद्वयार्थस्येत्यर्थः । (उपपाद्यकोटिघटकमिति) सर्वकारणत्वोपपाद्यत्वान्नामरूपोपेतत्वस्येत्यर्थः । ननु निरवयवस्य सर्वकारणत्वे श्रुतिवाक्यस्यैव साक्षादुपपादकत्वात्तदेवास्मिन्विवक्ष्यताम्, किं सर्वशक्तियोगोपन्यासेनेति ।

येज्जगत्करुणया सृजन्; अतः प्रयोजनाभावाद्ब्रह्मणः कारणत्वं नोपपद्यत इति ॥ ३२ ॥

एवं प्राप्ते प्रचक्ष्महे—

लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

अवाप्तसमस्तकामस्य परिपूर्णस्य स्वसङ्कल्पविकार्य्यविविधविचित्रचिदचिन्मिश्रजगत्सर्गे लीलैव केवलं प्रयोजनम्, लोकवत्— यथा लोके सप्तद्वीपा मेव मेदिनीमधितिष्ठतः सम्पूर्णशौर्य्यवीर्यपराक्रमस्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्तुकाद्यारम्भा दृश्यन्ते; तथैव परस्यापि ब्रह्मणः स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति निरवद्यम् ॥ ३३ ॥

* श्रुतप्रकाशिका *

यदा च लीला प्रयोजनम्, तदा अवाप्तसमस्तकामस्य लीलारूपव्यापारसम्भवात् कारणत्वसम्भव इति सिध्यति। प्रयोजनवत्त्वं कस्येत्यपेक्षां पूरयति ( विचित्रसृष्टेरिति ) तस्य नेतिपदेनान्वयस्य विरुद्धत्वादभिप्रेतमाह (ईश्वरस्य चेति) तदेव विवृणोति (बुद्धिपूर्वेति) ॥ लोकवत्तु लीलाकैवल्यम् ॥ (लीलैव केवलेति) पणबन्धपूर्वकद्यूतादिव्यावृत्त्यर्थः केवलशब्दः । प्रयोजनान्तरानुद्देशेन प्रवृत्तत्वेपि यदृच्छोपनतप्रयोजनस्यार्थात् सिद्धिव्युदासार्थ एवकारः । ननु कन्तुकाद्यारम्भस्य ली-

ॐ भावप्रकाशिका ॐ

( कन्तुकाद्यारम्भस्य लीलात्वं युक्तमित्यादि ) ननु केवलं लीलैकप्रयोजनाः कन्तुकाद्यारम्भा दृश्यन्ते । जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति कन्तुकारम्भजन्मस्थितिध्वंसादेर्लीलाप्रयोजनकत्वप्रतिपादकभाष्ये विद्यमाने तदनादरेण कन्तुकाद्यारम्भस्य लीलात्वं युक्तम् । यत्नगौरवाभावाज्जगद्व्यापारस्य लीलात्वमनुपपन्नमिति कथं व्यापारस्यैव लीलात्वकथनमिति चेत्— अत्र

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

यद्यपि परमपुरुषस्य सकलेतरचिदचिद्वस्तुविलक्षणस्याचिन्त्यशक्तियोगात्प्राक्सृष्टेरेकस्य निरवयवस्यापि विचित्रचिदचिन्मिश्रजगत्सृष्टिः सम्भाव्येत, तथापि देवतिर्य्यङ्मनुष्यस्थावरात्मनोत्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपातः प्रसृज्येत, अतिघोरदुःखयोगकरणान्नैर्घृण्यं चावर्जनीयमिति । तत्रोत्तरम्– न सापेक्षत्वादिति । न प्रसज्येयातां वैषम्यनैर्घृण्ये, कुतः ? सापेक्षत्वात्– सृज्यमानदेवादिक्षेत्रज्ञकर्म्मसापेक्षत्वाद्विषमसृष्टेः । देवादीनां क्षेत्रज्ञानां देवादिशरीरयोगं तत्तत्कर्मसापेक्षं दर्शयन्ति हि श्रुतिस्मृतयः "साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भव-

---

* श्रुतप्रकाशिका *

लात्वं युक्तम्, यत्नगौरवाभावात् । जगद्व्यापारस्य तु लीलात्वमनुपपन्नम्, महायासरूपत्वादितिशङ्कानिवृत्त्यर्थमाह ( स्वसङ्कल्पमात्राऽवक्लृप्तेति ) ॥ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ वैषम्यशब्दः पक्षपातशब्देन व्याख्यातः । कस्य किमपेक्ष्यमित्यत्राह ( सृज्यमानेति ) ईश्वरश्चेन्न सृष्टौ

७ भावप्रकाशिका ७

केचित्; 'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमितिचापरे "देवस्यैष स्वभावोयमाप्तकामस्य का स्पृहा" इति माण्डूक्यश्रुतौ सृष्टेर्लीलार्थत्वस्य परपक्षत्वोपन्यासात् लीलाशब्दोत्रानायासकर्मपरः, लीलामात्रमेतस्य भारत्रयधान्यवहनमिति । तत्रापि प्रयोगदर्शनात्, यथा अङ्गुलिचालनादयोऽनायाससाध्याः क्रियाः, न प्रयोजनापेक्षाः । अत एव न तत्र प्रयोजनप्रश्नः, तत्प्रश्नेपि

ति पापः पापेन कर्म्मणा" तथा भगवता पराशरेणापि देवादिवैचित्र्यहेतुः सृज्यमानानां क्षेत्रज्ञानां प्राचीनकर्म्मशक्तिरेवेत्युक्तं "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्माणि। प्रधानकारणीभूता यतो वै सृज्यशक्तयः॥ निमित्तमात्रं मुक्त्वैव नान्यत्किञ्चिदपेक्षते। नीयते तपतां श्रेष्ठ स्वशक्त्या वस्तु वस्तुताम्" इति। स्वशक्त्या—स्वकर्म्मणैव देवादिवस्तुताप्राप्तिरिति॥

न कर्म्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च॥ ३५॥

प्राक्सृष्टेः क्षेत्रज्ञा नाम न सन्ति; कुतः? अविभागश्रवणात्, "सदेव सोम्येदमग्र आसीत्' इति; अतस्तदानीं तदभावात्तत्कर्म न विद्यते, कथं तदपेक्षं सृष्टिवैषम्यमित्युच्यत इति चेन्न; अनादित्वात्

* श्रुतप्रकाशिका *

कर्मसापेक्षः, किन्तु वैषम्यांश एव तदपेक्षा, अतो विषमसृष्टेरित्यध्याहृतम्। (निमित्तमात्रमेवासाविति) अप्रधानकारणं निमित्तशब्दविवक्षितम्, प्रधानकारणीभूता इति तत्रैव निर्देशात्। यथा "निमित्तमात्रं भव सव्यसाचिन्" इति, तद्वत्। प्राधान्यञ्च असाधारणकारणत्वम्. साधारणकारणत्वमप्राधान्यम्. यथा क्षेत्रसलिलादिकं सर्वसस्यसाधारणकारणं तत्तद्बीजशक्तिविशेषा अङ्कुरविशेषोत्पत्तावसाधारणकारणम् तथेश्वरस्य साधारणकारणत्वान्निमित्तमात्रत्वम्, कर्मणां विषमसृष्ट्यसाधारणकारणत्वात्प्राधान्यमित्यर्थः॥ न कर्माविभागादिति चेन्नानादि-

❀ भावप्रकाशिका ❀

तूष्णीमेवोत्तरम्, एवं परमात्मनोप्यनायाससाध्याः सृष्ट्यादिक्रियाः, न प्रयोजनापेक्षाः, अत्र च 'अखिलभुवनजन्मस्थेमभङ्गादिलीला' इत्याद्यपद्यस्यैव साक्षित्वात् केवललीलैकप्रयोजनाः कन्तुकाद्यारम्भाः ध्वंसादेर्लीलैव प्रयोजन-

क्षेत्रज्ञानां तत्कर्म्मप्रवाहाणां च । तदनादित्वेऽप्यविभाग उपपद्यते च; यतस्तत् क्षेत्रज्ञवस्तुपरित्यक्तनामरूपं ब्रह्मशरीरतयापि पृथग्व्यपदेशानर्हमतिसूक्ष्मम् । तथा अनभ्युपगमे अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च । उपलभ्यते च तेषामनादित्वं "न जायते म्रियते वा विपश्चित्" इति । सृष्टिप्रवाहानादित्वं च "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"इत्यादौ । 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत"इति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धम् । स्मृतावपि "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इति । अतस्सर्वविलक्षणत्वात्सर्वशक्तित्वाल्लीलैकप्रयोजनत्वात् क्षेत्रज्ञकर्म्मानुगुण्येन विचित्रसृष्टियोगाद्ब्रह्मैव जगत्कारणम् ॥ ३५ ॥

* श्रुतप्रकाशिका *

त्वादुपपद्यते चाप्युपलभ्यते च ॥ अपिशब्दं व्याचष्टे ( तदनादित्वेपीति ) उपपद्यते चेत्यत्र चशब्दाभिप्रेतार्थमाह ( अकृताभ्यागमेति ) स्वरूपानादित्वे सत्यपि सृष्टिप्रवाहानादित्वे सति हि कर्मप्रवाहानादित्वसिद्धिः, अतः सृष्टिप्रवाहानादित्वं दर्शयति ( सूर्य्याचन्द्रमसाविति ) प्रतिकल्पमधीतस्यास्य वाक्यस्यार्थवत्त्वात्सृष्टेरनादित्वसिद्धिः, तत्तत्सूत्रोक्तानर्थान् यथाक्रमं वदन्नधिकरणार्थमुपसंहरति ( अत इति ) ॥ सर्वधर्म्मोपपत्तेश्च ॥ इदं सूत्रं सर्वाधिकरणशेषम् । के धर्माः, कस्मिन्नुपपत्तिः, किं व्यवच्छेद्यम् ? इत्यपेक्षायां व्याचष्टे

ॐ भावप्रकाशिका ॐ

-मिति भाष्यस्यापि स्वस्य स्वयं दास इतिवत् स्वस्य स्वयमेव प्रयोजनमित्यर्थे तात्पर्यमित्येवाचार्याभिप्रायं वर्णयन्ति ॥ स्वान्यत्वज्ञानाच्चेति न ली-

## सर्वधर्म्मोपपत्तेश्च ॥ ३६ ॥

प्रधानपरमाणवादीनां कारणत्वे यद्धर्म्मवैकल्यमुक्तं वक्ष्यमाणं च, तस्य सर्वस्य धर्म्मजातस्य कारणत्वोपपादिनो ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति स्थितम् ॥ ३६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

इति श्रीमद्भगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

द्वितीयस्याध्यायस्य प्रथमः पादः ॥

---

* श्रुतप्रकाशिका *

(प्रधानेति) पञ्चम्या अन्वयं दर्शयति (ब्रह्मैवेति) परमप्रकृतसाध्येनान्वय इत्यर्थः ॥

इदमधिकरणं ब्रह्माज्ञानपक्षे न सङ्गच्छते, जगद्व्यापारस्य निष्प्रयोजनतया चोदिते लीलात्वेन परिहारात् । प्रपञ्चस्य भ्रान्तिपरिकल्पितत्वे भ्रान्तकृत्यस्य निष्प्रयोजनत्वं न दोष इति हि वक्तव्यम् ; न हि शुक्तिरूप्यचन्द्रद्वित्वाध्यासादिकं प्रयोजनाय प्रवर्तते, न च पित्तोपहतः प्रयोजनाकाङ्क्षया घटं भिनत्ति, गृहं च दहति, न हि स्वप्नदर्शी प्रयोजनापेक्षया स्वशिरश्छेदं पश्यति । ननु भ्रान्तस्यापि हि क्रीडा सम्भवति, अतस्तदुक्तिरिति चेन्न, केषाञ्चिद्व्यापाराणां क्रीडातुल्यत्वेऽपि स्वशिरःप्रहारादीनामिव भ्रान्तव्यापारत्वादेव तेषां क्रीडात्वानुपपत्तेः । किञ्च 'बहु स्या'मिति सङ्कल्पेन हीश्वरः सृष्ट्यादि करोति, तदयुक्तम्; न हि कश्चिद्भ्रान्तः स्यामिति सङ्कल्प्य भ्राम्यति । किञ्चेश्वरस्सर्वज्ञश्चेत् स्वानर्थरूपसंसारप्रवर्त्तनं क्रीडेति न मन्यते, अज्ञश्चेत्सर्वज्ञत्वश्रुतिविरोधः । विवेकज्ञाननिष्पादनेन स्वानर्थपरिहाराय जगत्सृजतीति चेत् तथापि लीलात्वमनुपपन्नम् । न हि व्याध्युपहतस्य औषधानयनप्रवृत्तिर्लीला भवति । स्वयं प्रयोजनरूपव्यापारो हि लीला, ऋग्वेदादिप्रवर्त्तकस्य शास्त्रादधिकविषयज्ञानवत ईश्वरस्य जगत्सृष्टिनिष्पाद्यं विवेकज्ञानं न सम्भवति, 'यस्सर्वज्ञस्सर्ववित् तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इति हि श्रुतिः । यदीश्वरः स्वबन्धभ्रमनिवर्तनाय जगत्सृजति तर्हि बन्धच्छेदनौपयिकानेवार्थान्सृजतु, किमर्थं बन्धवर्धकान-

* श्रुतप्रकाशिका *

र्थकामादीन् सृजति ? । किञ्च किं भ्रान्तिहेतुर्लीला ? उत भ्रान्तिकार्या ? उत भ्रान्तिरेव ? । नाद्यः— लीलया स्वभ्रमसम्पादनानुपपत्तेः । न द्वितीयः, प्रथमसङ्कल्पस्य लीलात्वानुपपत्तेः , तद्वदेवोत्तरत्रापि लीलामन्तरेण भ्रमोपपत्तेश्च । नापि तृतीयः, द्विचन्द्रज्ञानस्य लीलात्वाप्रसिद्धेः, स्वयमभ्राम्यन्नीश्वरो लीलया परान् मोहयतीति चेन्न; त्वन्मते भ्रान्त्या विना परदर्शनायोगात्परदर्शने सम्भवति तेषां स्वानन्यत्वज्ञानाच्च । निर्विशेषसन्मात्रस्य ब्रह्मणो निर्विशेषत्वादेव न लीलासम्भवः, ईश्वरस्य तु सर्वज्ञत्वेन संसारमहितत्वेन जीवान् स्वानन्यत्वेन च जानतो जन्मजरामरणादिनिर्वर्तननरकपातनादिव्यापारो न लीला भवितुमर्हति; अत इदमधिकरणं ब्रह्माज्ञानवादिनां विरुद्धम् । वैषम्येत्यादिसूत्राणि चाधिकरणान्तरं सर्वैर्वर्णितम् ; न च तद्युक्तम्, फलफलिभावेन प्रकृतसाध्येन तेषामन्वितार्थत्वात्, फलफलिभावश्च दर्शितः । कर्मसापेक्षतया वैषम्यनैर्घृण्यपरिहारश्च भ्रान्तब्रह्मवादिनां न घटते, पित्तोपहतो हि शुभाशुभानपेक्षः कञ्चित्स्तौति सान्त्ववादिनमपि कञ्चिन्निन्दति, कांश्चिदम्भसा सिञ्चति, कांश्चिन्मुसलेन हन्ति; न च तस्मिन्वैषम्यनैर्घृण्ययोर्दोषरूपता । न च युक्त्या परिहर्तव्यत्वम् । सापेक्षत्वादितिपदं च विषमसृष्ट्या सम्बन्धमर्हति, न हीश्वरश्चेत् कर्मसापेक्षः, तस्य स्वतन्त्रत्वात् । सृष्टिश्चेन्न कर्मसापेक्षा समष्टितत्त्वसृष्टौ सर्वशक्तितयेश्वरस्य निरपेक्षत्वात् । यस्मिन्नंशे वैषम्यनैर्घृण्यप्रसङ्गस्तत्रैव हि कर्मणोऽपेक्षा; अतः प्राप्ताप्राप्तविवेकेन वैषम्यांशस्य कर्मसापेक्षत्वाद्विषमसृष्टेरित्युक्तम् । उपपद्यत इति चानादित्वमुपपद्यत इति व्याख्यातम्, तदानीमविभागादिति शङ्कितहेतुरपरिहृतः स्यात्; अतः क्षेत्रज्ञानामनादित्वेऽपि अविभाग उपपद्यत इति व्याख्यातम् । उक्तलक्षणस्याविभागस्य तथात्वोपपादकत्वेन अकृताभ्यागमादिप्रसङ्गरूपस्तर्कोऽपि सूत्राभिप्रेतो भवतीत्यभिप्रायेणाह— तथाऽनभ्युपगम इति । अकृताभ्यागम-

७ भावप्रकाशिका ७

लासम्भव इत्युत्तरत्रान्वयः । ( विषमसृष्ट्या सम्बन्धमर्हतीति ) ननु परीत्या ईश्वरेण सृष्टेत्यर्थः । नहीश्वरश्चेत् कर्मसापेक्ष इति नियमो नहीत्यर्थः । एवं सृष्टिश्चेदित्युत्तरवाक्येपि द्रष्टव्यम् । ( समष्टितत्त्वसृष्टाविति ) ननु कार्यमात्रे जीवदृष्टस्य कारणत्वात्तत्रापि कर्मसापेक्षत्वं शक्यते वक्तुमिति चेन्न;

* श्रुतप्रकाशिका *

शब्देन मुक्तानामप्युत्पत्तिप्रसङ्गोऽभिप्रेतः। एवम् उपपद्यते उपलभ्यते इति द्वयं यथाक्रममविभागानादित्वयोः समर्थनपरम्। सर्वधर्मोपपत्तेश्चेतिसूत्रं निर्विशेषवादेऽत्यन्तमघटितमिति दुरपह्नवम्। ब्रह्मणो महामायत्वात्तस्मिन्मायाकल्पितधर्मोपपत्तिरिति तु श्रद्धामात्रम्, अशाब्दत्वात्। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिविरोधाच्च॥ यादवमिश्रानुसारिणस्तु— सर्वधर्मोपपत्तेश्चेति सूत्रमप्यधिकरणान्तरमाहुः, तत्र चैतन्यशक्तिक्रियाशक्तिपरिणामशक्तिरूपाः सर्वे धर्मा ब्रह्मणि नोपपद्यन्ते, नित्यसर्गादिप्रवृत्तिप्रसङ्गात् न चेच्छया नित्यप्रसङ्गपरिहारः, इच्छाया नित्यत्वे नित्यप्रसङ्गात्, अनित्यत्वेऽपि हेतुसापेक्षत्वात् हेतोश्चामानकत्वात्; कथञ्चिद्धेत्वन्वेषणे तस्यापि नित्यानित्यविकल्पे पूर्वोक्तदोषप्रसङ्गादिच्छया व्यवस्थाऽनुपपत्तेर्नित्यसर्गप्रसङ्गः। अतो ब्रह्मणि सर्वे धर्मा नोपपद्यन्त इति पूर्वः पक्षः कृतः। इच्छायाः प्रलयकालात्ययज्ञानजन्यत्वात् तज्ज्ञानस्य प्रलयादौ कञ्चित्कालं स्वप्स्यामि ततः प्रबोद्धाहे इति सङ्कल्पस्य नष्टत्वेऽपि तदाहितविशेषप्रबोधशक्त्या प्रलयकालात्यये जन्यत्वात् प्रलयकालस्य प्रकृतिपरिणामरूपत्वादन्त्यपरिणामस्य नित्यप्रसङ्गाभावादिच्छायाः कादाचित्कत्वोपपत्तेर्नित्यसर्गादिप्रसङ्गाभावात् ब्रह्मणि ज्ञानक्रियापरिणामशक्तिरूपसर्वधर्मोपपत्तेरिति राद्धान्तितम्। तत्र तावदधिकरणान्तरत्वमयुक्तम्, सन्मात्रस्यापि ब्रह्मणः प्रकृत्यंशेन महदाद्युपादानत्वात् परिणामशक्तिमतोऽपि प्रकृत्यंशस्यान्तर्यामिब्राह्मणादिष्वीश्वरनियाम्यतयाऽवगतस्य स्वातन्त्र्येण परिणामायोगात् 'सदेव सोम्येदमग्र आसीत्तदैक्षत बहु स्यां 'सोऽकामयत' इति जगत्सर्गादिविषयस्येश्वरसङ्कल्पस्य कादाचित्कत्वावगमाच्च नित्यसर्गादिप्रवृत्त्यप्रसङ्गेन पूर्वपक्षोत्थानासम्भवात्। आद्विपरार्द्धकालभाविसहस्रशतरसूक्ष्मपरि-

* भावप्रकाशिका *

मुक्तापेक्षितमाता ... दिभोग्यसृष्टौ व्यभिचारेण सर्वत्र कार्ये तत्सापेक्षत्वाभावादिति भावः। (सूत्राभिप्रायो भवतीत्यभिप्रायेणाहेति) सूत्राभिप्रेतो भवतीत्यभिप्रायेणोक्तवानित्यर्थः। (सूत्रमप्यधिकरणान्तरमाहुरिति) यद्यपि मृषावादिमतेपीदं सूत्रमधिकरणान्तरमिति कल्पतरौ व्यक्तमुक्तम्, तथापि भाष्यभामत्योरप्रतीतत्वादेवमुक्तमिति द्रष्टव्यम्। (प्रलयात्ययज्ञानजन्यत्वादिति) प्रलयोऽतीत

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

१४ अधिकरणम्

बृहदारण्यके श्रूयते [1]"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन एतस्य वा ऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति । तथा आथर्वणे [2]"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्" इति । तत्र संशयः— किमिमे अक्षरशब्दनिर्दिष्टब्रह्मसम्बन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मवि-

---

* श्रुतप्रकाशिका *

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ अर्चिरादिगतेः सर्वविद्यासाधारण्यमुक्तं, तथाऽस्थूलत्वादेरपि सर्वसाधारण्यं निरूप्यत इति सङ्गतिः, पूर्वाधिकरणे प्रकरणं पूर्वपक्षहेतुः, अत्रापि तथेति वा सङ्गतिः । (प्रपञ्चप्रत्यनीकतास्वरूपा इति) प्रपञ्चप्रत्यनीकं ब्रह्म तस्य प्रपञ्चप्रत्यनीकत्वरूपस्वभावेन निरूपकाः अस्थूलत्वादिधर्मा इत्यर्थः ।

* भावप्रकाशिका *

नन्वस्थूलत्वादीनां सर्वेषां प्रपञ्चप्रत्यनीकतारूपत्वे एकतरवैयर्थ्यमित्याशङ्क्याह (प्रपञ्चप्रत्यनीकमित्यादिना) सर्वैरप्यस्थूलत्वादिभिर्धर्मैः प्रपञ्चप्रत्यनीकत्वं प्रत्याय्यते, निरूप्यनिरूपकयोरभेदोपचारेण च निर्देश इति भावः ।

---

१. बृ० ५-८-८ ॥ | २. मु० १-१-५ ॥

* श्रुतप्रकाशिका *

करत्वात्, देवताऽधिकरणे 'अनेकप्रतिपत्तिदर्शना'दिति युगपदनेकत्र प्रवृत्तिविरोधो हि शरीरभेदेन परिहृतः, यतो विचारान्तराण्ययुक्तानि, अत एवास्य सूत्रस्य विदुषो देहात्यये सकलकर्मक्षयस्य व्यभिचारशङ्काव्युदासपरत्वमेव युक्तम्, यतस्तदेव युक्तम् । अत एव साम्परायाधिकरणशेषत्वमेव घटत इति अनियमसूत्रात् प्रागेव पाठः समीचीनः । ननु अनियमसूत्रात् परत्वमुपपद्यते, विदुषोऽर्चिरादिनाऽपवर्गप्राप्त्यदर्शनपरिहारपरत्वेऽपि सङ्गत्युपपत्तेः, नैवम्, अर्चिरादिगतेर्देहानन्तरभावित्वचिन्तनपरत्वाभावादनियमसूत्रस्य, सर्वविद्यानिष्ठसाधारणत्वं हि तेन सूत्रेण निरूपितम् । अतो विद्याफलविशेषस्य देहपातानन्तरभावित्वचिन्तनपरस्य 'यावदधिकार'मिति सूत्रस्य साम्परायाधिकरणशेषतया पूर्वमेव पठनं युक्तम् ॥ ३२ ॥

अनियमाधिकरणं समाप्तम् ॥ १३ ॥

---

❁ भावप्रकाशिका ❁

यपर्यन्तपूर्वपक्षप्रवर्तनमसङ्गतमित्यत्र तात्पर्यात्, ननु 'अर्चिरादिना तत्प्रथितेः' इत्यधिकरणे अर्चिरादिमार्गव्यतिरेकेण मार्गान्तरं नास्तीति स्थापयिष्यमाणत्वात् देशविशेषविशिष्टब्रह्मप्राप्तेः मार्गान्तरेणाऽसम्भवात्, अर्चिरादिगतेः सर्वविद्यासाधारण्यं सिद्धमेवेति सिध्यत्येव सर्वविद्यासाधारण्यमिति व्यर्थोऽयं विचारः, नच अर्चिरादिगतेः सर्वविद्यासाधारण्येऽपि सर्वविद्यासु अनुचिन्तनीयत्वसिध्यर्थमिदमधिकरणमिति वाच्यम्, ब्रह्मप्राप्त्युपायतया सर्वविद्यान्वये सिद्धे तत्क्रतुन्यायेन सर्वत्र चिन्तनीयत्वस्यापि सिद्धेः, अस्मिन्मते अस्याधिकरणस्यार्चिरादिगतिचिन्तनविषयत्वाभावाच्च इति चेत्—सत्यम्, छान्दोग्ये एव प्रदेशभेदेन द्विःपाठस्य गतिप्रदर्शनपरत्वादस्याधिकरणस्य ॥ ७ ॥

इति अनियमाधिकरणम् ॥ १३ ॥

---



* श्रुतप्रकाशिका *

नदेहानन्तरमप्यपवर्गाभावस्य सिद्धत्वादहेतुत्वमेव समर्थितं भवति । नन्वधिकारस्य प्रारब्धकर्मकृतत्वात् तदवसाने मोक्षहेतुत्वमेव विद्याया मोक्षहेतुत्वमिति चेत्— न, प्रारब्धकर्मणोऽपि स्वाप्नार्थवन्मिथ्यात्वेन निवर्त्तकज्ञाने सति स्थित्यनुपपत्तेः, प्रवृत्तफलस्य कर्माशयस्य मुक्तेषोर्वेगक्षयादिव फलक्षयान्निवृत्तिरिति चेत्— न, स्वाप्नशरवेगस्येव मिथ्यात्वेन बोधादनन्तरं भोगानुपपत्तेः, न हीषुमोक्षणक्षण एव पुरुषे प्रबुद्धे शरश्च वेगश्चाबाधितौ तिष्ठतः, यदि वसिष्ठादीनां न निवर्त्तकज्ञानमुदितम्, तर्ह्यहेतुत्वशङ्काया अभावात्सुतरामनारम्भणीयता । अपरे तु वसिष्ठादीनां देहान्तरोत्पत्तिदर्शनेन विद्याया अर्चिरादिनाऽपवर्गहेतुत्वव्यभिचारशङ्कानिवारकं सूत्रं व्याचक्षते, तन्मतेऽपि श्रुतिविरोधे स्मृत्यप्रामाण्येन संशयाभावात् अधिकरणानारम्भस्तुल्यः । अन्ये तु अर्चिरादिमार्गस्य ऋजुत्वादादित्यादीनां परिभ्रमणशीलत्वेन अत्र नियमेनानवस्थानादार्जवेन न सदा देवाश्चिन्त्याः, किन्तु यदा यत्र यस्तिष्ठति स तत्र तदा चिन्त्य इति विचार्य भ्रमतामपि सूर्यादीनां शरीरान्तरेण मार्गानुगुणस्थित्युपपत्तेर्मार्गानुगुण्येन सदा ते देवाश्चिन्तनीया इति सिद्धान्तयन्ति, तदयुक्तं— कृत-

* भावप्रकाशिका *

इति श्रुतिबलात् ब्रह्मविदश्शरीरपातसमये सर्वकर्मक्षयार्चिरादिगतिविरजातरणब्रह्मप्राप्त्यादीनां श्रवणात् वसिष्ठावान्तरतपःप्रभृतीनां देहान्तरसम्बन्धप्रतिपादकपुराणवचसामप्रामाण्यप्रसङ्गेन शङ्कानुत्थितिप्रसङ्गात् । नच 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' इत्यत्रोक्तन्यायेन 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यस्य विद्यायोनिशरीरावसानत्वनिराकरणात् तच्छ्रुत्यनुग्रहसत्वेन वसिष्ठादीनां देहान्तरसत्वप्रतिपादकपुराणवचसाम् प्रामाण्यं सम्भवतीति वाच्यम्, तर्हि तन्मतेपि तेषां प्रामाण्यं सम्भवतीति वक्तुं शक्यत्वात्, किञ्च तेनैवाधिकरणेन प्रारब्धानाशावधिकत्वे संसारस्य निश्चिते सति किमत्र विचार्यमवशिष्यत इति चेत्, अत्रोच्यते—अस्मन्मते विदुषश्शरीरपातसमये सर्वकर्मक्षये वसिष्ठावान्तरतपःप्रभृतीनां जन्मान्तरसम्बन्धप्रतिपादकपुराणानां का गतिरित्याशङ्क्य 'भोगेन त्वितरे' इत्यधिकरणसिद्धन्यायस्मारणं सूत्रकृता क्रियत इति शक्यते वक्तुम्, परमते स्मृतिप्रमाणमवलम्ब्य श्रुतिप्रामाण्याक्षे-

* श्रुतप्रकाशिका *

शब्देन मुक्तानामप्युत्पत्तिप्रसङ्गोऽभिप्रेतः। एवम् उपपद्यते उपलभ्यते इति द्वयं यथाक्रममविभागानादित्वयोः समर्थनपरम्। सर्वधर्मोपपत्तेश्चेतिसूत्रं निर्विशेषवादेऽत्यन्तमघटितमिति दुरपह्नवम्। ब्रह्मणो महामायत्वात्तस्मिन्मायाकल्पितधर्मोपपत्तिरिति तु श्रद्धामात्रम्, अशाब्दत्वात्। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिविरोधाच्च॥ यादवमिश्रानुसारिणस्तु— सर्वधर्मोपपत्तेश्चेति सूत्रमप्यधिकरणान्तरमाहुः, तत्र चैतन्यशक्तिक्रियाशक्तिपरिणामशक्तिरूपाः सर्वे धर्मा ब्रह्मणि नोपपद्यन्ते, नित्यसर्गादिप्रवृत्तिप्रसङ्गात् न चेच्छया नित्यप्रसङ्गपरिहारः, इच्छाया नित्यत्वे नित्यप्रसङ्गात्, अनित्यत्वेऽपि हेतुसापेक्षत्वात् हेतोश्चामानकत्वात्; कथञ्चिद्धेत्वन्वेषणे तस्यापि नित्यानित्यविकल्पे पूर्वोक्तदोषप्रसङ्गादिच्छया व्यवस्थाऽनुपपत्तेर्नित्यसर्गप्रसङ्गः। अतो ब्रह्मणि सर्वे धर्मा नोपपद्यन्त इति पूर्वः पक्षः कृतः। इच्छायाः प्रलयकालात्ययज्ञानजन्मत्वात् तज्ज्ञानस्य प्रलयादौ कञ्चित्कालं स्वप्स्यामि ततः प्रबोद्धाहे इति सङ्कल्पस्य नष्टत्वेऽपि तदाहितविशेषप्रबोधशक्त्या प्रलयकालात्यये जन्यत्वात् प्रलयकालस्य प्रकृतिपरिणामरूपत्वादन्त्यपरिणामस्य नित्यप्रसङ्गाभावादिच्छायाः कादाचित्कत्वोपपत्तेर्नित्यसर्गादिप्रसङ्गाभावात् ब्रह्मणि ज्ञानक्रियापरिणामशक्तिरूपसर्वधर्मोपपत्तेरिति राद्धान्तितम्। तत्र तावदधिकरणान्तरत्वमयुक्तम्, सन्मात्रस्यापि ब्रह्मणः प्रकृत्यंशेन महदाद्युपादानत्वात् परिणामशक्तिमतोऽपि प्रकृत्यंशस्यान्तर्यामिब्राह्मणादिष्वीश्वरनियाम्यतयाऽवगतस्य स्वातन्त्र्येण परिणामायोगात् 'सदेव सोम्येदमग्र आसीत्तदैक्षत बहु स्यां' 'सोऽकामयत' इति जगत्सर्गादिविषयस्येश्वरसङ्कल्पस्य कादाचित्कत्वावगमाच्च नित्यसर्गादिप्रवृत्त्यप्रसङ्गेन पूर्वपक्षोत्थानासम्भवात्। आद्विपरार्द्धकालभाविसद्दशतरसूक्ष्मपरि-

* भावप्रकाशिका *

मुक्तापेक्षितमाता[illegible]दिभोग्यसृष्टौ व्यभिचारेण सर्वत्र कार्ये तत्सापेक्षत्वाभावादिति भावः। (सूत्राभिप्रायो भवतीत्यभिप्रायेणाहेति) सूत्राभिप्रेतो भवतीत्यभिप्रायेणोक्तवानित्यर्थः। (सूत्रमप्यधिकरणान्तरमाहुरिति) यद्यपि मृषावादिमतेपीदं सूत्रमधिकरणान्तरमिति कल्पतरौ व्यक्तमुक्तम्, तथापि भाष्यभामत्योरप्रतीतत्वादेवमुक्तमिति द्रष्टव्यम्। (प्रलयात्ययज्ञानजन्मत्वादिति) प्रलयोऽतीत

* श्रुतप्रकाशिका *

करत्वात्, देवताऽधिकरणे अनेकप्रतिपत्तिदर्शना'दिति युगपदनेकत्र प्रवृत्तिविरोधो हि शरीरभेदेन परिहृतः, यतो विचारान्तराण्ययुक्तानि, अत एवास्य सूत्रस्य विदुषो देहात्यये सकलकर्मक्षयस्य व्यभिचारशङ्काव्युदासपरत्वमेव युक्तम्, यतस्तदेव युक्तम् । अत एव साम्परायाधिकरणशेषत्वमेव घटत इति अनियमसूत्रात् प्रागेव पाठः समीचीनः । ननु अनियमसूत्रात् परत्वमुपपद्यते, विदुषोऽर्चिरादिनाऽपवर्गप्राप्त्यदर्शनपरिहारपरत्वेऽपि सङ्गत्युपपत्तेः, नैवम्, अर्चिरादिगतेर्देहानन्तरभावित्वचिन्तनपरत्वाभावादनियमसूत्रस्य, सर्वविद्यानिष्ठसाधारणत्वं हि तेन सूत्रेण निरूपितम् । अतो विद्याफलविशेषस्य देहपातानन्तरभावित्वचिन्तनपरस्य 'यावदधिकार'मिति सूत्रस्य साम्परायाधिकरणशेषतया पूर्वमेव पठनं युक्तम् ॥ ३२ ॥

अनियमाधिकरणं समाप्तम् ॥ १३ ॥

---

❁ भावप्रकाशिका ❁

यपर्यन्तपूर्वपक्षप्रवर्तनमसङ्गतमित्यत्र तात्पर्यात्, ननु 'अर्चिरादिना तत्प्रथितेः' इत्यधिकरणे अर्चिरादिमार्गव्यतिरेकेण मार्गान्तरं नास्तीति स्थापयिष्यमाणत्वात् देशविशेषविशिष्टब्रह्मप्राप्तेः मार्गान्तरेणाऽसम्भवात्, अर्चिरादिगतेः सर्वविद्यासाधारण्यं सिद्धमेवेति सिध्यत्येव सर्वविद्यासाधारण्यमिति व्यर्थोऽयं विचारः, नच अर्चिरादिगतेः सर्वविद्यासाधारण्येऽपि सर्वविद्यासु अनुचिन्तनीयत्वसिध्यर्थमिदमधिकरणमिति वाच्यम्, ब्रह्मप्राप्त्युपायतया सर्वविद्यान्वये सिद्धे तत्क्रतुन्यायेन सर्वत्र चिन्तनीयत्वस्यापि सिद्धेः, अस्मिन्मते अस्याधिकरणस्यार्चिरादिगतिचिन्तनविषयत्वाभावाच्च इति चेत्—सत्यम्, छान्दोग्ये एव प्रदेशभेदेन द्विःपाठस्य गतिप्रदर्शनपरत्वादस्याधिकरणस्य ॥ ७ ॥

इति अनियमाधिकरणम् ॥ १३ ॥

---



अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्या-
मौपसदवत्तदुक्तम् ॥ ३३ ॥

१४ अधिकरणम्

बृहदारण्यके श्रूयते [1]"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवन्दन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन एतस्य वा ऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति । तथा आथर्वणे [2]"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्" इति । तत्र संशयः— किमिमे अक्षरशब्दनिर्दिष्टब्रह्मसम्बन्धितया श्रुताः अस्थूलत्वादयः प्रपञ्चप्रत्यनीकतास्वरूपाः सर्वासु ब्रह्मवि-

---

* श्रुतप्रकाशिका *

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ अर्चिरादिगतेः सर्वविद्यासाधारण्यमुक्तं, तथाऽस्थूलत्वादेरपि सर्वसाधारण्यं निरूप्यत इति सङ्गतिः, पूर्वाधिकरणे प्रकरणं पूर्वपक्षहेतुः, अत्रापि तथेति वा सङ्गतिः । (प्रपञ्चप्रत्यनीकतास्वरूपा इति) प्रपञ्चप्रत्यनीकं ब्रह्म तस्य प्रपञ्चप्रत्यनीकत्वरूपस्वभावेन निरूपकाः अस्थूलत्वादिधर्मा इत्यर्थः ।

छ भावप्रकाशिका छ

नन्वस्थूलत्वादीनां सर्वेषां प्रपञ्चप्रत्यनीकतारूपत्वे एकतरवैयर्थ्यमित्याशङ्क्याह (प्रपञ्चप्रत्यनीकमित्यादिना) सर्वैरप्यस्थूलत्वादिभिर्धर्मैः प्रपञ्चप्रत्यनीकत्वं प्रत्याय्यते, निरूप्यनिरूपकयोरभेदोपचारेण च निर्देश इति भावः ।

---

१. बृ० ५-८-८ ॥ | २. मु० १-१-५ ॥

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥

१३ अधिकरणम्

उपकोसलादिषु येषूपासनेष्वर्चिरादिगतिः श्रूयते, किं तन्निष्ठानामेव तया ब्रह्मप्राप्तिः, उत सर्वेषां ब्रह्मोपासननिष्ठानाम्- इति संशये; इतरेष्वनाम्नानात् [1]"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [2]"श्रद्धां सत्यमुपासते" इतीतरसकलब्रह्मविद्योपस्थापकत्वे प्रमाणाभावाच्च तन्निष्ठानामेव—

* श्रुतप्रकाशिका *

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३२ ॥ अर्चिरादिगतेः प्रस्तुतत्वात्तन्नियमानियमचिन्तेत्यवान्तरसङ्गतिः, किमर्चिरादिगतिस्तत्सन्निधिसमाम्नातोपासननिष्ठानामेव ? उत सर्वविद्यानिष्ठानां ?, किं छन्दोग्यवाजसनेयकयोः 'तद्य इत्थं विदुः' 'य एवमेतद्विदुः' इति वाक्ययोः पञ्चाग्निविद्यानिष्ठानामेवार्चिरादिगतिश्रवणम्, उत सर्वब्रह्मविद्यानिष्ठानां, 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति किं पञ्चाग्निविद्यानिष्ठानुद्दिश्य गतिर्विधीयते ? किमितरानप्युपासकान् ?, किं श्रद्धासत्यतपश्शब्दैरुपास्यब्रह्मोपस्थापनमुखेन उपासनान्तरप्रतिपत्तिरस्ति, नेति, किम् उपकोसलविद्यायाम्, 'आचार्यस्तु ते गतिं वक्ता' इति गत्यनुवादः उपासनान्तरप्रतिपत्ति

* भावप्रकाशिका *

(आचार्यस्तु ते गतिं वक्तेति गत्यनुवाद इति) 'आचार्यस्तु ते इ[illegible] वक्ता' इति अग्निवाक्येन परिशेषिताया गतेः 'तेऽर्चिषमभिसम्भवन्ति' श[illegible] यत्कीर्तनं तदुपासनान्तरे अर्चिरादिगतिं निरुणद्धि, उत नेत्यर्थः, स्थित[illegible]वः— यद्यर्चिरादिगतिः सर्वसाधारणी 'तद्य इत्थं विदु'रिति पञ्चाग्निवाक्ये यत्र का[illegible]राग्नि तस्यामेव शाखायामुपकोसलविद्यायामर्चिरादिपाठोऽनर्थकः लोकाख्यं स्थानं विद्यया [illegible]

[illegible] । २. बृ० ८-६-१५ ॥

इति प्राप्तेऽभिधीयते– अनियमः– इति । सर्वेषां– सर्वोपासननिष्ठानां तथैव गन्तव्यत्वात् तन्निष्ठानामेवेति नियमो नास्ति । सर्वेषां तथैव गमने हि सति शब्दानुमानाभ्यां– श्रुतिस्मृतिभ्यामविरोधः; अन्यथा विरोध एवेत्यर्थः । श्रुतिस्तावत् छान्दोग्यवाजसनेय-

---

* श्रुतप्रकाशिका *

मुपोद्बलयति ? नेति, यदा नोपोद्बलयति तदा ब्रह्मोपस्थापनमुखेन उपासनान्तराप्रतिपत्तेः इतरोपासकानामनुद्दिष्टत्वात् पञ्चाग्निविद्यानिष्ठानेवोद्दिश्यै गतिविधानात् छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामर्चिरादिगतिश्रवणाभावात् न सर्वब्रह्मविद्यानिष्ठानामिति स्याद्, यदोपोद्बलयति, तदा ब्रह्मोपस्थापनमुखेनोपासनान्तरप्रतिपत्तेरितरानप्युद्दिश्य विहितत्वेन छान्दोग्यादौ पञ्चाग्निविद्यानिष्ठव्यतिरिक्तानामप्यर्चिरादिगतिश्रवणात्सर्वब्रह्मनिष्ठानामपि अर्चिरादिगतिः स्यादिति, सिद्धान्त्यभिमतवाक्यस्य निर्वाहमाह ( ये चेमे इति ) ( प्रमाणाभावादिति ) सत्यतपःशब्दयोर्ब्रह्मवाचकत्वे कारणाभावोऽभिप्रेतः ।

( इति प्राप्त इति ) ( गमने हि सतीति ) हि शब्दः सूत्रयोजनाशेषः ( अविरोध इति ) श्रुतिस्मृतिभ्यामस्यार्थस्याविरोध इत्यर्थः । उदाहृतवाक्यैः सर्वब्रह्मविद्यानिष्ठाना-

* भावप्रकाशिका *

स्यात्, शाखैक्येन प्रतिपत्तृभेदेन परिहारासम्भवात्, नच शाण्डिल्यविद्यायामिव 'एकत्र विधिरन्यत्राऽनुवादः' इति नियन्तुं शक्यते, विनिगमकाभावात्, 'आचार्यस्तु ते गतिं वक्ता' इति गत्युक्तिपरिशेषेण उपकोसलविद्यायां गतेः प्रतिपिपादयिषितत्वावगमेन स्तुत्यर्थानुवादत्वाभावाच्च विद्यान्तरप्रतिपत्तिं प्रतिबन्धातीति पूर्वपक्ष्यभिप्रायः, 'यदु चैवास्मिन् शव्यं कुर्वन्ति [illegible] । च न तेऽर्चिषमभिसम्भवन्ति' इति शवदहनादिवैगुण्येपि अर्चिरादिर[illegible] पकोसलविद्यानिष्ठस्य सिद्ध्यतीति विद्यास्तुत्यर्थतया श्रुतोपनिषत्कसूत्रटी[illegible]त्याशरीत्या अपुनरावृत्तिरूपगुणविधानार्थतया वा अर्चिरादि[illegible]नीकत्वं अर्चिरादिगत्यवगतिप्रतिबन्धकत्वमिति सिद्धान्[illegible]निर्देश इति भावः ।

---

१. मु० १-१-५ ॥

वाक्ययोः पञ्चाग्निविद्यायामर्चिरादिमार्गेण सर्वब्रह्मोपासननिष्ठानां गमनमाह "य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति" इति वाजसनेयके; "तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति छान्दोग्ये; "य इत्थं विदुः" इति पञ्चाग्निविद्यानिष्ठान् "ये चेमेऽरण्ये" इत्यादिना श्रद्धापूर्वकं ब्रह्मोपासीनाँश्चोद्दिश्यार्चिरादिका गतिरुपदिश्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" "सत्यं त्वेव विजिज्ञासि-

* श्रुतप्रकाशिका *

मर्चिरादिगतिमत्त्वप्रतिपादनं दर्शयति (छन्दोग्य इत्थं विदुरिति) सत्यशब्दस्य ब्रह्मवाचकत्वं दर्शयँस्तन्मुखेन तपःशब्दस्यापि तद्वाचित्वं दर्शयति (सत्यं ज्ञानमिति) तपश्शब्दस्यापि 'परमं यो महत्तपः' इत्यादिषु द्रष्टव्यम् । परैस्तु विद्यामन्तरेण केवलश्रद्धातपोभ्यामर्चिरादिगतिलाभासम्भवस्य 'विद्यया तदा-

* भावप्रकाशिका *

निधाय किमुपकोसलविद्यायामिति वाक्यं प्रयुक्तमिति द्रष्टव्यम् । उदाहृतवाक्यैः सर्वब्रह्मविद्यानिष्ठानाम् अर्चिरादिगतिमत्त्वं दर्शयति छान्दोग्ये 'इत्थं विदु'रिति क्वचित्कोशेषु पाठो दृश्यते, तत्र छान्दोग्ये इत्येतत् लेखकदोषकृतं, छान्दोग्ये इत्येतस्य पूर्वान्वितत्वात्, भाष्ये- 'य इत्थंविदु' रित्येतदुपलक्षणं 'य एवमेतद्विदु' रिति वाजसनेयिवाक्यस्याऽपि ,ततश्च 'य इत्थं विदुः' 'य एवमेतद्विदुः' इति च पञ्चाग्निविद्यानिष्ठानित्यर्थः, 'ये चेमेऽरण्ये' इत्यादिना- इत्यत्रादिशब्देन 'ये चामी अरण्ये' इत्यादि वाजसनेयवाक्यस्य ग्रहणम्, ये चामी अरण्ये स्थिता अमी वनस्थादयः श्रद्धां कृत्वा सत्यं परं ब्रह्मोपासत इति श्रुत्यर्थः, यत्र कामाः परागताः, कामाः- क्षुद्रविषयाः, परागता- निवृत्ता भवन्ति, तद्ब्रह्म लोकाख्यं स्थानं विद्यया आरोहन्ति तत्र स्थाने दक्षिणमार्गगा न यान्ति- न

तव्यम्" इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः। तपःशब्दस्यापि तेनैकार्थ्यात्सत्यतपश्शब्दाभ्यां ब्रह्मैवाभिधीयते। श्रद्धापूर्वकं ब्रह्मोपासनं चान्यत्र श्रुतम्, "सत्यं त्वेव विजिज्ञासितव्यम्" इत्युपक्रम्य "श्रद्धा त्वेव विजिज्ञासितव्या" इति। स्मृतिरपि "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः"इति सर्वेषां ब्रह्मविदामनेनैव मार्गेण गमनमित्याह—एवंजातीयकाः

* श्रुतप्रकाशिका *

रोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विनः' इत्यादिश्रुतिसिद्धत्वात् श्रद्धातपःपरायणानां विद्यानिष्ठत्वमार्थमित्युक्तम्, तदविरुद्धम्, आर्थत्वादपि शाब्दत्वं सम्भवद्युक्ततमम् 'स एनान् ब्रह्म गमयति' इति ब्रह्मप्राप्तिफलत्वात्, फलस्य च यथोपासनभावित्वात्, तत्रोपास्यतया प्रतीतं सत्यतपश्शब्दवाच्यं ब्रह्मैवेति च सिद्धम्। श्रद्धापूर्वकं ब्रह्मोपासनस्य श्रुत्यन्तरसिद्धतां दर्शयति (श्रद्धापूर्वकमिति) स्मृतिवचने 'ब्रह्म ब्रह्मविदो जनाः' इत्यत्र तात्पर्यं, न विद्याविशेष उक्तः। (एवंजातीयका इति) 'तयोर्ध्वमायन्नमृतत्वमेति' 'सूर्यद्वारेण ते विरजाः प्रयान्ति' 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्यया वाऽऽत्मानमन्विष्यादित्यमेवाभियान्ति' इत्यादयः श्रुतयः, 'स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु। द्रष्टव्यस्त्वनुमन्तव्यः श्रोतव्यश्च द्विजातिभिः। य एवमेनं जानन्ति ये चारण्यकमाश्रिताः। उपासते तपः सत्यं श्रद्धया परया युताः। क्रमात्ते सम्भवन्त्यर्चिरहः शुक्लं तथोत्तरम्। अयनं देवलोकं च सवितारं सवैद्युतम्। तत्र तत्पुरुषो दिव्योऽमानवो ब्रह्म लौकिकान्। करोति पुनरावृत्तिस्तेषामिह न विद्यते' इत्यादिस्मृतयश्च विवक्षिताः, सर्वविद्या-

* भावप्रकाशिका *

गच्छन्ति, तपस्विनोऽप्यविद्वांसो न यान्तीत्यर्थः, शाब्दत्वं सम्भवदिति भाष्यो-

**श्रुतिस्मृतयो बह्व्यः सन्ति । एवं सर्वविद्यासाधारणीयं गतिः प्रासैवोपकोसलविद्यादावनूद्यते ॥ ३२ ॥**

अनियमाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

रर्चिरादिगतिः प्राप्ता चेत् छान्दोग्ये प्रदेशद्वये ऽर्चिरादिगतेर्द्विरुक्तिः कथमित्य-त्राह ( एवं सर्वेति ) पूर्वपक्षे 'तद्य इत्थं विदु'रित्यादिवाक्यस्य सङ्कोचोऽनुवादत्वं च, सिद्धान्ते तु न तत्सङ्कोचः, अन्येषामनुवादत्वमात्रमेव, इदमधिकरणम् अर्चिरादिगतिचिन्तनस्य तत्सिद्ध्यर्थत्वात् अर्चिरादिगतेः सर्वविद्यासु चिन्तनीयतया कृतं – तद्व्यक्तीभविष्यति । इतरे सर्वेऽपि 'यावदधिकार'मिति सूत्रमतः परस्तात् पठित्वा अधिकरणान्तरमाहुः । तत्र परे तु विदुषस्तद्देहपातानन्तरं देहान्तरमुत्पद्यते न वेति संशय्य ब्रह्मविदामपि वसिष्ठादीनामितिहासपुराणेषु देहान्तरोत्पत्त्यवगमाद्विद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति पूर्वपक्षं कृत्वा वर्तमानब्रह्मविदां प्रारब्धभोगक्षय इवाधिकारिकपुरुषाणामपि प्रारब्धाधिकारहेतुकर्मक्षये मोक्ष इति न पाक्षिकहेतुत्वाहेतुत्वे इति सिद्धान्तयन्ति ; तदयुक्तम्– प्रत्यक्षया श्रुत्या विद्याया अपवर्गहेतुत्वे श्रुते तद्विरुद्धेतिहासपुराणवचसामप्रमाणतया विद्याया अपवर्गसाधनत्वे संशयानुत्थानात् । किञ्च 'यावदधिकारमवस्थिति'रित्युक्ते कथमहेतुत्वपरिहारः, यावदधिकारमवस्थानेन वर्तमा-

* भावप्रकाशिका *

क्तरीत्या तपश्शब्दस्यैव ब्रह्मवाचकत्वसम्भवादिति भावः, ( सङ्कोचोऽनुवादत्वञ्चेति ) 'श्रद्धां सत्यमुपासते' इत्यस्य पञ्चाग्निविद्यामात्रविषयत्वमेव, ततश्च 'तद्य इत्थं विदु' रित्येदनुविजानन्तीत्यत्र अनुविद्येतिवदनुवाद इत्यर्थः, नच 'तद्य इत्थं विदुर्येचेमेऽरण्ये' इति यच्छब्दद्वयस्य चशब्दस्य च वैयर्थ्यं शङ्क्यम्, गत्यभावादुपपत्तेरिति भावः ( अन्येषामनुवादत्वमात्रमिति ) उपकोसलविद्यापर्यङ्कविद्यादिवाक्यानामित्यर्थः ( तद्व्यक्तीभविष्यतीति ) उत्तराधिकरणे सम्भृतिश्रुतिव्याख्याने गतेस्सर्वविद्याचिन्तनीयत्वं व्यक्तीभविष्यतीत्यर्थः ( इतिहासपुराणवचसामप्रमाणतयेति ) ननु भवत्पक्षेपि समानमेतत् 'अश्व इव रोमाणि विधूय पापम्'

* श्रुतप्रकाशिका *

नदेहानन्तरमप्यपवर्गाभावस्य सिद्धत्वादहेतुत्वमेव समर्थितं भवति । नन्वधिकारस्य प्रारब्धकर्मकृतत्वात् तदवसाने मोक्षहेतुत्वमेव विद्याया मोक्षहेतुत्वमिति चेत्—न, प्रारब्धकर्मणोऽपि स्वाप्नार्थवन्मिथ्यात्वेन निवर्तकज्ञाने सति स्थित्यनुपपत्तेः, प्रवृत्तफलस्य कर्माशयस्य मुक्तेषोर्वेगक्षयादिव फलक्षयान्निवृत्तिरिति चेत्—न, स्वाप्नशरवेगस्येव मिथ्यात्वेन बोधादनन्तरं भोगानुपपत्तेः, न हीषुमोक्षणक्षण एव पुंरुषे प्रबुद्धे शरश्च वेगश्चाबाधितौ तिष्ठतः, यदि वसिष्ठादीनां न निवर्तकज्ञानमुदितम्, तर्ह्यहेतुत्वशङ्काया अभावात्सुतरामनारम्भणीयता । अपरे तु वसिष्ठादीनां देहान्तरोत्पत्तिदर्शनेन विद्याया अर्चिरादिनाऽपवर्गहेतुत्वव्यभिचारशङ्कानिवारकं सूत्रं व्याचक्षते, तन्मतेऽपि श्रुतिविरोधे स्मृत्यप्रामाण्येन संशयाभावात् अधिकरणानारम्भस्तुल्यः । अन्ये तु अर्चिरादिमार्गस्य ऋजुत्वादादित्यादीनां परिभ्रमणशीलत्वेन अत्र नियमेनानवस्थानादार्जवेन न सदा देवाश्चिन्त्याः, किन्तु यदा यत्र यस्तिष्ठति स तत्र तदा चिन्त्य इति विचार्य भ्रमतामपि सूर्यादीनां शरीरान्तरेण मार्गानुगुणस्थित्युपपत्तेर्मार्गानुगुण्येन सदा ते देवाश्चिन्तनीया इति सिद्धान्तयन्ति, तदयुक्तं— कृत-

* भावप्रकाशिका *

इति श्रुतिबलात् ब्रह्मविदश्शरीरपातसमये सर्वकर्मक्षयार्चिरादिगतिविरजातरणब्रह्मप्राप्त्यादीनां श्रवणात् वसिष्ठावान्तरतपःप्रभृतीनां देहान्तरसम्बन्धप्रतिपादकपुराणवचसामप्रामाण्यप्रसङ्गेन शङ्कानुत्थितिप्रसङ्गात् । नच 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते' इत्यत्रोक्तन्यायेन 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यस्य विद्यायोनिशरीरावसानत्वनिराकरणात् तच्छ्रुत्यनुग्रहसत्वेन वसिष्ठादीनां देहान्तरसत्वप्रतिपादकपुराणवचसाम् प्रामाण्यं सम्भवतीति वाच्यम्, तर्हि तन्मतेपि तेषां प्रामाण्यं सम्भवतीति वक्तुं शक्यत्वात्, किञ्च तेनैवाधिकरणेन प्रारब्धानाशावधिकत्वे संसारस्य निश्चिते सति किमत्र विचार्यमवशिष्यत इति चेत्, अत्रोच्यते—अस्मन्मते विदुषश्शरीरपातसमये सर्वकर्मक्षये वसिष्ठावान्तरतपःप्रभृतीनां जन्मान्तरसम्बन्धप्रतिपादकपुराणानां का गतिरित्याशङ्कय 'भोगेन त्वितरे' इत्यधिकरणसिद्धन्यायस्मारणं सूत्रकृता क्रियत इति शक्यते वक्तुम्, परमते स्मृतिप्रमाणमवलम्ब्य श्रुतिप्रामाण्याक्षे-

उच्यते । विद्या हि [1]"ब्रह्मविदाप्नोति परम्" [2]"ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मप्राप्त्युपायतया विधीयते । अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इति ।

एवं प्राप्तेऽभिधीयते—तदधिगमे-इति । विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते; कुतः ? एवंविधं हि विद्यामाहात्म्यमवगम्यते "एवंविदि पापं कर्म न श्लिष्यते" "एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिव्यपदेशात् । नच "नाभुक्तं क्षीयते कर्म" इत्यनेन शास्त्रेणास्य विरोधः, भिन्नविषयत्वात् । तद्धि कर्मणां फलजननसामर्थ्यद्रढिमविषयम्; एतत्तूत्पन्नाया विद्यायाः

* श्रुतप्रकाशिका *

र्थपरत्वादश्लेषविनाशासम्भव इति, नाभुक्तमित्यादिना पूर्वपक्षोपन्यासः, अननुभवेऽपि कर्मणां प्रायश्चित्तेन विनाशो दृश्यत इत्यत्राह ( न चेति ) ।

( एवं प्राप्त इति ) नाभुक्तमित्यादिवचनविरोधं परिहरति ( न चेति ) अत्र शक्तिशब्दः कर्मानुष्ठानजनितभगवन्निग्रहपरः, भिन्नविषयत्वेन वचसोर-

ཀ भावप्रकाशिका ཀ

मशक्यत्वादित्यर्थः, भाष्ये—शास्त्रविरोधादिति, नाभुक्तमिति शास्त्रेण कर्मणां भोगैर्नाश्यत्वावगत्या विरोधात् तयोर्विद्याफलत्वकल्पनं नोपपद्यत इत्यर्थः, भाष्ये—भिन्नविषयत्वादिति, इदमुपलक्षणम्, 'नाभुक्तं क्षीयते कर्मे'त्येतत्स्मरणमौत्सर्गिकम्, प्रायश्चित्तादिना नाश्यत्वाभ्युपगमात्, ततश्च 'एवंविदि पापं कर्म न श्लिष्यते' इति विशेषशास्त्रविरोधे सङ्कुचितविषयमेव वक्तव्यम्, असत्यां ब्रह्मविद्यायाम् असति च प्रायश्चित्ते 'नाभुक्तं क्षीयते' इत्यर्थः, न च विद्याया मोक्षफलकत्वात् अश्लेषवचनं स्तुतिरिति मन्तव्यम्, एतस्य स्तुतित्वे अघानामानन्त्येन अनिर्मोक्षप्रसङ्गादिति द्रष्टव्यम् ॥ ཀ ॥

१. तै० आन० १-१ ॥ | २. मु० ३-२-९ ॥

प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यम् उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते। यथाऽग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यम्, एवमत्रापीति न कश्चिद्विरोधः। अघस्याश्लेषकरणं— वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारम्भरुचिं, प्रत्यवायं च कुर्वन्ति। अघस्य विनाशकरणम्—उत्पन्नायास्तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति; सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिब-

---

* श्रुतप्रकाशिका *

विरोधे दृष्टान्तमाह (यथेति) अश्लेषविनाशौ विवृणोति (अघस्येति) उत्पत्स्यमानाया उत्पत्स्यमानस्य कर्मणः स्वकार्यकरणशक्तेः प्रतिबन्धोऽश्लेषः, उत्पन्नस्य कर्मणः उत्पन्नायाः कार्यकरणशक्तेर्विनाशकरणं विनाश इत्यर्थः। शक्तिशब्दार्थमाह (शक्तिरपीति) एतदुपपन्नमित्याह (तदेवमिति) ब्रह्मानुभवस्य स्वतःप्राप्तत्वेनासाध्यत्वात् प्रतिबन्धनिवृत्तिरूपसाध्ये प्रायश्चित्ततुल्यैव ब्रह्मविद्या, स्वर्गादेः साध्यत्वात्तत्साधनस्य कर्मणो न प्रतिबन्धनिवर्तकत्वम्, अत्र तु प्रतिबन्धनिवृत्तेरेव साध्यत्वा-

भाति । तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्, "नाविरतो दुश्चरितात्" इत्यादिभिः शास्त्रैराप्रयाणादहरहरुत्पद्यमानाया उत्तरोत्तरातिशयभागिन्याः विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥ १३ ॥

तदधिगमाधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

द्विद्यायास्तद्धेतुत्वं युक्तमित्यर्थः, तर्हि ब्रह्मविदो निषेधशास्त्रवश्यत्वं न स्यादित्यत्राह (तदिदमिति)। ननु ब्रह्मविद्याया अपि पापप्रायश्चित्तत्ववचनात् कृच्छ्रादीनामिव बुद्धिपूर्वपापनिवर्तकत्वमपि स्यात्, नैवं प्रामादिकाघप्रायश्चित्तत्वेनैव तद्विधानात् 'अपि चेत्पातकं किंचिद्योगी कुर्यात् प्रमादतः। योगमेव निषेवेत नान्यं यज्ञं समाचरेत्' इति ह्युच्यते। ननु पूर्वं शरीरपातानन्तरं कर्मक्षय उक्तः, अत्र तूपासनारम्भे कर्मप्रहाणमुक्तम्, कथमिदमुपपद्यते? उच्यते– उपासनारम्भसमाप्त्योर्भगवत्प्रीतिविशेषाभिप्रायत्वात् अधिकरणद्वयाविरोधः, उपासनारम्भप्रीतः परमात्मा तत्समाप्तावुपासकस्याघं क्षमिष्यामीति सङ्कल्पयति, समाप्तौ तु क्षान्तमिति सङ्कल्पयति, अतोऽधिकरणद्वयार्थ उपपन्नः।

परेतु ज्ञानस्याविधेयत्वेन कर्मक्षयोद्देशेन विद्यायाः प्रायश्चित्तकर्मवद्विधानाभावात्तया कथं कर्मक्षय उक्त इत्याशङ्क्य– सगुणविद्यायां तावद्विधानमस्ति, निर्गुणविद्यायामपि वस्तुसामर्थ्यात् कर्मक्षयः कालत्रयेऽपि नाहं कर्ता भोक्तेत्यवगमादिति परिहरन्ति, तदयुक्तं– नाहं कर्ता नाहं भोक्तेति ज्ञाने सत्यपि चन्दनेन कण्टकेन स्वदेहं लिम्पतस्तुदतश्च पुरुषस्य लेपतोदकर्मकृतसुखदुःखान्वयदर्शनात्, साक्षात्कारवतो न सुखाद्यन्वय इति चेन्न 'व्युत्थानकाले राजेन्द्र आस्ते हेयतिरोहितः' इति

* भावप्रकाशिका *

(पूर्वं शरीरपातानन्तरं कर्मक्षय उक्त इति) साम्पराये तर्तव्या-

* श्रुतप्रकाशिका *

योगव्युत्थाने देहसुखदुःखाद्यन्वयस्य प्रामाणिकत्वात् , निर्गुणविद्याया अप्रामाणिकत्वाच्च वन्ध्यासुतस्य व्याधिपरिहारवद् व्यर्थः प्रयासः , कर्मफलभोगानवश्यम्भावेऽपि देशकालनिमित्तापेक्षो मोक्ष इति पूर्वपक्षिणोक्ते 'तथा चेत् कर्मफलवदनित्यत्वप्रसङ्ग इति सिद्धान्तिना परिहारश्चानुपपन्नः, निवर्तकज्ञानोदयानन्तरभाविन्या अविद्यानिवृत्तेरनित्यत्वप्रसङ्गात् , प्रागप्यविद्यानिवृत्तिरस्ति चेत्- शास्त्रवैयर्थ्यम् ।— अपरे तु नाभुक्तमिति स्मरणमविद्वद्विषयमित्याहुः, तद्भाष्योक्तविषयव्यवस्थाफलम् , विद्यायाः कर्मणां फलोत्पादनशक्तिविनाशसामर्थ्ये ह्युक्ते कर्मणां फलजननसामर्थ्यं विद्यारहितेषु भवतीति ज्ञायते, अविद्वद्विषयत्वमूलेऽभिहिते तद्विषयत्वं सिध्यतीति भाष्ये मूलयुक्तिरुक्ता ।— अन्ये त्वाहुः— अघफलं द्विविधं—लेपो विपाकश्चेति, तत्र लेपः—अप्रायत्यं, स्नानाद्यपनेयं, विपाकः— नरकपातादिः , सुकृतस्यापि लेपः— महत्त्वपङ्क्तिपावनत्वशापानुग्रहसामर्थ्यकाम्यकर्मरुचिरूपः, विपाकः—स्वर्गादिः, तत्र महत्त्वं नाम 'सवनगतौ क्षत्रियवैश्यौ हत्वा ब्रह्महा भवति' 'अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेत्' इत्यवगम्यते, तत्र लेपः स्वसामर्थ्यप्रसूतं फलम्, विपाकः नैयोगिकफलम्, एवं ज्ञानस्यापि स्वसामर्थ्यप्रभावितं नैयोगिकं चेति फलं द्विविधं, तत्र पुरुषशुद्धिलक्षणेन माहात्म्यशब्दवाच्येन कल्मषविरोधिना पूर्वकल्मषविनाशः, उत्तराघानामप्रायत्यकरणरूपसंश्लेषविघातश्च, ज्ञानस्य नैयोगिकफलं तु देहपातेऽन्तिमप्रत्ययसापेक्षं सुकृतदुष्कृतप्रहाणं, ब्रह्मभावाविष्करणं च, उत्तरेषामघानामश्लेष एव न विनाशः, अत एव 'सुकृतदुष्कृते धूनुते तस्य प्रिया

* भावप्रकाशिका *

भावादित्यत्रेति शेषः, ( कर्मफलभोगानवश्यम्भावेपीति ) कर्मणां फलभोगावश्यम्भावेपि उपभोगेन सर्वकर्मक्षये ब्रह्मज्ञानं मोक्षमुत्पादयतीति पूर्वपक्षिणोक्त इत्यर्थः , ( तथा चेदिति ) देशकालादिसापेक्ष इत्यर्थः ( अविद्यानिवृत्तेरनित्यत्वप्रसङ्गादिति ) ननु ज्ञानव्यतिरिक्तदेशकालाद्यपेक्षत्वान्नानित्यत्वप्रसङ्ग इति चेन्न, ज्ञानव्यतिरिक्तासम्भावनाविपरीतभावनारूपप्रतिबन्धकाभावसापेक्षत्वेन अविद्यानिवृत्तेरनित्यत्वतादवस्थ्यात् । ( अन्ये त्वित्यादि ) ( अत एव सुकृतदुष्कृते इत्यादि ) उत्तराघविनाशे विधूननादेरसम्भवा-

* श्रुतप्रकाशिका *

ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृत'मिति धूननवचनमाप्रियज्ञात्युपायनवचनं चोत्तराघविषयमिति , अत्रोच्यते— यद्यपि कर्मणामधिकारानधिकारसजातीयकर्मान्तररुचिस्वर्गनरकादिफलविभागोऽस्ति तथाऽपि सामर्थ्यप्रभावितनैयोगिकफलविभागो नोपपन्नः, भगवत्प्रीत्यप्रीतिव्यतिरेकेण सामर्थ्याभावान्नियोगाभावाच्च, तद्व्यतिरेकेण सामर्थ्यनियोगाभ्युपगमेऽप्यश्लेषवचनस्य लेपविघातमात्रविषयत्वं धूननोपायनवचनयोरुत्तराघमात्रविषयत्वं चानुपपन्नम्, तथाहि— उत्तराघस्य विपाकहेतुशक्तिरुत्पन्ना न वा , न चेल्लेपविघातोऽश्लेष इति विशेषोपादानवैयर्थ्यं स्यात्, अस्मदीयपक्षः परिगृहीतश्च भवेत्, उत्पत्तिपक्षे— क्रियोत्तीर्णा कर्मशक्तिरात्मधर्मभूता परमात्मप्रीत्यप्रीतिरूपा वा स्यात्, उभयथाप्यश्लेषवचनमनुपपन्नं स्यात्, आत्मधर्मत्वे तत्समवेतत्वात् परमात्मप्रीत्यप्रीत्योश्चेतनविषयत्वाच्च, विपाकशक्तेः श्लेषस्त्विष्टः, लेपविघात एवाश्लेषरूपतयाऽभिमत इति चेत्— तर्ह्यश्लेषवचनसङ्कोचः स्यात्, 'सुकृतदुष्कृते धूनुते' इति धूननश्रवणबलादवर्जनीयः सङ्कोच इति चेत्— तर्ह्युनुत्पन्नस्य धूननायोगाद्विपाकशक्त्युत्पत्तिकल्पनगौरवं च स्यात् , न चानुत्पन्नस्य धूननायोगात्तदुत्पत्तिः कल्पनीया भवेत् , उत्पन्नस्याप्यदृष्टस्य पांसुभसितकरीषादिवत् संयोगविभागार्हद्रव्यत्वाभावाद्धूननानुपपत्तेस्तत्कल्पनवैयर्थ्यात् धूननशब्देन विनाशो लक्ष्यत इति चेत्— न, विनष्टस्य प्रियाप्रियज्ञातिपरिग्रहायोगात् पुरुषगतादृष्टविनाशेऽपि प्रियाप्रियेषु नष्टसजातीयादृष्टान्तरोत्पत्तिरेव तत्संक्रमणमिति चेत् , कर्तृगतादृष्टविनाशस्य पुरुषान्तरगतादृष्टान्तरोत्पत्तेश्च किं कर्मस्वभाव एव कारणं, तर्हि सर्वेषां सर्वाणि कर्माणि नश्येयुः , पुरुषान्तरेष्वदृष्टं जनयेयुश्च, ततश्च

❀ भावप्रकाशिका ❀

दित्यर्थः । ( उत्तराघस्येति ) अभक्ष्यभक्षणादिक्रियारूपकर्मण इत्यर्थः । नतु क्रियाजन्यादृष्टरूपकर्मण इति मन्तव्यम्, तदतिरिक्तशक्तेरभावात् , ( विपाकहेत्विति ) विपाको नरकादिरुच्यते, ( विशेषोपादानवैयर्थ्यं स्यादिति ) विपाकविघातस्याभ्युपेतत्वेन लेपांशविघात इति वचनस्यायुक्तत्वादिति भावः, शङ्कते ( विपाकशक्तेः श्लेषस्त्विष्ट इति ) ( अश्लेषवचनसङ्कोचः स्यादिति ) ननु कथमत्राश्लेषवचनसङ्कोचः , ब्रह्मविद्याश्लेषो हि तत्र कार्यानार्जकत्वम्,

* श्रुतप्रकाशिका *

कर्तॄणां भोगाभावोऽन्येषां भोगनियमश्च स्यात्, अभुक्तफलस्याकृतप्रायश्चित्तस्य कर्मणोऽयं स्वभाव इति चेत्, तर्हि द्वादशवार्षिकादिषु केनचिदननुष्ठितेषु तद्द्विषतां ब्रह्महत्यादिदोषान्वयेन संव्यवहारादिषु बहिष्कार्यता स्यात्, यद्युच्येत नात्र कर्मस्वभावः कारणम्, अपि तु परविद्यामाहात्म्यमेव, तत्तु विद्वद्गतं पूर्वाघं विनाश्य तदप्रियेषु तादृशमघं जनयतीति, तर्ह्युत्तराघप्रतिबन्धं प्रियाप्रियेषु तादृशादृष्टं च विद्या करोतीत्यभ्युपगमो वरं, तथा सति उत्पत्तिकल्पनगौरवाभावात्, एवं च धूननोपायनयोरुत्तराघमात्रविषयत्वनिर्बन्धो निर्निबन्धनः स्यात्, विदुषः पूर्वाघविनाशने ज्ञातिषु तादृशाघजनने च विद्यासामर्थ्यस्योपपन्नत्वात्, एवं च सति 'सुकृतदुष्कृते धूनुते' इत्यत्र सुकृतदुष्कृतशब्दयोरसङ्कोचः स्यात्, अन्यथा सङ्कोचो निर्निबन्धनः स्यात्, नष्टस्य कर्मणोऽन्यत्र संक्रमणायोगरूपस्य सङ्कोचहेतोः परिहृतत्वात्, पुरुषान्तरे तादृगदृष्टान्तरोत्पत्तिरुपायनमिति त्वयैव ह्युक्तम्। इयान्विशेषः—एकस्मिन् पक्षेऽश्लेषवचनस्य धूननोपायनवचनयोश्च सङ्कोचो विपाकशक्त्युत्पत्तिकल्पनगौरवं च, पक्षान्तरे तु सर्वश्रुत्यसङ्कोचो लाघवं चेति।— अत्रायमर्थोऽनुसन्धेयः—विदुषः कर्मणां चतस्रोऽवस्थाः श्रुताः—विनाशोऽश्लेषो धूननमुपायनं चेति, क्रियामात्रविनाशस्य लोकसिद्धत्वात् क्रियाया अश्लेषधूननसंक्रमणानामयोग्यत्वाच्चावस्थाचतुष्टयं क्रियोत्तीर्णशक्तिविषयं निर्णीतम्, सा च शक्तिरिष्टानिष्टफलदित्सालक्षणपरमात्मप्रीत्यप्रीतिरूपा, अन्यथा श्रुतहानाश्रुतकल्पनप्रसङ्गादिति प्रागेवोपपादितम्, तत्र विनाशाश्लेषवचनयोः पूर्वोत्तराघविषयत्ववदुपायनवचनस्य पुरुषान्तरे तत्समानादृष्टोत्पत्तिविषयत्वं चार्थसामर्थ्यात् सर्वैरभ्युपगन्तव्यम्। अश्लेषवचनं च कृत्स्नोत्तराघविषयम्, अस-

* भावप्रकाशिका *

ततश्चोत्पन्नस्याप्यस्य ब्रह्मविदि कार्यानार्जकत्वात् अश्लेषवचनं सुश्लिष्टम्, नह्यश्लेषवचनस्याऽनुत्पत्तिवचनत्वं पुष्करपलाशजलदृष्टान्तविरोधादिति चेत्, उच्यते नहि निषिद्धकर्मजन्यपापस्याश्लेषं श्रुतिर्ब्रवीति, येनायं उपालम्भः स्यात्, किन्त्वेवंविदि पापं कर्म न श्लिष्यत इति निषिद्धकर्मणोऽभक्ष्यभक्षणादेरेवाश्लेषं ब्रवीति, तस्य च कर्मणो ब्रह्मण्यश्लिष्टत्वं हि ब्रह्मविदि पापाना-

* श्रुतप्रकाशिका *

ङ्कोचस्य स्वतःप्राप्तत्वात्, अश्लेषश्च प्रतिबद्धोदयत्वम् उत्पत्तिकल्पनगौरवाभावात् तत्कल्पनेऽपि धूननसंक्रमणायोगात्, एवं च विद्यायाः पूर्वाघविनाशने उत्तराघप्रतिबन्धे प्रियाप्रियेषु सजातीयादृष्टजनने सामर्थ्यं च सिद्धम् । एवं विद्याया विनष्टप्रतिबद्धादृष्टसजातीयादृष्टजननसामर्थ्यादुपायनश्रुतिश्च नोत्तराघमात्रविषया, अपि तु पूर्वोत्तराघविषया स्यात्, तथा चोपायनवाक्यस्थसुकृतदुष्कृतशब्दासङ्कोचश्च भवेत्, तत्र विनाशः— भगवतः पूर्वोत्पन्नकर्मफलदित्सानिवृत्तिः, अश्लेषश्च— उत्तरकर्मफलदित्साप्रतिबन्धः, तौ च यद्यर्थोपहितौ, यद्ययं प्रक्रान्तमुपासनं समापयेत् पूर्वोत्तरयोः कर्मणोः फलं न दास्यामीति सङ्कल्परूपौ हि तौ, समाप्ते तु कर्मफलं नैव दास्यामीति सङ्कल्पो विधूननश्रुत्यभिप्रेतः, लोके सेवारम्भसमापनयोः प्रीतितारतम्यदर्शनात्, शास्त्रेषु तीर्थसेवाद्युपक्रमसमापनयोः फलतारतम्यदर्शनाच्च । लोके राजादीनामिव परमात्मनोऽपि स्वसेवकविषयप्रीत्यतिशयेन तत्प्रियाप्रियजनेषु तदनुरूपेष्टानिष्टफलदित्सा च भवति, एवं पूर्वोत्तराघविनाशप्रतिबन्धधूननोपायनहेतुर्विद्यामाहात्म्यमिति ॥ १३ ॥

तदधिगमाधिकरणं समाप्तम् ॥

---

७ भावप्रकाशिका ७

र्जकत्वमेव, नतु पापोत्पत्तिमभ्युपगम्य ब्रह्मविदि लेपमात्रानार्जकत्वमिति सङ्कोच आश्रयणीय इत्यभिप्रायात्, नन्वेवं 'क्षीयन्ते चास्य कर्माणि' इत्यादिश्रुत्यनुसारेण पूर्वाघविनाशेप्यभक्ष्यभक्षणादिनिषिद्धकर्मविनाश एव स्यादिति चेन्न, तेषां कर्मणां क्षणिकतया तदानीमेव नष्टत्वेन तत्राघविनाशश्रुतेः निषिद्धकर्मजन्यपापविनाशपरत्वेन 'पापं कर्म न श्लिष्यते' इत्यादौ निषिद्धकरणस्यैव तन्निष्ठकार्यानार्जकत्वरूपाश्लेषस्य वक्तव्यत्वात्, नचावस्थाचतुष्टयमुत्तीर्णशक्तिविषयमित्युत्तरग्रन्थविरोध इति वाच्यं, तस्याप्यत्रैव तात्पर्यात् ॥ ७ ॥

इति तदधिगमाधिकरणम् ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

८ अधिकरणम्

उत्तरपूर्वाघयोर्विद्यया ऽश्लेषविनाशावुक्तौ, इतरस्य—पुण्यस्यापि, एवम्—उक्तेन न्यायेनाश्लेषविनाशौ विद्यया स्याताम्, विद्याफलविरोधित्वसामान्याद्व्यपदेशाच्च। भवति च व्यपदेशः—उभे सुकृतदुष्कृते निर्दिश्य

---

* श्रुतप्रकाशिका *

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ अवान्तरसङ्गतिः स्फुटा, इतरस्याप्यसंश्लेष इति प्रतिज्ञानिर्देशः, एवमिति न्यायातिदेशः, उत्तरपूर्वसुकृतयोरश्लेषविनाशौ किं सम्भवतः, नेति, किं 'पापं कर्म न श्लिष्यते' 'सर्वे पाप्मानः प्रदूयन्ते' इति वाक्यद्वयं सुकृतदुष्कृताश्लेषविनाशपरम् ? उत दुष्कृतमात्राश्लेषविनाशपरं, किमत्र पापकर्मशब्दो निषिद्धपरः, उत विद्याविरोधिफलकर्मपरः ? 'सर्वे पाप्मानः' इति वाक्यं किं पापशब्दस्य विद्याविरोधिफलकर्मपरतामवगमयति ? नेति, 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्ते' इति हिं श्रूयते, न चेत्— पापशब्दस्य निषिद्धमात्रपरतया वाक्ययोर्दुष्कृतमात्राश्लेषविनाशपरत्वान्न सुकृताश्लेषविनाशसम्भवः, अवगमयति चेत् पापशब्दस्य विद्याविरोधिफलकर्मपरत्वेन वाक्ययोः सुकृतदुष्कृताश्लेषविनाशपरत्वात् पूर्वोत्तरसुकृतयोरश्लेषविनाशसंभव इति,। एवंशब्दं व्याचष्टे ( उक्तेनेति ) उक्तन्यायं विवृणोति ( विद्याफलेति ) एवंशब्देन पूर्वसूत्रानुकृष्टव्यपदेशशब्दार्थमुपपादयति ( भवति चेति )

ॐ भावप्रकाशिका ॐ

( एवमिति न्यायातिदेश इति ) न स्वसंश्लेषातिदेशः तस्य प्रतिज्ञयैव निर्दिष्टत्वादिति भावः । 'सर्वे पाप्मान' इत्यत्र पाप्मशब्दस्य सुकृतसाधारण्यकोटिबीजं प्रकटयति ( न सुकृतं न दुष्कृतमिति ) सुकृतदुष्कृते निर्दिश्य सर्वे पाप्मान इति निर्देशः पाप्मशब्दस्य सुकृतसाधारण्यमवगमयति नेति पर्यवसितोऽर्थः ( उक्तं न्यायमिति ) पूर्वाधिकरणाभिप्रेतन्यायमित्यर्थः । ( पूर्वसूत्रानुकृष्टव्यपदेशशब्दार्थमिति ) व्यपदेशं प्रदर्श-

"सर्वे पाप्मानोऽतो निवर्त्तन्ते" इति, "तत्सुकृतदुष्कृते धूनुते" इति च मुमुक्षोरनिष्टफलत्वात्सुकृतस्यापि पाप्मशब्देन व्यपदेशः। सुकृतस्यापि शास्त्रीयत्वात्तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्याया अविरोधशङ्कां निवर्तयितुमतिदेशः । ननु विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव; कथं तेषां विरोधाद्विनाश उच्यते; तत्राह—पाते तु—इति । शरीरपाते तु तेषां विनाशः, शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥ १४ ॥

इतराधिकरणं समाप्तम् ॥



---

* श्रुतप्रकाशिका *

पुण्यस्यापि पाप्मशब्दवाच्यत्वे श्रुतिं दर्शयति (उभे इति) उभयोः पृथगभिधाने श्रुतिमाह (तत्सुकृतेति) अतिदेशस्याधिकाशङ्कामाह—(सुकृतस्येति) सूत्रखण्डान्तरस्य शङ्कामाह (नन्विति) विद्यानुगुणदृष्टफलानि तिष्ठन्ति चेत्तानि शरीरपातादूर्ध्वं नश्यन्तीत्यर्थः ।

परे चापरे च 'पाते तु' इति सूत्रखण्डमेवं व्याचक्षते— अश्लेषविनाशसिद्धेर्देहपाते मुक्तिरवश्यंभाविनी, तुशब्दोऽवधारण इति; तन्निष्प्रयो-

⁂ भावप्रकाशिका ⁂

यतीत्यर्थः, तत्र एवंशब्देन पूर्वसूत्रे आभिप्रायिकफलविरोधित्वन्यायात् कण्ठोक्तस्तद्व्यपदेशोऽप्यतिदिष्टः, तद्व्यपदेशो हि तस्य फलत्वव्यपदेशः, तत्र छात्रासत्वशङ्का प्राप्ता 'एवंविदि पापं कर्म न श्लिष्यते तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति पापानामेव

* श्रुतप्रकाशिका *

जनं— सर्वबन्धकविरहे मोक्षस्य वक्ष्यमाणप्रकारेण निःसंशयत्वात् सर्वप्रारब्धकर्मानपक्षये सति देहपाते मोक्षस्योपरितनाधिकरणविरुद्धत्वाच्च ।— अन्ये त्वनेनाधिकरणेनाश्लेषमात्रातिदेशः, न विनाशातिदेश इति वदन्ति, तदयुक्तं विनाशश्रवणरूपहेतोरसिद्धत्वात्, पाप्मशब्दस्यैवोभयवाचित्वोपपादनाच्च, देहान्ते ज्ञातिभिः परिग्रहादविनाश इति चेन्न, द्विषद्भिः परिग्रहेण दुष्कृतस्याप्यविनाशप्रसङ्गात्, सुकृतस्याश्लेषो नाम— काम्यकर्मरुच्यनुत्पत्तिः, पङ्क्तिपावनत्वादिलक्षणमाहात्म्यस्य तु विद्यया विरोधाभावान्नाश्लेषः, एवं स्वसामर्थ्यप्रभावितं ज्ञानफलं निरूपितं, कदा तर्हि नैयोगिकफलं सुकृतदुष्कृतप्रहाणमित्यपेक्षायामाह पाते त्विति— देहपात एवेत्यर्थ इत्याहुः, पात इत्यस्य व्याख्यानमनुपपन्नं निष्फलत्वादेव, तच्च 'साम्पराय' इत्यत्र प्रागुक्तत्वात्, अपेक्षिताकथनं च भाष्योक्तशङ्कायाः परिहरणीयत्वात्, अतो यथाभाष्यमेवार्थः ॥ १४ ॥

इतराधिकरणं समाप्तम् ॥

छ भावप्रकाशिका छ

श्रवणात् एवंशब्दोनुकृष्टस्तद्व्यपदेशो न सम्भवतीति, अतस्तच्छङ्कां व्युदसितुं एवंशब्दानुकृष्टव्यपदेशसिध्यर्थमुभे सुकृतदुष्कृते निर्दिश्य सर्वे पाप्मानोऽतो निवर्तन्त इति साधारण्येन सुकृतस्यापि मुमुक्षुवनाविष्करणात् 'सुकृतदुष्कृते धूनुते' इति वाक्येन अनिष्टत्वाविष्करणाच्च, अनिष्टफलत्वरूपप्रवृत्तिनिमित्तसत्वात् 'सर्वे पाप्मानः प्रदूयन्ते' इति सुकृताश्लेषविनाशस्यापि विद्यमानफलत्वव्यपदेशोस्तीति प्रदर्शयतीति भावः । भाष्ये— सुकृतस्यापि शास्त्रीयत्वादिति, ज्योतिष्टोमदर्शपूर्णमासादीनां शास्त्रीयत्वेन परस्परानुपमर्दकत्वादिति भावः, नच तत्सुकृतदुष्कृते धूनुते इति विशिष्य सुकृतस्यापि विनाशश्रवणात् कथमभ्यधिकाशङ्केति वाच्यं, तस्य शरीरपातानन्तरभाविसुकृतनाशविषयत्वादिति भावः ॥ छ ॥

इतीतराधिकरणम् ॥



## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

९ अधिकरणम् ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ; ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः? उतानारब्धकार्ययोरेवेति विशये [1]"सर्वे पाप्मानः प्रदूयन्ते" इति विद्याफलस्याविशेषश्रवणाद्विद्योत्पत्त्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालचक्रभ्रमणादिवत्संस्कारवशादप्युपपत्तेरविशेषेण—

* श्रुतप्रकाशिका *

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ अवान्तरसङ्गतिमाह ( ब्रह्मविद्योत्पत्तेरिति ) ततः पूर्वभाविनोः—ब्रह्मविद्योत्पत्तिपूर्वभाविनोरित्यर्थः किं पूर्वे सुकृतदुष्कृते अविशेषेण नश्यतः? उतानारब्धफले, किं 'सर्वे पाप्मानः' इति सर्वशब्दस्वारस्यानुरोधो न्याय्यः? उत 'तस्य ताव'दिति विलम्बश्रुत्यनुरोधः, किं कुलालचक्रभ्रमणवत् कर्मविनाशे संस्कारेण शरीरधारणमुपपद्यते? नेति, किमीश्वरप्रीत्यप्रीतिव्यतिरेकेण संस्कारकल्पनायां प्रमाणमस्ति? नेति, अस्ति चेत्—तेन शरीरधारणोपपत्तेः सर्वशब्दस्वारस्यानुरोधस्य न्याय्यत्वादविशेषेण नश्यतः, न चेत्संस्कारेण शरीरधारणायोगा-

* भावप्रकाशिका *

भाष्ये—उतानारब्धकार्ययोरेवेति, विद्यायोनिशरीरानारम्भकयोरित्यर्थः, भाष्ये— विद्याफलस्याविशेषश्रवणादिति, 'तस्य ताव' दिति श्रुतेः एतावन्मे चिरं यावद्भुञ्जानस्येत्यत्रैव क्षेपीयस्त्वाप्रतिपादनपरत्वेनावधिपरत्वाभावात्, इतरथा—अवधेश्चिरत्वस्य च प्रतिपादने वाक्यभेदप्रसङ्गादिति भावः, ( यावन्न विमोक्ष्ये अथ संपत्स्ये' इति, यावत्प्रारब्धकर्मणा न विमोक्ष्यते अथ संपत्स्यत इत्यर्थः, पुरुषव्यत्ययश्छान्दसः, नचावधिपरत्वे चिरत्वावधित्वरूपार्थद्वयप्रतिपादनेन वाक्यभेदप्रसङ्ग इत्युक्तमिति वाच्यं, वाक्यान्तरसिद्धचिरत्वानुवादेनाव-

1. छा० ५–२४–३ ॥

१२८

इति प्राप्ते उच्यते- अनारब्धकार्ये एव तु पूर्वे- इति। विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते अनारब्धकार्ये- अप्रवृत्तफले एव विद्यया विनश्यतः, कुतस्तदवधेः-¹"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातविलम्बावधिश्रुतेः। न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्यप्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥

अनारब्धकार्याधिकरणं समाप्तम् ॥



* श्रुतप्रकाशिका *

द्विलम्बश्रुत्यनुरोधेनानारब्धफले एव नश्यत इति सिध्यति।

सर्वमिथ्यात्ववादिनामिदमधिकरणं विरुद्धं- प्रारब्धकर्मणोऽपि मिथ्यात्वेन बाधात् स्थित्यनुपपत्तेः, द्वितीयचन्द्रज्ञानवैषम्यं प्रागेवोक्तं, प्रवृत्तफलस्य कर्मणः कुलालचक्रवेगवदन्तराले प्रतिबन्धासम्भव इत्यपि दुरुक्तं, स्वामकुलालचक्रभ्रमणवद् द्वितीयक्षणे प्रबोधे सति तद्वेगस्य बाधितत्वदर्शनात्, संस्काराद्देहधारणं चेत्-क्षीणायुषामविदुषामपि देहधारणं स्यात् ॥ १५ ॥

अनारब्धकार्याधिकरणं समाप्तम् ॥

* भावप्रकाशिका *

धिमात्रप्रतिपादनपरत्वादस्य वाक्यस्येत्यदोषः, ( मिथ्यात्वेन बाधादिति ) नच यतो ज्ञानमज्ञानस्यैव निवर्तकमिति ज्ञानस्य अज्ञानमात्रनिवर्तकत्वेन ज्ञानकार्यभूतप्रारब्धकर्मानिवर्तकत्वात् तस्य कर्मणः स्वोत्पादनभूताविद्यानिवृत्तिप्रतिबन्धकत्वमस्तीति वाच्यम्, अज्ञानवत्तत्कार्यस्यापि निवर्त्यत्वस्य वक्तव्यत्वात्, इतरथा ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्याऽभावप्रसङ्ग इति भावः ॥ * ॥

इति अनारब्धकार्याधिकरणम् ॥



1. छा० ६-१४-२ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

१० अधिकरणम्

'इतरस्याऽप्येवमसंश्लेषः' इति विद्याबलात्सुकृतस्याप्यसंश्लेष उक्तः, अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामान्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने प्राप्ते उच्यते- अग्निहोत्रादि तु- इति । तुशब्दः सुकृतान्तरेभ्यो विशेषणार्थः, अग्निहोत्राद्याश्रमधर्माः फला-

* श्रुतप्रकाशिका *

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥ अवान्तरसङ्गतिमाह ( इतरस्यापीति ) ऊर्ध्वरेतस्त्वग्निहोत्रादिनैरपेक्ष्यदर्शनादनूर्ध्वरेतसामपि तन्नैरपेक्ष्यशङ्कायां 'सर्वापेक्षा' इति सूत्रं, यज्ञादेराश्रमधर्मत्वे विद्याङ्गत्वे च नित्यानित्यसंयोगविरोधपरिहारार्थं 'सहकारित्वेन च' इति सूत्रं, सुकृतफलाश्लेषादननुष्ठेयत्वशङ्कापरिहारार्थम् 'अग्निहोत्रादि' इति सूत्रम् । एवं सूत्राणामपौनरुक्त्यावहेषु शङ्काविशेषेषु सूत्राणामुत्थानात् समुच्चयवादो निरवकाशः, किमग्निहोत्राद्याश्रमधर्मो विदुषः कार्याश्लेषादननुष्ठेयः ? उतानुष्ठेयः ? किमश्लेषवचनं सर्वसुकृतविषयम् ? उत विद्याङ्गाश्रमधर्मव्यतिरिक्तसुकृतविषयं ? किं विद्वत्संबन्ध्याश्रमधर्मस्यापि फलं विद्याव्यतिरिक्तम् ? उत विद्यैवेति, व्यतिरिक्तं चेत्- अश्लेषवचनस्य सर्वसुकृतविषयतया कार्याश्लेषादननुष्ठेयता,

* भावप्रकाशिका *

भाष्ये- अनिच्छतोऽननुष्ठाने प्राप्त इति, निष्फलकर्मणि चिकीर्षाया अभावादित्यर्थः, यद्यग्निहोत्रादीनां फलवत्त्वं तर्हि अश्लेषो नोपपद्यत इति भावः, यज्ञेनेत्यादिश्रुतेः, दर्शनसमानाकारविद्योदयात्प्राक् तादर्थ्येन विधानार्थतयाप्युपपत्तेर्विद्योत्पत्त्यनन्तरं यावज्जीवमग्निहोत्रादेरनुष्ठेयत्वे प्रमाणाभावादित्यर्थः ( समुच्चयवादो निरवकाश इति ) सर्वापेक्षेति सूत्रं विद्याङ्गत्वपरम्,

श्लेषासम्भवादनुष्ठेया एव, तदसम्भवश्च तत्कार्यार्थत्वात्तेषाम्, विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम्, कथमिदमवगम्यते? तद्दर्शनात्, दृश्यते हि "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वं विद्यायाश्चाप्रयाणादभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात्तदुत्पत्त्यर्थमाश्रमकर्माप्यहरहरनुष्ठेयमेव, अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥

यदि अग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्थाः, विद्योत्पत्तेः प्राचीनं च सुकृतं "यावत्सम्पातमुषित्वा" "प्राप्यान्तं कर्मणः" इत्यनुभवेन विनष्टम्; भुक्तशिष्टं च प्रारब्धफलं "सुहृदः साधुकृत्याम्" इत्यस्य को विषयः? तत्राह—

* श्रुतप्रकाशिका *

यदा विद्यैव फलं तदा चाश्लेषवचनस्य विद्वत्सम्बन्ध्याश्रमधर्मव्यतिरिक्तविषयत्वेन कार्याश्लेषाभावादनुष्ठेयता, पूर्वपक्षमाह ( इतरस्येत्यादिना )

राद्धान्तस्तु ( अग्निहोत्रादि त्वित्यादि ) तर्हि सकृदनुष्ठेयमित्यत्राह ( विद्यायाश्चेति ) ॥ १६ ॥

उत्तरसूत्रस्य शङ्कामाह ( यद्यग्निहोत्रादीति ) ( सुहृदः साधुकृत्यामित्यस्य को विषय इति ) उत्तरपापकृत्यायाः प्रागभुक्तफलत्वात् प्रारब्धफलत्वा-

❀ भावप्रकाशिका ❀

सहकारित्वेनचेति सूत्रं फलविरोधिनिरसनेन समुच्चयपरमिति यादवमतानवकाश इत्यर्थः ॥ ❀ ॥

अतोऽन्यापि ह्येकेषामुभयोः ॥१७॥

अतोऽग्निहोत्रादिसाधुकृत्याया विद्योत्पत्त्यर्थाया अन्यापि विद्याधिगमात् पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता सम्भवत्येव, तद्विषयमिदमेकेषां शाखिनां वचनम् "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या"मिति। विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७॥

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति—

---

* श्रुतप्रकाशिका *

भावात् विद्यार्थत्वाभावाच्च 'द्विषन्तः पापकृत्या'मित्यस्योत्तरार्धं विषयः स्यादिति मत्वा सुहृदः साधुकृत्यामित्यस्य को विषय इत्युक्तम् ।

अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥ भुक्तं, भुज्यमानं, भोक्ष्यमाणं, प्रतिबद्धफलं चेति त्रिविधं कर्म, तत्र पूर्वकृतं पश्चाच्च वृष्ट्यन्नादिहेतोः कृतं प्रतिबद्धफलं कर्मास्ति, तद्विषया 'सुहृदः साधुकृत्या'मिति श्रुतिरश्लेषविनाशश्रुतिश्चेत्यर्थः ॥ १७ ॥

अनन्तरसूत्रसङ्गतिमाह ( अनुष्ठितस्यापीति ) ( पूर्वोक्तं स्मारयतीति ) 'पृथगृध्यप्रतिबन्धः फलम्' इति सूत्रेण कण्ठोक्तमत्र स्मारयतीत्यर्थः ।

* भावप्रकाशिका *

( उत्तरार्धं विषयः स्यादिति ) इदमुपलक्षणं—प्रारब्धव्यतिरिक्तपूर्वोत्तरसुकृतदुष्कृतानां विनष्टाश्लिष्टतया उपायनश्रुतेर्निर्विषयत्वमित्येवाक्षेपाभिप्रायः, अत्रोपायनस्य विनष्टाश्लिष्टपूर्वोत्तरसुकृतसजातीयोत्पत्तिरूपत्वेन विनाशाश्लेषयोरुपायनवचनेनाऽविरोधादिति परिहाराभिप्रायः, अयमर्थः— 'तदधिगम उत्तरपूर्वाघयोः' इत्यत्र सम्यक् विवृतस्तत्रैवानुसन्धेयः ।

यदेव विद्ययेति हि ॥ १८ ॥

"यदेव विद्यया करोति तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेनानुष्ठितस्यापि कर्मणः फलप्रतिबन्धः सूच्यते हि । अतो विदुषोऽनुष्ठितप्रतिबद्धफलविषयं "सुहृदः साधुकृत्याम्" इति शाट्यायनिकम् ॥ १८ ॥

अग्निहोत्राद्यधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

यदेव विद्ययेति हि ॥ १८ ॥ ( सूच्यते हीति ) अयं हि-शब्दः 'पृथग्ह्यप्रतिबन्धः फल'मित्यत्र हिशब्दवन्नोपपत्तिप्रसिद्धिद्योतकः, किन्तूपपादितप्रसिद्धिद्योतकः ।

परे तु तत्कार्यायेति ज्ञानस्य यत्कार्यं मोक्षस्तदर्थमिति व्याख्याय ज्ञानकार्यस्य मोक्षस्य कर्मकार्यत्वं विद्योत्पत्तिद्वारेणत्यौपचारिकमिति वदन्ति, ततो वरं ज्ञानाख्यकार्यायेति व्याख्यानम्, उत्पन्ने सम्यग्दर्शने विदुषः शास्त्रवश्यत्वाभावात् विद्यायाः प्रागनुष्ठितकर्मविषयं तत्कार्यार्थत्वाभिधानम् । यद्वा सगुणविद्यासु कर्तृत्वानतिवृत्तेर्विद्योत्पत्तावपि तस्याग्निहोत्रादिसम्भवात् तद्विषयमिति चाहुः, तदपि सम्यग्दर्शनवतामपि प्रत्यहमन्तःकरणशुद्ध्यर्थमग्निहोत्रादेरनुवर्तनीयतायाः 'स खल्वेवं वर्तयन् यावदायुष'मिति श्रुतिसिद्धत्वात्सगुणनिर्गुणविद्याविभागस्याप्रामाणिकत्वाच्चानुपपन्नम् । 'अतोऽन्यापी'ति साधुकृत्यावाक्यं काम्यविषयमित्याहुः ।

यदेव विद्ययेति सूत्रमधिकरणान्तरमाहुः, 'तेनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेद' इत्युद्गीथादिविद्यासंयुक्तमसंयुक्तं च कर्म, तत्र विद्यासंयुक्तं कर्म

* भावप्रकाशिका *

( परे त्वित्यादि ) ( ततोपि वरं ज्ञानाख्यकार्यायेति ) नच तथासति कार्यपदं व्यर्थमिति वाच्यं, यस्य ज्ञानस्य सुकृताश्लेषोत्पादकत्वं तस्मा एव ज्ञानायेति स्फोरक-

* श्रुतप्रकाशिका *

प्रकृष्टं, 'ब्राह्मणाय दद्या'दित्युक्तत्वेऽपि 'विद्यां व्रतवते दद्यान्न मूर्खाय' इति विशिष्टविषयत्वसिद्धिवद् यज्ञेनेत्यविशेषेणोक्तेऽपि विद्यासंयुक्तविशिष्टकर्मविषयत्वसिद्धेर्विद्यासंयुक्तकर्मण एव ज्ञानार्थत्वमिति पूर्वपक्षं कृत्वा 'तदेव वीर्यवत्तर'मिति श्रवणाद्विद्याविधुरस्य वीर्यवत्त्वमात्रं गम्यत इति तावदुपकारहेतुत्वादविशेषेणासंयुक्तमपि कर्म ज्ञानार्थमनुष्ठेयमिति सिद्धान्तयन्ति, तदयुक्तं– यज्ञेनेत्यविशेषश्रवणाद्वेदानुवचनदानादीनामिव विद्याविधुरस्य यज्ञस्य ज्ञानार्थत्वप्रतीतेः, यज्ञस्यैव ह्यङ्गाश्रयोपासनं न दानादेः, ब्राह्मणायेत्युक्तेऽपि विलक्षणपात्रसिद्धिवदित्यप्ययुक्तं– 'दानमश्रोत्रिये यथा' 'अश्रोत्रिये श्राद्धमधीतमन्नत'मित्यादिनिषेधवचनान्तरवासितमनस्कस्य तदेकार्थ्याद्विशेषविषयत्वप्रतीतिर्न तु वचनान्तरनिरपेक्षा, इह तु वाक्यान्तरेण विद्याविधुरयज्ञस्य ज्ञानार्थत्वप्रतिषेधादर्शनाद्यज्ञविशेषविषयप्रतीत्यभाव एव– यथा 'स्वर्गकामो यजेत' 'यज्ञेन देवेभ्यः' इत्यादिषु विद्यासंयुक्तयज्ञाप्रतीतिः, अतः पूर्वपक्षानुत्थानादनारम्भणीयतैव । अपरे तु– तत्कार्याय– अपवर्गायेति समुच्चयपरमाहुः, तदयुक्तं– ज्ञानकर्मसमुच्चयस्याप्रामाणिकत्वात् । ते च 'यदेव विद्यया' इति सूत्रमुपैक्षिषत, तदयुक्तं– तदा परोक्तयोजनैव स्यात्, तदा ह्यानर्थक्यं प्रतिबद्धकर्मद्योतनरूपप्रयोजनसद्भावादपरेषां मतिमान्द्यमेव तेन द्योतितम् । समुच्चयाप्रामाणिकत्वदोषोऽन्येषामपि तुल्यः । अन्ये तु विद्यासहकारिणां कर्मणां विद्यया प्रहाणसम्भावनाया एवाभावाद्विद्याधिगमात् प्राक् जन्मान्तरे चानुष्ठितकाम्यव्यतिरिक्तनित्यनैमित्तिककर्मविषयमिदमधिकरणं व्याचक्षते, राजनियोगानुष्ठायिनां सम्माननाप्राप्ति-

* भावप्रकाशिका *

त्वेन साफल्यात् (अन्ये त्वित्यादि) (विद्यासहकारिणामिति) विद्योत्पत्तेः प्राचीनानि नित्यनैमित्तिकानि विद्योत्पत्त्यर्थानि अपवर्गार्थानि च तदनन्तरभावीनि च विद्यया समप्रधानानि विद्यासहकारीणीति तेषां मर्यादा (प्रहाणसम्भावनाया इति) 'तत्सुकृतदुष्कृते धूनुते' इति धूननसम्भावनाया इत्यर्थः, विद्यासहकारिणो विद्यया धूननासम्भवात् पूर्वपक्षानुत्थितेरिति भावः (काम्यव्यतिरिक्तेति) काम्येषु कर्मसु मोक्षार्थत्वासम्भवात् सिद्धा-

* श्रुतप्रकाशिका *

त्त् स्वाधिकारार्थानामप्यग्निहोत्रादीनामपवर्गोऽवान्तरफलं भवतीत्यप्रहाणमिति सिद्धान्तयन्ति, 'य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते' इति वचनमत्र प्रमाणयन्ति, 'यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छती'ति गर्भसंस्कारादेरपवर्गार्थत्वविषयस्मृत्युपबृंहितत्वात् प्रागनुष्ठितस्यापवर्गार्थत्वसिद्धिरिति, तदयुक्तम्— उदाहृतवचनस्य विद्याधिगमात् प्रागनुष्ठितकर्मविषयत्वे स्वरसतः प्रामाण्याभावात् कथंचिदापाद्यमानस्यानुपपन्नत्वाच्च, कर्तृत्वममताफलविषयत्रिविधत्यागाभावे कर्मणोऽपवर्गार्थत्वायोगाद्वेदान्तज्ञानात् पूर्वं त्रिविधपरित्यागानुपपत्तेश्च तदानुष्ठितस्यापवर्गार्थत्वायोगाद्विद्यासहकारिणां कथं विद्यया प्रहाणशङ्केति चेन्न, अश्लेषविनाशश्रुतिबलेन विद्यासहकारित्वनिश्चयस्य प्रतिबद्धत्वात् तद्विषयश्रुतेरर्थवादत्वाश्रयणोपपत्तेः, परविद्याकार्यमपि जनयन्ति यज्ञादयः किं पुनः स्वर्गमिति हि स्तोतुं शक्यम्, अतः प्रागनुष्ठितविषयत्वमनादृत्य विद्वत्सम्बन्ध्याश्रमधर्मविषयत्वाश्रयणं युक्तम्, अतोऽन्यापीति सूत्रेण प्रहाणवचनं विनियोगवचनं च काम्यविषयमित्युक्ते मोक्षार्थं कर्म तु न प्रहीयते, किं त्वाब्रह्मलयात्तमनुगच्छति, एवं काम्यानि विज्ञानानि च देहान्ते प्रहीयन्ते, नित्यानि विज्ञानानि विद्वांसमनुगच्छन्तीति कर्मसु ज्ञानेषु च विभागमुक्त्वा नित्यानि विज्ञानानि न सन्तीति शङ्कामापाद्य तत्परिहारपरं 'यदेव विद्यया' इति सूत्रं व्याचक्षते, कर्मसमृद्ध्यर्थं विज्ञानं हि विहितं, तत्र काम्यकर्मसमृद्ध्यर्थं विज्ञानं प्रहीयते, मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छतीति, अत्र ब्रूमः—मोक्षार्थं कर्म विद्वांसमनुगच्छतीत्येतन्मुमुक्षोश्चरमदेहपाते ? उत तद्व्यतिरिक्तदेहपाते, प्रथमे कल्पे नायं विभागः— ज्ञानकर्मसमुच्चयस्य

* भावप्रकाशिका *

न्तानुत्थितेरिति भावः ( स्वाधिकारार्थानामिति ) नियोगानामित्यर्थः ( अपवर्गार्थत्वायोगादिति ) ततश्च 'न हास्य कर्म क्षीयते' इतिश्रुतेर्विद्यासहकारिविषयत्वमेव वक्तव्यं, ततश्च पूर्वपक्षसिद्धान्तावपि तद्विषयावेवोचिताविति भावः ( विद्वत्सम्बन्ध्याश्रमधर्मविषयत्वमिति ) विदुषा यावज्जीवमग्निहोत्रादीनि कर्तव्यानि नवेत्येवं विचारो युक्त इति भावः ( विनि-

## भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥

११ अधिकरणम्

ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ । ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने? उत तच्छरीरावसाने ? शरी-

* श्रुतप्रकाशिका *

निरस्ततया विद्योत्पादनमात्रचरितार्थस्य कर्मणो मोक्षार्थमनुगत्यनुपपत्तेः, द्वितीये तु– कृत्स्नसुकृतदुष्कृतप्रहाणाभावात्काम्यं कर्म प्रहीयते, मोक्षार्थमनुगच्छतीति विभागोऽनुपपन्नः, यतः कर्मणां विद्याङ्गत्वमेव न मोक्षार्थत्वम्, अत एव मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति, काम्यकर्मसमृद्ध्यर्थं विज्ञानं प्रहीयत इति च विभागोऽनुपपन्नः । ननु मुमुक्षोश्चरमेतरदेहपातेऽपि विद्याङ्गकर्मसमृद्ध्यर्थं विज्ञानमनुगच्छति इतरत्प्रहीयत इति विभागपरं सूत्रं स्यादिति चेत्, चरमदेहपातात् पूर्वमशेषसुकृतदुष्कृतप्रहाणाभावेन सुकृतसमृद्ध्यर्थज्ञानस्यापि प्रहाणायोगात् उपकार्यानुगमाननुगमानुगुणौ हि उपकारकानुगमाननुगमौ, अत एव हि मोक्षार्थकर्मसमृद्ध्यर्थं विज्ञानानुगमस्त्वयोत्प्रेक्ष्यते, अतः प्रतिबद्धफलसाधुकृत्योपपादनमाकाङ्क्षितमिति तत्परत्वमेव सूत्रस्य युक्तम् ॥ १८ ॥

अग्निहोत्राद्यधिकरणं समाप्तम् ॥

भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ १९ ॥ सङ्गतिः स्फुटा, आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने ? उत तच्छरीरावसाने ? देहान्तरावसाने वेत्यनियमः, किं 'तस्य तावत्' इति वाक्यं विद्यायोनिश-

* भावप्रकाशिका *

योगवचनमिति ) सुहृत्संक्रमणवचनमित्यर्थः ( विद्याङ्गकर्मसमृद्ध्यर्थेति ) मोक्षस्थाने विद्यां निवेशयाम इत्यर्थः ॥ ७ ॥

इति अग्निहोत्राद्यधिकरणम् ।

रान्तरावसाने वेत्यनियमः? इति संशये, "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" इति तच्छरीरविमोक्षावसानत्वश्रवणात्तदवसाने-

इति प्राप्त उच्यते— भोगेन तु—इति। तुशब्दः पक्षव्यावृत्त्यर्थः, इतरे आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमाप्त्यनन्तरं ब्रह्म सम्पद्यते। ते च पुण्यपापे एकशरीरोपभोग्यफले चेत्, तच्छरीरावसाने सम्पद्यते, अनेकशरीरोपभोग्यफले चेत्, तदवसाने सम्पद्यते,

---

* श्रुतप्रकाशिका *

रीरावसानमवगमयति? उत शरीरमतन्त्रीकृत्य फलभोगावसानमवगमयतीति, प्रथमे विद्यायोनिशरीरावसानत्वं, द्वितीये त्वनियमः।

पूर्वपक्षहेतुं परिहरति (तस्य तावदिति) 'यावन्न विमोक्ष्ये' इत्यत्र देहस्तदवधिश्च न श्रुतौ, 'धूत्वा शरीरमकृतं कृतात्मा' इत्यत्र शरीरं श्रुतम्, अवधिस्तु न श्रुतः, शरीरमिति एकवचनमपि जातिविषयम्, 'अश्व इव रोमाणि विधूय पाप'मिति पूर्वखण्डस्थपापशब्दैकवचनवदित्यभिप्रायेण देहावधिनियमाश्रवणा-

* भावप्रकाशिका *

भाष्ये— तच्छरीरविमोक्षावसानत्वश्रवणादिति, 'धूत्वा शरीरमकृतं कृतात्मा' इति श्रुत्यन्तरदर्शनात् तस्य तावदित्येतत् शरीरस्याश्रुतत्वेपि शरीरमोक्षावधिपरम्, नच धूत्वा शरीरमित्येतत् प्रारब्धकार्ययावच्छरीरपरम्, एकवचनश्रवणात्, एकत्वाविवक्षाकल्पने प्रमाणाभावात्, अस्माच्छरीरात्समुत्थायेति श्रुत्यन्तरे अस्मादिति विशेषणेन विद्यायोनिशरीरस्यैव विवक्षितत्वाच्च, अन्यथा तद्वैयर्थ्यापत्तेरिति भावः (देहस्तदवधिश्च न श्रुताविति) तदवधिशब्दः तदवधित्वपरः देहस्तदवधित्वेन न श्रूयत इत्यर्थः। ननु धूत्वा शरीरमिति श्रुत्यन्तरदर्शनात् तदवधित्वनिश्चय इत्यत आह (धूत्वा शरीरमिति)

भोगेनैव च क्षपयितव्यत्वादारब्धफलयोः कर्मणोः । "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च भोगेन तयोः कर्मणोर्विमोक्ष उच्यते, देहावधिनियमाश्रवणात् । तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्मानादिकालसञ्चितमनन्तं विद्यामाहात्म्याद्विनश्यति । विद्यारम्भोत्तरकालमनुष्ठितञ्च न श्लिष्यति । तत्र पुण्यरूपं सर्वं विदुषः सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥ १९ ॥

इतरक्षपणाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

चतुर्थस्याध्यायस्य प्रथमः पादः ॥



* श्रुतप्रकाशिका *

दित्युक्तम्, अस्मिन्पादे बह्वधिकरणोक्तार्थस्य सुग्रहत्वायाह ( तदेवमिति ) ।

परे तु— 'अनारब्धकार्ये' इत्यत्र यद्व्यावर्तितं तस्य कर्मणः क्षयप्रकारं दर्शयतीदं सूत्रमित्याहुः, तत्प्रयोजनशून्यत्वादनादरणीयम्, अनारब्धकार्ययोर्ज्ञानदाह्यत्वेऽभिहिते तदितरयोर्हि भोगेन क्षयः स्फुटः ।— अपरे तु

* भावप्रकाशिका *

'अस्माच्छरीरात्समुत्थाय' इत्यत्रापि शरीरपदं प्रारब्धकार्यशरीरसामान्यपरम्, अस्मादिति विशेषणं च श्रुतिस्मृतिप्रसिद्धत्याज्यत्वहेत्वनुभवसिद्धहेयताप्रदर्शनार्थमिति भावः ।

( परे त्वित्यादि ) ( तस्य तावदिति श्रुतिवशेनेति ) तस्य तावदिति श्रुत्या विद्यायोनिशरीरपात एव ब्रह्मसम्पत्तेः श्रवणेन शरीरान्तरे 'अने-

* श्रुतप्रकाशिका *

कर्तृत्वस्याविद्यामूलत्वाद्विदुषश्चाविद्यानिवृत्तौ भोक्तृत्वासम्भवात् बहुशरीरप्रदैककर्मणो देहान्तरोपाधौ तस्य तावदेवेति श्रुतिवशेन भोगासंभवाच्च प्रारब्धस्यापि ज्ञानेनैव क्षय इति पूर्वपक्षं कृत्वा तस्य तावदित्यवशेषितस्य कर्मणो ज्ञानदाह्यत्वायोगाद्विदुषोऽपि सुखदुःखानुभवदर्शनेन प्रारब्धभोगानुगुणाविद्यालेशानुवृत्तेरभ्युपगन्तव्यत्वात्तस्य तावदिति श्रुतेः प्रारब्धसर्वकर्मक्षयावधिपरत्वोपपत्तेः, अत एव प्रारब्धस्य देहान्तरोपाधौ ज्ञानदाह्यत्वाश्रयणायोगाच्च भोगेनैव क्षय इति सिद्धान्तयन्ति, तदयुक्तम्--अनारब्धकार्ये एवेत्यत्र समर्थितत्वात्, एवकारार्थो हि प्रारब्धस्य ज्ञानादाह्यत्वं, तच्च तस्य तावदित्यवधिश्रवणेन समर्थितम्, अविद्यापूर्वकत्वात् कर्तृत्वस्य, तदभावात् भोगानुपपत्तिः परिहरणीयेति चेत्, यदि सा परिहार्या तर्हि तत्रैव परिहर्तव्या, इह सूत्रेऽपि तत्परिहारस्याभिप्रायिकत्वं वक्तव्यं, तत्तत्रैव वक्तुं युक्तं, साध्यसिद्ध्युपयोगस्याविशिष्टतया तदौपयिकार्थानां तत्रैव वक्तव्यत्वात्, युक्तिरपि निर्मूला 'जक्षत् क्रीडन् रममाणः' इति मुक्तौ परं ब्रह्मोपसम्पन्नस्यापि कर्तृत्वश्रवणेन तस्याविद्यापूर्वकत्वाभावात्, कर्मफलभोगादिकर्तृत्वं चौपाधिकमिति पूर्वपक्षयुक्तेर्निर्मूलतयाऽनारम्भणीयत्ता। अतः अनारब्धकार्ये इत्यत्र प्रारब्धस्य भोगविनाश्यत्वे सिद्धे तदवधेरेव चिन्तनीयत्वं युक्तम्। अन्ये तु एकस्यापि कर्मणो बहुशरीरप्रदत्वसम्भवात्तस्य तावदित्यस्य कर्मक्षयावधिपरत्वोपपत्तेर्व्यासादीनां पुनर्जन्मदर्शनाच्च विद्यायोनिशरीरावसानत्वनियमाभावं पूर्वपक्षीकृत्य विद्यायोनिशरीरावसाने प्रारब्धस्यापि कर्मणो विरतव्यापारत्वाद्विरतव्यापारस्यानारब्धतुल्यत्वेन विद्याविनाश्यत्वात्, तस्य तावदिति वाक्यस्य तद्देहावधिविषयत्वोपपत्तेर्व्यासादीनामाधिकारिकत्वादविरतव्यापारेण पूर्वकर्मणैव बहुशरीरग्रहणोपपत्तेश्च विद्यायोनिशरीरावसानत्वं सिद्धान्तयन्ति, तदयुक्तंविद्यायोनिशरीरपाते प्रारब्धकर्मणो विरतव्यापारत्वे प्रामाणाभावात्, प्रत्युत व्यासादीनां बहुदेहपरिग्रहस्ताद्विरुद्ध उपलभ्यते, तेषां कर्मणोऽविरतव्यापारत्वे संप्रतिपन्ने तदितरेषामेकस्मिन् विद्यायोनिदेहान्त एव विरतव्यापारत्वे

* भावप्रकाशिका *

1... कशरीरारम्भककर्मफलभोगासम्भवेन क्षयायोगात् ज्ञानेनैव प्रारब्धस्य क्षयो

* श्रुतप्रकाशिका *

किं प्रमाणं, तस्य तावदिति श्रुतेस्त्ववधिविशेषाश्रवणात् तद्देहपातावधिपरत्वमनुपपन्नं, न हि विद्यायोनेः शरीराद्यावन्न विमोक्ष्य इति श्रूयते, तस्माद्विद्यायोनिशरीरावसानत्वनियमाभाव एव सिद्धान्तीकर्तव्यः ॥ १९ ॥

इतरक्षपणाधिकरणं समाप्तम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां चतुर्थ-
स्याध्यायस्य प्रथमः पादः ॥

———

* भावप्रकाशिका *

वाच्य इत्यर्थः । शिष्टं स्पष्टम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुज-
मुनिभिर्विरचितायां श्रुतप्रकाशिका-
व्याख्यायां भावप्रकाशिका-
यां चतुर्थस्याध्यायस्य
प्रथमः पादः ॥

———

समाप्तश्चाध्यायः ।

समुदिताधिकरणसङ्ख्या—१३४—समुदितसूत्रसङ्ख्या—४८७ ।





श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## चतुर्थेऽध्याये द्वितीयः पादः ।



### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

१ अधिकरणम् इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमन्तावदुत्क्रान्तिश्चिन्त्यते ; तत्रेदमाम्नायते "अस्य सोम्य पुरुषस्य प्रयतो वाङ्-

* श्रुतप्रकाशिका *

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ शरीरस्थितिसमये यद्विद्याफलं तदुक्तम्, अथ गत्युपक्रमश्चिन्त्यत इति पादसङ्गतिः, गतेरुपक्रमः—उत्क्रान्तिः, सा चिन्त्यते, किमियं सम्पत्तिर्वाग्वृत्तिविषया ? उत वाक्स्वरूपविषयेति, किं वाक्शब्दस्य मुख्यार्थपरिग्रह उपपन्नो नेति, किमियं सम्पत्तिर्लयरूपा उत व्यापारनिवृत्तिपूर्वकसंयोगरूपेति, इन्द्रियान्तरसम्पत्तिवचनं किं लयपरत्वेऽप्युपपद्यते ? उत संयोगपरत्व एवेति, यदा लयपरत्वेऽप्युपपद्यते, तदा सम्पत्तेर्लयरूपतया वाक्छब्दस्य मुख्यार्थपरिग्रहा-

* भावप्रकाशिका *

( यदा लयपरत्वेऽप्युपपद्यत इति ) ननु इन्द्रियान्तरसम्पत्तिवाक्सम्प-

१. छा० ६-८-६ ॥

**नम्। तद्वर्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मा- नुभवरूपं मुक्तस्यैश्वर्यम् । कुतः ? प्रकरणात्,**

---

* श्रुतप्रकाशिका *

यथाऽवस्थितब्रह्मानुभवरूपमित्यर्थः । सृष्ट्यादेरपि नियमनविशेषरूपत्वाज्ज-

* भावप्रकाशिका *

तद्वेद यद्यमुष्मिन् लोकेऽस्ति' इत्यादेरिव स्वावयवत्वकल्पनौचित्याच्च, अपि च साक्षादेव उपास्यगुणप्राप्तिः फलमवगम्यते, यथाक्रतुरित्यादिश्रुतौ, नच परब्रह्मण ऐश्वर्यमात्रमुपास्यम् । ननु निरङ्कुशं सर्वजगदैश्वर्यम्, अतो मुक्तस्य स्वसङ्कल्पसृष्टकतिपयवस्त्वैश्वर्यसिद्धावपि तत्क्रतुन्याय उपपद्यत इति वाच्यं 'सर्वस्य वशी सर्वस्येशानः' 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः' इत्यादिश्रुतिषु निरङ्कुशसर्वैश्वर्यस्य उपास्यत्वावगमात्, किञ्च मुक्तस्य सर्वेषु लोकेषु कामसञ्चारः श्रूयते, न तस्य तत्तल्लोकगतफलभोगार्थत्वकल्पनं युक्तं, ब्रह्मानन्दमनुभवतोपि विषयान्तरलिप्सया सञ्चाराभ्युपगमे तस्य निरतिशयत्वभङ्गापत्तेः, अतो मुक्तस्य नियमनादिलीलार्थ एव लोकसञ्चारः, तस्मात् परमसाम्यतत्क्रतुन्यायसर्वलोकसञ्चारादिप्रतिपादनदर्शनात् मुक्तस्यापि परमेश्वरवत् सर्वजगत्स्रष्टृत्वादिकमङ्गीकर्तव्यम्, नच यद्गुणप्राप्तिर्यदधीना, तस्य गुणास्ततो न्यूनः इति नियमोऽस्ति, गुरोर्विद्यामधिगतवतां शिष्याणां तद्वदेव व्याख्यातृत्वप्रबन्धनिर्माणादिदर्शनात्, दृश्यन्ते च सामन्ताः पार्थिवैश्वर्याधीनैश्वर्यवन्तः पार्थिवेन स्पर्धमानाः तं विजयमाना अपि, तदिह निरतिशयैश्वर्यत्वात्परमात्मनो मा नाम भूवंस्तदधिकाः, तत्समानास्तु भविष्यन्त्येव, अतस्ते स्वतन्त्रास्सन्तः जगत्सर्गेऽपि प्रवर्तेरन्, नच सृष्ट्यादिप्रकरणेषु परमात्मन एव सृष्ट्यादिव्यापारो न मुक्तानामिति वाच्यम्, श्येनप्रकरणे श्येनवत् इषुनामकक्रतोरसन्निहितत्वेपि 'समानमितरच्छ्येनेन' इति साम्यवचनात् तदीयवैशेषिकाङ्गानामिषाविव मुक्तानां सर्वेश्वरसाम्यवचनात् तदीयसृष्ट्यादिव्यापाराणां तेषु सिध्युपपत्तेः । किञ्च गावामयनिकस्वरसाम—वैश्वदेव्यामिक्षा— द्यावापृथिव्यैककपालप्रकरणाम्नातानामपि प्रकरणान्तराम्नातस्वरसामवारुण्यैककपालेमैत्रावारुण्यामिक्षाणां सादृश्यादिलिङ्गै-

निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याम्नायते [1]"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति। यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात्, ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते। असाधारणस्य हि लक्षणत्वम्। तथा [2]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" [3]"ब्रह्म वा

---

छ भावप्रकाशिका छ

बलात् तदीयधर्मान्तरप्राप्तिवत्सर्वलोकादिसञ्चारादिलिङ्गबलान्मुक्तानामपि ऐश्वर्य-जगद्व्यापारप्राप्त्युपपत्तेरिति, जगद्व्यापारवर्जमिति 'द्वितीयायाञ्च' इति णमुल् तत्र परीप्सायामित्येतत् प्रायिकमित्युक्तम्—'अनुदात्तं पदमेकवर्ज्यम्' इत्यत्र वृत्तिव्याख्यातृभिः। यद्वा जगद्व्यापारं वर्जयतीति जगद्व्यापारवर्ज्जम्, कर्मण्यण् ऐश्वर्यमिति विशेष्यम्, अत एवोत्तरत्र जगद्व्यापारवर्ज्जत्वप्रसङ्ग इत्यादिनिर्देश उपपन्नः, णमुलन्तत्वे तु न भावप्रत्ययः स्यात्, रूपञ्चान्यथा स्यात्, भाष्ये मुक्तस्यैश्वर्यमिति, भवितुमर्हतीति शेषः। अतश्च धातु-सम्बन्धविहितस्य णमुलो नानुपपत्तिः णमुलन्तत्वपक्षे इति द्रष्टव्यम्, भाष्ये— ततश्चेदं जगदीश्वरत्वरूपमिति, नन्वनाद्यन्तकल्पानुवृत्तसर्व-प्रपञ्चजन्मादिकारणत्वं ब्रह्मलक्षणम्; मुक्तानान्तु स्वमुक्तिप्राचीनकाल-वर्तिप्रपञ्चकर्तृत्वाभावात् न लक्षणत्वविरोधः इति चेन्न, जगत्सृष्ट्यादिषु वर्तमानानां मुक्तानामैकमत्यनियमाभावात् कस्यचित्सिसृक्षायामन्यस्य सञ्जि-हीर्षापि कदाचिद्भवेदिति किमपि कार्यं न निर्वर्तेत, नच सर्वेऽपि परमा-त्माधीना एव जगत्सर्गादौ प्रवर्तन्त इति ऐकमत्यमुपपद्यत इति वाच्यं, तर्हि तदधीनत्वेन तत्साम्याभावेन साम्यश्रुतेः सङ्कोचनीयत्वावश्यम्भावात् 'भोग-मात्रसाम्यलिङ्गाच्च' इति वक्ष्यमाणसूत्रन्यायेन भोगमात्रसाम्यमादायापि तुला-

---

1. तै० भृगु० १ अनु० ॥ 2. छा० ६-२-१ ॥ 3. बृ० ३-४-११ ॥

इदमेकमेवाग्र आसीत्तदेकं सन्नव्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति" [1]"आत्मा वा इदमेव एवाग्र आसीत् नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" [2]"एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्य्यः स एकाकी न रमेत तस्य ध्यानान्तःस्थस्यैका कन्या दशेन्द्रियाणि" इत्यादिषु । [3]"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य [4]"य आत्मनि तिष्ठन्" इत्यादिषु च निखिलजगन्नियमनं

---

* श्रुतप्रकाशिका *

गद्व्यापारशब्दोक्तिः, कन्या—मनःप्रकाशकत्वात्, कन दीप्ताविति धातुः ॥ १७ ॥

☙ भावप्रकाशिका ☙

धृतयोस्सुवर्णशिलाशकलयोर्गुरुत्वसाम्येनाप्यत्यन्तसाम्यव्यवहारवत् साम्यव्यवहारस्य जगत्कारणत्वमन्तरेणाप्युपपत्तेः न मुक्तस्य जगद्व्यापारप्रवृत्तिरिति भावः, नच तत्क्रतुन्यायविरोधश्शङ्कनीयः, कारणत्वविशिष्टस्य ब्रह्मणः प्राप्यत्वाङ्गीकारेण विरोधाभावात्, भाष्ये—तदेकं सन्नव्यभवदिति, तत—ब्रह्म, एकं—क्षत्रादिपरिपालयितृत्वादिशून्यं, सन्नव्यभवत्—विभववन्नाभूत्, कर्मणे न पर्याप्तमासीदिति यावत्, श्रेयोरूपं-[illegible] रूपं, अत्यसृजत्—अतिशयेन असृजत् देवत्रा—देवेष्वित्यर्थः, क्षत्राणि—क्षत्रियाणीत्यर्थः, कानि पुनस्तानि क्षत्रियाणीत्यत्राह ( इन्द्रो वरुण इत्यादि ) ( कन दीप्ताविति धातुरिति ) 'कन दीप्तिकान्तिगतिषु' इत्यस्माद्धौवादिकात् ण्यत्प्राप्तः 'कन्यायाः कनीन च' इति निर्देशान्न भवति, अपि तु यदेव भवति ॥ ☙ ॥

---

१. ऐत, १-१ ॥ २. महो० १-अ० १ ॥ ३. बृ० ५-७-३ ॥ ४. शतपथ० १४-५-३० ॥

परमपुरुषं प्रकृत्यैव श्रूयते । असन्निहितत्वाच्च— न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य सन्निधानमस्ति, येन जगद्व्यापारस्तस्यापि स्यात् ॥ १७ ॥

प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

[1]"स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति" [2]"स इमांल्लोकान्कामान्नीकामरूप्यनुसञ्चरन्" इति प्रत्यक्षेण श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते । अतो न जगद्व्यापारवर्जमिति चेत्—तन्न, आधिकारिकमण्डलस्थोक्तेः, आधिकारिकाः—अधिकारेषु नियुक्ता हिरण्यगर्भादयः, मण्डलानि—तेषां लोकाः; तत्स्थाः—भोगा मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः "तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादिनोच्यते, अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यती-

---

* श्रुतप्रकाशिका *

प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ कामान्नित्वकामरूपित्वसर्वलोकसञ्चारश्रवणाज्जगतस्तदधीनत्वं सिद्धमिति मुक्तस्येश्वरत्वमपि स्यादिति पूर्वपक्षोत्थानं, प्रत्यक्षेणेति व्याख्येयस्य व्यासेनोपादानम्, तद्व्याचष्टे ( श्रुत्येति ) विकारलोकान्—कार्यभूतलोकान्, विकारशब्दो धर्मिपरः, हेयातीतस्य मुक्तस्य हेयास्पदविकारलोकभोगापेक्षा कथमित्यत्राह ( अकर्मेति ) भगवद्विभूतित्वेनात्यन्तभोग्यता स्यादित्यर्थः । एवं कामान्नीत्यादिश्रुतिवाक्यं व्याख्यातम्, उक्तश्रुतिवाक्यार्थप्रतिपादकस्य सूत्रस्यार्थं

---

१. छा० ७-२५-२ ॥ २. तै० भृगु० १०-५ ॥

त्यर्थः । तदेवं विकारान्तर्वर्त्तिन आधिकारिकमण्डलस्थान्सर्वान् भोगान् ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनोच्यते; न जगद्व्यापारः ॥ १८ ॥

यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्त्तिनो भोगान् भुङ्क्ते; तर्हि बद्धस्येव मुक्तस्यापि अन्तवदेव भोग्यजातमल्पं च स्यात्तत्राह—

विकारावर्त्ति च तथा हि
स्थितिमाह ॥ १९ ॥

विकारे जन्मादिके न वर्त्तते इति विकारावर्त्ति, निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः । तद्विभूत्यन्तर्गतत्वेन विकारवर्त्तिनां लोकानामपि मुक्तभोग्यत्वं, तथा हि परस्मिन् ब्रह्मणि निर्विकारे ऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः [1]"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" [1]"रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इत्यादिका । तद्वि-

* श्रुतप्रकाशिका *

निगमयति ( तदेवमिति ) ॥ १८ ॥

उत्तरसूत्रशङ्कामाह ( यदीति ) ।

विकारावर्त्ति च तथा हि स्थितिमाह ॥ १९ ॥ मुक्तस्य सविभूतिक

१. तै० आन० ७-२-१  १. ॥

भूतिभूतं जगत्तत्रैव वर्तते [1]"तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति श्रुतेः। अतः सविभूतिकं ब्रह्मानुभवन् विकारान्तर्वर्तिन आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते इति 'सर्वेषु लोकेषु कामचारः' इत्यादिनोच्यते; न मुक्तस्य जगद्व्यापारः॥ १९॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तम्। निखिलजगन्नियमनरूपो व्या-

---

* श्रुतप्रकाशिका *

ब्रह्मानुभवितृत्वेन स्थितिवचनात्सर्वत्र कामचारादयो भवन्ति, न नियन्तृत्वादिकमित्यर्थः ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ (ब्रह्मणो हि प्रतिष्ठाहमिति)

छ भावप्रकाशिका छ

(सर्वत्र कामचारादयो भवन्तीति) हर्षोद्रेकात्, 'एतत्सामगायन्नास्ते हाउ हाउ हाउ' इत्यादि श्रुतिप्रतिपन्नसामगानवत् हर्षोद्रेकाद्यथेष्टं सञ्चरत इत्यर्थः, तथाच 'उपस्थितेऽतस्तद्वचनात्' इत्यत्र ब्रह्मोपसम्पत्तिः कामचारे हेतूकृता, अत एव निवृत्ततिरोधानस्य मुक्तस्य परमव्योमनिलयस्यैव सर्वविभूतियुक्तब्रह्मानुभवसम्भवात् सञ्चरणं वृथेति शङ्कापि पराकृता, हर्षोद्रेकप्रयुक्तचेष्टायाः प्रयोजनोद्देशप्रवृत्तत्वाभावात् लब्धसविभूतिकब्रह्मानुभवस्यापि चक्षुरादीन्द्रियजन्यसाक्षात्कारादिलिप्सया शरीरान्तरपरिग्रहयथेष्टसञ्चाराद्युपपत्तेः, अत्र विकारावर्तीति ब्रह्म निर्दिशतस्सूत्रकृतोऽयम्भावः, अपक्षयविनाशशून्यब्रह्मानुभवरूपस्यानन्दस्य न वृद्धिह्रासौ, सततैकरूपत्वात्, ईदृशं ब्रह्मानुभवतो मुक्तस्य नाऽवाप्तव्य आनन्दोऽन्योऽस्ति, येन ब्रह्मानुभवस्य आधिकारिकमण्डलस्थभोगामात्रतया न्यूनता कल्प्येतेति ॥ छ ॥

---

1. कठ० २-५-८ ॥

१. ते.

पारः परमपुरुषासाधारणं इति दर्शयतः श्रुतिस्मृती— [1]"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इति [2]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि । तथा [3]"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इति च श्रुतिः । स्मृतिरपि [4]"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्त्तते" इति, [5]"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग"दिति च । तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः— [6]"एष ह्येवानन्दयाति" [7]"मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणोऽहि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" इति । यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः । तथा-

---

* श्रुतप्रकाशिका *

ब्रह्म—जीवः, अमृतं—मोक्षः, शाश्वतधर्मः— ज्ञानं, सुखम्—आनन्दः, अन्याधीनत्वानित्यत्वयोर्विशेषमाशङ्क्य परिहरति (यद्यपीत्यादिना) तस्य—अपहतपाप्मत्वादिगुणस्य, तथाविधत्वं— स्वाभाविकत्वं, तस्य— प्रत्यगात्मस्वरूपस्य नित्य—

---

१. तै० आन० ८-१ ॥ २. बृ० ५-८-९ ३. बृ० ६-४-२२ ॥ ४. गी० ९-१० ॥ ५. गी० १०-४२ ॥ ६. तै० आन० ७-२१ ॥ ७. गी० १४-२६-२७ ॥

ऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तं, तस्य नित्यस्थितिश्च तदायत्ता, परमपुरुषस्यैतन्नित्यतायाः नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रावगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते । अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यञ्च जगद्व्यापारवर्ज्जम् ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रेण मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गात् जगद्व्यापारवर्ज्जमित्य-

* श्रुतप्रकाशिका *

स्थितिस्तदायत्तेत्यर्थः, । तदुपपादयति ( परमपुरुषस्येति ) मुक्तस्वरूपतद्गुणनित्यत्वं परसङ्कल्पायत्तमित्युक्तम्, अन्यदपि नित्यं वस्तु तदधीनस्थित्यादिकमित्याह ( एवमिति ) मुक्तस्य नियन्तृत्वाभावान्नानन्दवैकल्यं, प्रत्युत तत्पौष्कल्यमेव, सर्वेषां हि स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च, तथा पुरुषपश्वादिषु दृश्यते, तस्मादात्मन आविर्भूतयथावस्थितस्वरूपस्य शेषत्वमेव स्वाभाविकं रूपमपरोक्ष्यतः स्वशेषिपरमपुरुषपरिचरणमेव प्रियतमं स्यात्तद्विपर्ययेणेशितृत्वमत्यन्तानिष्टमेव, तस्मान्नानन्दवैकल्यम्, अपि तु तत्पौष्कल्यमेव ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ ( ब्रह्मेत्यादि ) 'स एवंवित्सर्वेषां

७ भावप्रकाशिका ७

ननु 'सह ब्रह्मणा विपश्चिता' इत्यस्य भोग्यसाहित्यपरत्वेन भोगसाम्ये प्रमाणीकरणासम्भवात् इत्याशङ्क्य भोगसाम्यरूपसायुज्यप्रतिपादकश्रुतिवाक्यान्युदाहरति ( स एवंविदित्यादि ) 'पृथिव्यै चैनमग्नेश्च दैवी वागाविशति

वगम्यते [1]"सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति । अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१

## * श्रुतप्रकाशिका *

भूतानां मतो भवति यथैषा देवतैवं न यथैतां देवतां सर्वाणि भूतान्यवन्ति न ह्येवमेवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयती'त्यादिवाक्यान्यप्यभिप्रेतानि 'छागो वा मन्त्रवर्णा'दिति न्यायात्सामान्येनावगतं साम्यं भोगसाम्ये दृष्टे तादृशसाम्यविशेषे पर्यवस्यतीति भावः । परमात्मनियाम्यत्वादिश्रुत्यानुगुण्याच्चायमर्थ इति वदन्नधिकरणार्थमुपसंहरति ( अत इति )

## * भावप्रकाशिका *

सा वै देवी वाग्यया यद्यदेव वदति तत्तद्भवति दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येन आनन्द्येव भवति अथ न शोचति अद्भ्यश्चैनं चन्द्रमसो दैवः प्राण आविशति स वै दैवः प्राणो यस्सञ्चरंश्चासञ्चरंश्च न व्यथते न रिष्यति' इति प्राक्प्रस्तुतदैववाङ्मनःप्राणविज्ञानस्य फलमुच्यते । 'स एवंवित् सर्वेषामात्मा भवति यथैषा देवतैवं स यथैता देवतास्सर्वाणि भूतानि भवन्ति एवं हैवंविदं सर्वाणि भूतान्यवन्ति' इति, आत्मा भवति– आत्मवत्पूज्यो भवति, अवन्ति–पालयन्ति तर्पयन्ति, 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इति, तेन– यथोक्तज्ञानेन एतस्या देवतायाः सायुज्यं सलोकताञ्च प्राप्नोतीत्यर्थः । यद्यप्युदाहृतवाक्यानां न ब्रह्मविद्विषयत्वं तथापि तुल्यन्यायतया ब्रह्मविद्विषयेऽपि भोगसाम्ये लिङ्गतया पर्यवस्यतीति भावः ॥ ७ ॥

१. तै० आन० १–२ ॥

यदि परमपुरुषायत्तं मुक्तैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्तिसम्भवाशङ्केत्यत्राह—

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ २२ ॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणः सर्वज्ञः सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसम्भावनः परब्रह्माभिधानः—परमपुरुषोऽस्तीति शब्दादवगम्यते, एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च [1]"स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते"

* श्रुतप्रकाशिका *

अनन्तरसूत्रं शङ्कामुखेनावतारयति (यदीति) अपुनरावृत्तिश्रुतिः पाक्षिकविषया, ईश्वरस्वातन्त्र्यात्कस्यचिदनावृत्तिसम्भवादिति च पूर्वपक्ष्यभिप्रायः ।

अनावृत्तिः शब्दादनावृतिः शब्दात् ॥ २२ ॥ (यथेत्यादि) भगवता मुक्तस्यापरित्याज्यत्वोपपादनार्थं मुक्तस्य ब्रह्मानुभवजिहासानुदयज्ञापनार्थं प्रामाणिकत्वे दृष्टान्तसिद्ध्यर्थं च निखिलहेयप्रत्यनीकत्वादिगुणा उक्ताः, अन्येन निवृत्तिशङ्काव्यावृत्त्यर्थं 'निरस्तसमाभ्यधिकसम्भावनः' इति पदम्, 'स यदि

1. छा० ८-१५-१ ॥

इत्यादिकः । तथा च भगवता स्वयमेवोक्तम् [1]"मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति । न चोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षातदर्था-

* श्रुतप्रकाशिका *

पितृलोककामः' इत्याद्युक्तभगवत्परिचरणार्थविग्रहव्यावृत्त्यर्थं 'पुनर्जन्म दुःखालयमशाश्वत'मिति वचनमुपात्तम्, दुःखालयत्वादिविशेषणाभावेऽप्येतदैकार्थ्यं स्यादित्यभिप्रायेण 'पुनर्जन्म न विद्यते' इति वचनमुदाहृतम् । अनेनावृत्तिः कर्मकृता न भवति 'इमान्लोकानित्युक्तकामसञ्चारादिति च फलितं । पुनरावृत्तिहेतुत्वेन सम्भावितानि शिरांस्याशङ्क्य परिहरति (न चेत्यादिना) प्रमाणस्यानुग्राहकतर्ककृतार्थतां चार्थाद्दर्शयति, स्वेच्छा वा– कर्म वा–भगवत्सङ्कल्पो वा त्रयमेव पुनरावृत्तिहेतुतया सम्भावितं, तत्र स्वेच्छाकर्मभ्यामावृत्तिशङ्कां परिहरति (न चेति) (तदर्थारम्भाद्यसम्भवादिति) कर्म विद्यमानं चेत्सजातीयकर्मान्तरारम्भरुचिरूपां वासनामुपजनय्य तद्द्वारा कर्मान्तरं कारयति

* भावप्रकाशिका *

(एतदैकार्थ्यं स्यादित्यभिप्रायेणेति) 'पुनर्जन्म न विद्यते' इत्यत्र ब्रह्मणि दुःखालयत्वादिविशिष्टजन्मनिषेधे पर्यवस्यतीति भावः (अनेनावृत्तिरिति) जन्मसत्त्वेपि हेयास्पदजन्मनिषेध इत्यभ्युपगमन्यायेन पुनरावृत्तिसत्त्वेपि हेयास्पदावृत्तिर्नास्ति, अपि तु कामनिमित्त एव सञ्चार इति भावः, स्वेच्छा वा कर्म वा– इत्यस्यायम्भावः, मुक्तानां प्राक्तनपुण्यपापयोः विद्यामाहात्म्यान्नाशेपि मुक्तिकाले कृतभगवद्द्रोहादिपापवशेन नहुषादेः पदच्युतिवत् अस्यापि

1. गी० ८-१५-१६ ॥

रम्भाद्यसम्भवात् पुनरावृत्तिशङ्का । न च परम-पुरुषः सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति; य एवमाह- [1]"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति । सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयतीति सर्वं समञ्जसम् ॥

जगद्व्यापारवर्जाधिकरणं समाप्तम् ।



इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

चतुर्थस्याध्यायस्य चतुर्थः पादः ॥



* श्रुतप्रकाशिका *

कर्मणः सवासनस्य विनष्टत्वात् कर्मान्तरासम्भवात् न कर्म पुनरावृत्तिहेतुः, अनवधिकातिशयानन्दभगवदनुभवैकतानस्य नान्यापेक्षेति न स्वयं स्वस्य पुनरावृत्तिहेतुरित्यर्थः । भगवत्सङ्कल्पस्य पुनरावृत्तिहेतुत्वं परिहरति ( न चेति ) मुक्तान् पुनर्नावर्तयिष्यामीति सङ्कल्पो नान्यथा स्यादित्यभिप्रायेण सत्यसङ्कल्प इत्युक्तम्, ज्ञानिनोऽत्यर्थं प्रियत्वाच्च तथा सङ्कल्पः । अत्यर्थ-प्रियत्वे प्रमाणं दर्शयति ( य एवमाहेति ) एवं न चोच्छिन्नेत्यादिना अपुनरावृत्तिश्रुतेरनुग्राहकस्तर्क उक्तो भवति ।

१. गी० ७-१७, १८, १९, ॥

* श्रुतप्रकाशिका *

परे तु 'प्रत्यक्षोपदेशा'दित्यत्र 'आप्नोति स्वाराज्य'मित्युदाहृत्य सवितृमण्डलादिस्थानेषु भोगोक्तेर्न जगद्व्यापार इत्याहुः, स्वाराज्यशब्दस्य परमाकाशावस्थानेऽप्युपपत्तेस्तस्यानुपादानं, सर्वलोकक्रमणशङ्काबीजत्वादिमान् लोकानित्याद्युपादानमुचितं, तेन हि निरङ्कुशैश्वर्यं दर्शितं भवति, विकाररूपं विकारोत्तीर्णं च नित्यमुक्तं, परं ब्रह्म, द्विधा हि स्थितिमाह 'पादोऽस्य' इति 'न तत्र सूर्यो भाति' 'न तद्भासयते सूर्यः' इति प्रत्यक्षानुमाने च विकारावर्तित्वं दर्शयत इति व्याचक्षते, किमर्थं सूत्रद्वयमिति चेत्— विकारालम्बनानां निर्विकारपररूपप्राप्तिरनुपपन्ना अतत्क्रतुत्वादित्यभिप्राय इति चाहुः, इदमपि विकारालम्बना न प्राप्नुवन्तीत्यध्याहारसापेक्षत्वादनुपपन्नम्, अध्याहारेऽपि जगद्व्यापारवर्जनस्यानुपयोगि सूत्रद्वयं, परं नाप्नुवन्ति— सगुणेऽपि न निरवग्रहैश्वर्यमिति ज्ञापनार्थमिति चेत्— अतिदूराभिप्रायकल्पनमेव दोषः, 'तथा हि स्थितिमाह' इत्यत्रैव निर्विकारस्वरूपविषयश्रुतीनामपि विवक्षितत्वे पुनः प्रत्यक्षशब्देन परस्वरूपविषयश्रुत्युपादानवैयर्थ्यं च । ऐश्वर्यं चेदन्तवत् तस्मादावृत्तिरिति शङ्काव्युदासार्थम् 'अनावृत्तिः शब्दा'दिति सूत्रमिति, निर्गुणप्राप्तावावृत्तिशङ्काया अभावादित्याहुः, तदयुक्तम्, अकर्मकृतसहजैश्वर्ये ऐश्वर्यत्वादावृत्तिशङ्काया मन्दतरत्वात्, अतः पाराधीन्यकृताऽऽवृत्तिशङ्काव्युदासपरत्वमेव युक्तं सूत्रस्य, सगुणनिष्ठविषयत्वं चायुक्तं निर्गुणप्राप्तेरप्रामाणिकत्वात्

❁ भावप्रकाशिका ❁

पदच्युतिस्सम्भाव्यत इति ( सवितृमण्डलादिस्थानेषु भोगोक्तेरिति ) सवितृमण्डलादिगतपरमात्मोपासनायत्तैश्वर्यत्वात् इतरेषां न निरवग्रहं मुक्तानामैश्वर्यमित्यर्थः ( किमर्थं सूत्रद्वयमिति चेदिति ) सूत्रद्वयस्य कोऽभिप्राय इति चेदित्यर्थः, ( निर्विकारप्राप्तिरुपपन्नेति ) अयमर्थः— यथा सगुणब्रह्मोपासकानां सगुणे ब्रह्मणि वस्तुगत्या सदपि विकारावर्तित्वरूपं न प्राप्यम्, अतत्क्रतुत्वात्, एवं सगुणे ब्रह्मणि स्थितमपि निरवग्रहैश्वर्यं सगुणोपासकानां न प्राप्यम्, अतत्क्रतुत्वात्, सत्यकामत्वादिलक्षणैश्वर्यस्योपास्यत्वेपि निरवग्रहैश्वर्यविशिष्टं उपासीतेति श्रुत्यभावेन निरवग्रहत्वांशस्यानुपास्यतया तत्प्राप्त्यभावात् न निरवग्रहैश्वर्यं सगुणोपासकस्येति, ( निर्गुणप्राप्तावावृत्तिशङ्काया अभावादिति )

* श्रुतप्रकाशिका *

विशेषणवैयर्थ्यम्, निर्गुणप्राप्त्यभावादेवात्रावृत्तिशङ्काऽनुदयश्चानुपपन्नः ।– अपरे तु वेदान्त एव मुक्तस्य भेदेनावस्थानं मन्यमानानां मतमभ्युपगम्य तत्र सावधिकमैश्वर्यमिति प्रतिपादनार्थमिदमधिकरणमित्याहुः, तत्र परेषामिव सूत्रयोजना, अस्मिन् पक्षे विकारप्रलये तदाश्रितैश्वर्यप्रलयादावृत्तिः स्यादेव, अविभागपक्ष एवानावृत्तिरित्याह 'अनावृत्तिः शब्दा'दितीत्याहुः । तत्तावदयुक्तम् अप्रामाणिकपक्षस्य निरसनमेव हि कर्तव्यं, न तु तदभ्युपगमेन निर्वाहः, सावधिकैश्वर्यप्रतिपादनमेव तन्निरसनमिति चेन्न, प्रतीकालम्बनोपासनानां सावधिकैश्वर्ये कथितेऽपि तेषां निरस्तत्वाभावात्, अप्रामाणिकत्वसमर्थनं हि निरसनम् सावधिकैश्वर्यं प्रामाणिकं चेत्– कथं तस्य निरासः, अनावृत्तिसूत्रमविभागपक्ष एवेत्यशाब्दम् अविभागशब्दस्याप्रकृतत्वात्, अर्थस्वभावादविभागपक्षविषयत्वमिति चेन्न, अक्षरपरमव्योमगतानां मुक्तानामैश्वर्यप्रच्युत्यसम्भवादेवार्थस्वभावासिद्धेः, विकारलोकाश्रितमैश्वर्यं प्रध्वस्तमिति चेत् ततः किम्, ईश्वरस्येव तदानीमप्रच्युतगुणाष्टकत्वादपरिच्छिन्नानन्दत्वोपपत्तेः, न हि जगत्प्रलयादीश्वरस्यैश्वर्यभङ्गः, तथा तदवस्थतदनुभवरूपमैश्वर्यं मुक्तानामपि न भ्रश्येत, अतस्सूत्रासङ्गतिः । ननु विभागपक्षे सावधिकैश्वर्यप्रसङ्गो विवक्षितः, न तु तत्पक्षनिर्वाह इति चेन्न, जगद्व्यापारवर्जत्वप्रसङ्ग इति सूत्रितत्वाभावात्, यथा 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गः' 'कृत्स्नप्रसक्ति'रिति च, तस्मात्सूत्रस्वारस्यविरोधः, 'विकारावर्ती'त्यादिसूत्रद्वयवैयर्थ्यातिदूरलक्षणादोषः पूर्ववत्, अविभागपक्षे वा कथं 'जक्षत् क्रीडन् रममाणः' 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्याद्यैश्वर्यमुपपद्यते, किमीश्वरव्यापारा एव तदभिन्नस्य मुक्तस्य क्रीडात्वेनोच्यन्ते ? उत व्यापारान्तराणि, प्रथमे बद्धस्यापि तदभिन्नत्वादीश्वरव्यापारा एव क्रीडाः किन्न स्युः, उपाधितो भिन्नत्वादिति चेत्, तर्हि ईश्वरस्यापि ते व्यापारा लीला न स्युस्तस्यापि सवितृमण्डलाद्युपाधिभिर्भिन्नत्वात्, भिन्नत्वेऽपि सर्वज्ञः स्वलीलात्वेन सर्वत्र प्रत्यभिसन्धत्त इति चेत्तर्हि बद्धव्यापारेष्वपि प्रत्यभिसन्धानात् दुःखित्वेन लीलात्वं तद्व्यापाराणां न स्यात्, एवं मुक्तानामपीश्वरादभिन्नत्वात् प्रत्यभिसन्धानाच्च दुःखितत्वमिति

1. विभागपक्ष एवावृत्तिः । यदीश्वरव्यापारात् व्यापारान्तराणि मुक्तानां

यतीति निरवद्यम् ॥ १२ ॥

स्मर्यते च ॥ १३ ॥

स्मर्यते च विदुषोऽपि मूर्द्धन्यनाड्योत्क्रान्तिः ।
१"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥

आसृत्युपक्रमाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

नुक्रान्तिवचनमित्यत्राह ( अविदुषस्त्विति ) ॥ १२ ॥

स्मर्यते च ॥ १३ ॥ ऊर्ध्वमेक इत्यादिवचनं याज्ञवल्क्यस्मृतौ, [illegible]यते तेषां नाडीविशेषाणाम् ।

परे तु 'समाना च' इत्यादिसूत्रमेकं पृथग[illegible] । देवा[illegible] [illegible]ुः .धिकरणं वर्णयन्ति, निर्गुणब्रह्मविद इव सगुणोपासकस्याप्यमृतत्[illegible] न गुणविशिष्ट[illegible] [illegible]श्यविशिष्टोत्क्रान्ति[illegible]कुसर्वप्राप्तिश्रवणेन पुनर्भवाभावात् पुनर्भवहेतुभूतभूत[illegible]अभा[illegible]नः सगुणनिष्ठस्यापि न सम्भवति विद्याप्रकरणेषूत्क्रान्तिकथनं स्वापादिवत्सर्वप्राणिसाधारणोत्क्रान्त्यनुवादस्तेजस्सम्पत्तिस्थानभूतपरदेवतातादात्म्यप्रतिपादनार्थमिति पूर्वपक्षं कृत्वा–अविदुषः सगुणविदुषश्च समानोत्क्रान्तिर्नाडीप्रवेशात् पूर्वमिति सिद्धान्तयन्ति, निर्गुणविद्याया अप्रामाणिकत्वादेव तदयुक्तं, 'तदापीतेः' इत्यादिकमधिकरणान्तरमाहुः,

❀ भावप्रकाशिका ❀

क्त्वा विहितस्य फलमुच्यते, 'अपपुनर्मृत्युञ्जयति' इति भावः ( परे त्वित्यादि ) ( सगुणविदुषश्चेति ) सगुणब्रह्मोपासकस्येत्यर्थः, द्वितीयेति योगविभागात्समासः, 'असामवेदविदुषः'– 'विशेषविदुषश्शास्त्रम्' इत्यादिरामायणमाघकाव्यप्रयोगदर्शनात् , तेन विद्वच्छब्दस्य शत्रन्ततया 'न लोकाव्यये'ति कृद्योगषष्ठ्या निषेधात शेषलक्षणषष्ठ्याश्च पूरणगुणेति सता योगे षष्ठी न समस्यत

---

१. याज्ञवल्क्य० अध्यात्मप्र० १६७-श्लो० ॥

* श्रुतप्रकाशिका *

'तेजः परस्यां देवतायाम्' इति साध्यक्षस्य सप्राणस्य सकरणग्रामस्य तेजस आत्यन्तिकप्रलय उच्यते, ब्रह्मणः सर्वप्रकृतित्वात् तत्र लयोपपत्तेरिति पूर्वपक्षं कृत्वा—ज्योतिष्टोमादिविधानविद्याशास्त्रवैयर्थ्यादिभिः सुषुप्तिप्रलयवन्नात्यन्तिक इति सिद्धान्तयन्ति, तदप्ययुक्तं कृतकरत्वात्, 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इत्यत्र सुषुप्तौ सुनिरूपितो ह्ययमर्थः। न च शङ्कान्तरमस्ति, अत ऐकाधिकरण्यमेव युक्तम्, इत्थञ्च तेषां सूत्रयोजना, तच्च तेजो भूतान्तरसंसृष्टं सूक्ष्मं, नाडीनिष्क्रमणश्रुतिरूपप्रमाणात्सौक्ष्म्यमुपलभ्यते, अत एव पार्श्वस्थैरनुपलम्भो मूर्तान्तराप्रतिघातश्चेति, अत एव सूक्ष्मत्वात् स्थूलदेहोपमर्देन नोपमृद्यत इति, इदमधिकरणमविदुष आत्यन्तिकलयाभावसमर्थनार्थं चेत् सूक्ष्ममित्यादि सूत्रत्रयमनपेक्षितं, सूक्ष्मदेहसमर्थनस्यानुपयोगात्, भूतसूक्ष्मसंसर्गस्य पञ्चाग्निविद्यायां निरूपितत्वाच्च। नन्वविदुष आत्यन्तिकलयाभावे तस्य सूक्ष्मदेहवतो निःसरत उपलम्भादिप्रसङ्गः परिहर्तव्य इति चेत्—न, वेतालादिस्थूलशरीरस्याप्यदृश्यत्वे स्थिते कथं दृश्यत्वशङ्का भवेत्, यद्यपि कस्यचित्सा स्यात्, अतिमन्दतया न परिहर्तव्या, यद्यपि परिहर्तव्या, तदन्तरप्रतिपत्ताविवात्रैव परिहर्तव्या, कृतकरत्वस्योक्तत्वादेव सर्वमिदमसङ्गतं 'प्रतिषेधादिति चेन्न शारीरा' दिति पूर्वपक्षसूत्रं कृत्वा—'स्पष्टो ह्येकेषा' मिति सिद्धान्तसूत्रं योजयन्ति, तत्तावदक्षरानुगुणं, हिशब्देन पूर्वोक्तोपपादकत्वप्रतीतेः, 'स्पष्टो ह्येकेषा' मिति

* भावप्रकाशिका *

इति षष्ठीसमासनिषेधात्, सगुणं विद्वानिति द्वितीयापक्षे समासप्राप्त्यभावात्, नैवं निर्देशो युक्त इति चोद्यं निरस्तं, सुप्सुपेति वा समासात् साधुरिति केचित्, गत्यादिपाठदर्शनात् 'द्वितीयासमास' इति माघव्याख्याने मल्लिनाथेनोक्तं, तदपि ग्राह्यमेव (इयं च तेषां सूत्रयोजनेति) 'सूक्ष्मं प्रमाणतः'—इति सूत्रयोजनेत्यर्थः, तदापीतेरिति पूर्वसूत्रयोजनायान्तु योजनांशे अत्यन्तदूष्याभावात् तदकथनं न दोषः (नाडीनिष्क्रमणश्रुतिरूपप्रमाणादिति) यद्यपि परभाष्ये प्रमाणत इत्यस्य परिमाणत इत्यर्थः प्रतीयते, एवं हि तद्व्याख्यानं, तल्लिङ्गशरीरं स्वरूपतः परिमाणतश्च सूक्ष्मं, स्वरूपतः

* श्रुतप्रकाशिका *

आर्तभागप्रश्नप्रतिवचनवाक्यमुदाहरन्ति, अत्र प्राणानुत्क्रान्तेरमृतत्वाभावशङ्कां शमयितुं 'अत्रैव समवलीयन्ते' इति प्राणविलय उक्तः । अस्मादिति न शारीरोऽवधिरुच्यते, स उच्छ्वयतीत्युच्छ्वयनादिधर्मोक्तेस्तदैकार्थ्यात् 'न तस्मात्प्राणा उत्क्रामन्ती' त्यत्रापि शरीरादुत्क्रान्तिर्निषिध्यते, तस्मादित्यस्य प्रकृतपरामर्शित्वेऽप्यभेदोपचारादुच्छ्वयनादिमतो देहस्यैव निर्देशः, आर्तभागप्रश्नैकार्थ्यात्, अप्राप्तस्य निषेधायोगाच्च । न च शारीरादुत्क्रान्तेः प्राप्तिरस्ति, अतः सा न निषेध्या, वाक्यसामञ्जस्यं च न स्यात् कामयमानस्योत्क्रान्तिमुक्त्वा 'अथाकामयमानः' इत्यकामयमानं पृथङ्निर्दिश्य तस्याप्युत्क्रमणोपदेशे हि पृथग्व्यपदेशोपक्रमो भ्रान्तजल्पवत्स्यात्, 'न तस्य प्राणाः' इति षष्ठ्यवगतसंबन्धमात्रस्य करणत्वकरणित्वादिलक्षणविशेषपर्यवसानसिद्धेर्न तस्मात्प्राणा इति वाक्यान्तरावगतविशेषपर्यवसानाकाङ्क्षा च नास्ति, तत्र च तच्छब्दः शारीरपर इत्युक्तं, स्मर्यते चेति सूत्रेण 'सर्वभूतात्मभूतस्य सम्यग् भूतानि पश्यतः । देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः' इति निषेधस्मृतिरभिप्रेतेत्याहुः, शुकस्यादित्यमण्डलप्राप्तिर्विशिष्टदेशे देहत्यागाय न तु मुक्तेर्मार्गगमनापेक्षयेति चाहुः, अत्र ब्रूमः—निर्गुणविद्याया अभावात् निर्गुणप्राप्त्यभावाच्च सगुणनिष्ठ एव परविद्यानिष्ठः, सद्विद्यादिष्वप्यानन्दाद्यनुगमात्, 'अथ परा यया तदक्षरमधिगम्यते' इत्युपक्रम्य 'यः सर्वज्ञः सर्ववित्' इत्यामननात् परं ज्योतिरुपसंपन्नस्य लक्षणाद्यामननात्, 'सत्यं ज्ञान' मित्यत्र सर्वकामविशिष्टब्रह्मानुभवदर्शनाच्च परविद्यानिष्ठस्यैव सर्वे वेदान्ता गतिमामनन्ति—'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य, तयोर्ध्वमायन्नमृतत्वमेति, तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा, 'यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले' इति—, 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत सैषा विदृतिर्नाम' इत्युपक्रम्य 'स य एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामु-

* भावप्रकाशिका *

सौक्ष्म्यं नायनस्य महतस्तेजस इव, त्रसरेणोरिव च परिमाणतः सौक्ष्म्यम्, तत्र परिमाणतस्सौक्ष्म्यात् नाडीसञ्चारोपपत्तिः, स्वरूपतस्सौक्ष्म्यात् अप्रतिघातपार्श्वस्थानुपलम्भोपपत्तिरिति, तथापि प्रमाणपदस्वारस्यादियमपि योजना

* श्रुतप्रकाशिका *

स्मिन् स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्, अपुनर्भवाय कोशं भिनत्ति कोशं भित्त्वा शीर्षकपालं भिनत्ति शीर्षकपालं भित्त्वा पृथिवीं भिनत्ति' इत्यारभ्य 'आकाशं भित्त्वाऽव्यक्तं भिनत्ति, अक्षरं भिनत्ति मृत्युं भिनत्ति मृत्युर्वै परे देव एकीभवति' इति। यदुक्तमार्तभागप्रश्नैकार्थ्योच्छ्वय-नाम्नानवाक्यासामञ्जस्याप्राप्तनिषेधायोगविशेषपर्यवसाननैराकाङ्क्ष्यैर्नोत्क्रान्तिर्विदुष इति, तदयुक्तं, तथा हि आर्तभागप्रश्नस्य विद्वद्विषयत्वाभावात् तदैकार्थ्य-मनपेक्षितं, तत्र स सर्वप्राणिसाधारणः, तत्र चास्मात्प्राणाः क्रामन्त्युत नेति प्रश्नो न शरीरादुत्क्रान्तिविषयः किं तु शारीरात्, शरीरे प्राणस्थित्यभावेन तत उत्क्रान्तेरसंदिग्धत्वात्, अतः प्रतिवचनमपि शारीरादनुत्क्रान्तिविषयम्। अत्रैव जीवे समवलीयन्ते—संसृज्यन्ते, 'स उच्छ्वयती' त्यभेदोपचारादहमभि-मानविषयदेहनिर्देशः। यथा परपक्षे 'योऽकामो निष्काम आप्तकाम आत्मकामः न तस्मात् प्राणा उत्क्रामन्ति' इति तच्छब्दनिर्देशः, अतो विद्वत्प्रकरणस्य न तदैकार्थ्यापेक्षा, आर्तभागप्रश्नस्य विद्वद्विषयत्वेऽपि शारीरविषयत्वं दर्शितं, वाक्यासामञ्जस्यं तु नास्ति, कामयमानाकामयमानयोः समानायामप्युत्क्रान्तौ ब्रह्मप्राप्त्यभावतत्सद्भावरूपवैषम्यकृतत्वाद्वाक्यभेदस्य, सका-मनिष्कामविषयतया प्रकरणभेदः, नोत्क्रान्त्यनुत्क्रान्तिविषयतया, कामगय एवं पुरुषः' इत्युपक्रम्य 'इति तु कामयमान' इत्युपसंहृत्य 'अथाकामयमान' इति प्रस्तावात्, तयोश्च वैषम्यं ब्रह्मप्राप्तितदभावाभ्यां, नोत्क्रान्तितदभावाभ्यामिति वाक्यसामञ्जस्यसिद्धिः, अप्राप्तनिषेधोऽपि नास्ति—अर्थप्राप्तविषयत्वान्निषेधस्य, सर्वशाखाप्रत्ययन्यायेन सर्वासु विद्यासु देहपातसमये सुकृतदुष्कृतप्रहाणमुक्तं भवति, अतो भोक्तव्याभावेन लोकान्तरगमनाभावाद्विदुषो लोकान्तरगत्यौ-पयिकप्राणादिविश्लेषः शारीरस्यार्थवशात् प्राप्तः, अतः शारीरादुत्क्रान्तिरर्थ-प्राप्ता प्रतिषेध्या स्यादर्चिरादिगत्युपपत्त्यर्थं, षष्ठ्यवगतस्य सम्बन्धस्योपकरणोप-करणित्वादिलक्षणसम्बन्धविशेषपर्यवसाने सम्भवत्यपि उत्क्रमणस्यापादानापेक्षायां सन्निहितस्यैवापादानत्वकल्पनोपपत्तेर्विशेषसाकाङ्क्षस्य सम्बन्धमात्रस्याकाङ्क्षिता-

७ भावप्रकाशिका ७

प्रतीयत इति तथोक्तमिति द्रष्टव्यम्, मृतत्वाभावशङ्कां शमयितुमिति

* श्रुतप्रकाशिका *

पादानत्वविशेषपर्यवसानं न्याय्यं, न त्वनाकाङ्क्षिते करणत्वकरणित्वादिरूपे, अपादानस्याकाङ्क्षितत्वादेव छागपशुन्यायाद्वाक्यान्तरावगतापादानविशेषपर्यवसायित्वं च न्याय्यम्, यत उत्क्रान्तिनिषेधः श्रुतौ नास्ति, अत एव 'स्मर्यते च, इत्यत्राप्युत्क्रान्तिविषयस्मृतिवचनमेवोदाहर्तव्यम्, 'देवापि मार्गे मुह्यन्ति' इति वचनं त्वतद्विषयत्वादनुदाहार्यम्, तच्च न गतिनिषेधपरं किन्तु गतेर्दुरवगमत्वपरं, तथा च परपक्षानौपयिकत्वाच्च नोदाहार्यं, तस्य च गतिनिषेधपरत्वाभावो मोक्षधर्म एव गतिविधानादवगम्यते 'ते तीर्त्वा दुस्तरं जन्म विशन्ति विमलं नभः । ततस्तान् सुकृतीन्सर्वान्सूर्यो वहति रश्मिभिः ॥ पद्मतन्तुवदाविश्य प्रवहन् विषयान् नृप । तत्र तान् प्रवहन् वायुः प्रतिगृह्णाति भारत । वीतरागान् यतीन् सिद्धान् धिया युक्ताँस्तपोधनान् । सूक्ष्मः शीतः सुगन्धिश्च सुखस्पर्शश्च भारत । सप्तानां मरुतां श्रेष्ठो लोकान् गच्छति यः शुभान् । स तान् वहति कौन्तेय ! तमसः परमां गतिम् । तमो वहति लोकेश रजसः परमाङ्गतिं । रजो वहति राजेन्द्र ! सत्त्वस्य परमाङ्गतिम् । सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम् । प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना । परमात्मानमासाद्य तद्भूता यतमानसाः । अमृतत्वाय कल्पन्ते न निवर्तन्ति चाविभो । परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् । आत्मा केवलतां प्राप्तो यत्र गत्वा न शोचति । ईदृशं परमं स्थानं निरयास्ते च तादृशा' इति । यत्तु शुकोत्पतनं विशिष्टदेशे देहत्यागाय न तु मुक्तौ मार्गापेक्षयेति, तदप्ययुक्तं 'दृष्टो मार्गः प्रवृत्तोऽसि' इति गतिचिन्तायां मार्गस्य दृष्टत्वाभिधानात् 'भूतैः समतिवाह्यते' इत्यातिवाहिकैरतिवाहनस्योक्तत्वाच्च, स्थूलदेहेन आसूर्यमण्डलात् गमनं योगप्रभावज्ञापनार्थमित्युक्तं 'दर्शयित्वा प्रभावं स्व' मिति, 'सर्वभूतगतोऽभव' दिति च ज्ञानेन सर्वभूतव्याप्तिरुक्ता 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इत्यादि श्रुतेः—अन्ये तु अप्राप्तायाः शारीरादुत्क्रान्तेः कथं प्रतिषेध इत्येतदेवं परिहरन्ति नात्र

* भावप्रकाशिका *

पाठः, अर्चिरादिगत्युपपत्त्यर्थमिति च्छेदः । ( अतद्विषयत्वादनुदाहार्यमिति ) नच पद्यत इति पदं गन्तव्यं, न विद्यते पदं यस्य सोऽपद इत्येवं मुक्तस्य गन्तव्य-

## तानि परे तथा ह्याह ॥ १४ ॥

६ अधिकरणम्

सकरणग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मोत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु सम्पद्यत इत्युक्तम्; सैषा सम्पत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम्, तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्ति? उत परमात्मनि सम्पद्यन्त इति

* श्रुतप्रकाशिका *

शारीरादुत्क्रान्तिः प्रतिषिध्यते किं तु 'अत्र ब्रह्म समश्नुते' इति वक्तुमनुवादः, सञ्जातविद्यः पुरुषः प्रारब्धवशादनुत्क्रान्तप्राणो जीवदशायामेव ब्रह्मानुभवतीत्यर्थ इति तदविरुद्धम्, तथापि तदनादरे कारणमस्ति शारीरादनुत्क्रान्त्यनुवादेनात्र ब्रह्मापरोक्ष्याभिधानेऽपि गतिप्रतिषेधशङ्कापरिहारः सिध्येत्, तथाऽपि 'न शारीरात्स्पष्टो ह्येकेषा' मिति वदतः सूत्रकारस्य शारीरादुत्क्रान्तिर्भोक्तृत्वाभावप्रासा प्रतिषिध्यते–इत्येवाभिप्राय इति ॥ १३ ॥

आसृत्युपक्रमाधिकरणं समाप्तम् ।

तानि परे तथा ह्याह ॥ १४ ॥ अवान्तरसङ्गतिमाह (सकरणेति) (सैषेति) पूर्वं 'समाना चासृत्युपक्रमा' दिति नाडीप्रवेशात् पूर्वं मुमुक्षुसंसारिणोर्गतेः समानत्वमुक्तं, तत्र वक्ष्यमाणाधिकरणद्वयप्रतिपाद्यायां परमात्मसम्पत्तौ मुक्तस्यास्तित्वनास्तित्वविगानं नास्ति, यतः पूर्वाधिकरणप्रतिपादितार्थ एव विप्रतिपत्तिः, अतः 'तदोकोग्रज्वलन' मित्येतस्मात्पूर्वाधिकरणप्रतिपाद्येऽर्थे

* भावप्रकाशिका *

रहितत्वप्रतिपादनात् कथं तस्य नोदाहर्तव्यत्वमिति शंक्यम्, पदशब्दस्य इन्द्रादिस्थानवाचित्वात् ॥ ७ ॥

इति आसृत्युपक्रमाधिकरणम् ।

विशये—मध्ये परमात्मसम्पत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात्, तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्ति–

इति प्राप्त उच्यते–तानि परे—इति। तानि परस्मि-

* श्रुतप्रकाशिका *

विद्वदविदुषोः समानेऽपि 'तानि परे' इत्यधिकरणात् पूर्वत्रैव विद्वदविदुषोः समानत्वविप्रतिपत्तिरिति हृदि कृत्वा सूत्रकारैः समानत्वमुक्तमित्यभिप्रायेणात्र सैषा संपत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतमित्युक्तं भाष्ये, किं तेज-शशब्दनिर्दिष्टानि भूतानि जीवपरिष्वक्तानि यथाकर्म यथाविद्यं गच्छन्ति? उत परमात्मनि सम्पद्यन्ते, किमत्र परदेवताशब्दो गन्तव्यस्थानावस्थपरमात्मपरः? उतातदवस्थपरमात्मपर? इति, किमत्र सम्पत्तौ प्रयोजनं सम्भवति? नेति, असम्भवे परमात्मशब्दस्य गन्तव्यप्रदेशविशेषावस्थपरमात्मपरत्वेन यथाकर्मविद्यं गच्छेयुः, सम्भवेतु–अतदवस्थपरमात्मपरत्वेन तस्मिन्सम्पद्येरन् । पूर्वपक्षमाह (मध्य इति) 'तेजः परस्या' मिति श्रुतिः परस्यात्मनः सर्वदा सर्वाधारत्वमात्रपरेति पूर्वपक्षिणोऽभिप्रायः ।

७ भावप्रकाशिका ७

( यथाकर्म यथाविद्यमिति ) यथाकर्मेत्यत्र 'नश्च नपुंसकादन्यतरस्याम्', इति टजभावे रूपम् ॥ ७ ॥

ननु 'वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि' इति वाक्यत्रयार्थे क्रमेण 'नैकस्मिन्दर्शयतो हि' इत्यन्तसूत्रैर्विचारिते 'तेजः परस्या'मिति चतुर्थवाक्यार्थनिर्णायकयोः 'तानि परे तथा ह्याह' 'अविभागो वचनात्' इत्यधिकरणयोरारम्भो युक्तः, तदनन्तरञ्च 'समाना चासृत्युपक्रमा' दित्यधिकरणस्य वाक्यार्थचतुष्टयस्यापि विद्वदविद्वत्साधारण्यनिर्णायकस्यारम्भ उचितः, नतु मध्य इत्याशङ्क्य 'समाना चासृत्युपक्रमा'दिति विद्वदविद्वत्समानत्वनिर्णयस्य सूत्रकृता समानविषयत्वसंशयास्पदमात्र एव कर्तुं युक्ततया 'तेजः परस्यां देवताया'मिति वाक्यार्थस्य समानत्वसंशयानास्पदत्वात् तत्साधारण्येन कर्तुमयुक्तत्वमभिप्रेत्य चतुर्थवाक्यार्थनिर्णायकाधिकरणाभ्यां प्रागेव 'समाना चे'त्यधिकरणं

न्नात्मनि सम्पद्यन्ते ; कुतः ? तथा ह्याह श्रुतिः "तेजः परस्यां देवतायाम्" इति । यथाह श्रुति-स्तदनुगुणं कार्यं कल्प्यमित्यर्थः । सुषुप्तिप्रलययोर्यथा परमात्मसम्पत्त्या सुखदुःखोपभोगायासविश्रमः; तद्वदि-हापि ॥ १४ ॥

परसम्पत्त्यधिकरणं समाप्तम् ॥



अविभागो वचनात् ॥ १५ ॥

७ अधिकरणम् सेयं परमात्मनि सम्पत्तिः किं प्राकृ-तलयवत् कारणापत्तिरूपा ? उत 'वाङ्मनसि' इत्या-दिवदविभागरूपेति चिन्तायां— परमात्मनः सर्वेषां योनिभूतत्वात्कारणापत्तिरूपा—

---

* श्रुतप्रकाशिका *

राद्धान्ते (तथा ह्याह श्रुतिरिति ) 'वाङ्मनसि सम्पद्यते' इत्यादिनिर्देशो न सर्ववस्तुसाधारणधारकत्वाभिप्रायः, अतः सम्पत्तिरेवार्थ इति भावः ॥ १४ ॥

परसम्पत्त्यधिकरणं समाप्तम् ।



अविभागो वचनात् ॥ १५ ॥ सङ्गतिपूर्वपक्षावुच्येते ( सेयमित्यादिना ) किमियं सम्पत्तिर्लयरूपा ? उत विभागरूपा, किं तेजःपरस्यामिति वचनस्य कारणापत्तिपरत्वं न्याय्यम् ? उताविभागमात्रपरत्वमिति, प्रथमे लयरूपत्वं, द्वितीये त्वविभा-गरूपत्वम् ।

* भावप्रकाशिका *

निवेशितमिति परिहरति ( पूर्वं समाना चेत्यादि ) ॥ ६ ॥

इति परसम्पत्त्यधिकरणम् ।



इति प्राप्त उच्यते—अविभागः-इति । अपृथग्भावः—पृथग्व्यवहारानर्हसंसर्ग इत्यर्थः । कुतः? वचनात् 'तेजः परस्यां देवताया' मित्यत्रापि 'वाङ्मनसि सम्पद्यते' इत्यतः सम्पद्यत इति वचनस्यानुषङ्गात्, तस्य च संसर्गविशेषवाचित्वात्; अनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावादुत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावात् । पुनस्तत्राव्यक्तादिसृष्ट्यवचनाच्च ॥ १५ ॥

अविभागाधिकरणं समाप्तम् ॥

---

* श्रुतप्रकाशिका *

(अविभाग इतीति) अनुषक्तमपि पदमत्र कारणापत्तिवाचीत्यत्राह (अनुषक्तस्येति) (उत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावादिति) भारवाहकस्य देहिनः सभारस्यैव यष्ट्यवष्टम्भेन विश्रमतुल्यः सुषुप्तौ विश्रमः, अपनीतभारस्य विश्रमतुल्यो महाप्रलये, यथा च कञ्चुकोष्णीषवतस्तद्रहितस्य च विश्रमस्तद्वत् कारणे लीनस्य करणकलेबररहितस्य द्विपरार्द्धकाले विश्रम इति प्रयोजनविभागः सुषुप्तिप्रलययोः शरीरान्वयव्यतिरेकाभ्यामवगतः, तदभावादित्यर्थः । अव्यक्तादेः पुनः सृष्टिरुक्ता चेत्, कारणापत्तिः प्रयोजनं च कल्प्यं, सा च नास्तीत्याह (पुनस्तत्राव्यक्तादिसृष्ट्यवचनाच्चेति) सुषुप्तौ जीवमात्रस्याविभागापत्तिः प्रलय एव विशिष्टस्य लयापत्तिः, उत्क्रान्तौ तु भूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या संयोगमात्रमेव, विशेष्यांशस्य प्रलय इति चेत्, तज-

* भावप्रकाशिका *

उक्तमेवार्थं दृष्टान्तान्तरप्रदर्शनेन विवृणोति (यथा च कञ्चुकोष्णीषवत इत्यादिना) (तद्रहितस्य च विश्रम इति) तद्राहित्यदशायां विश्रम इत्यर्थः (सुषुप्तौ जीवमात्रस्येति) ननु प्रलयोत्क्रान्त्योरिव स्थूलसूक्ष्मविशिष्टस्य जीवस्येति भावः । शङ्कते (विशेष्यांशस्येति) सुषुप्तिवदिति भावः । 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति प्राणशब्दोदितानीन्द्रियाणि दश, मन एकं, सूक्ष्माणि

* श्रुतप्रकाशिका *

शब्दस्य विशेष्यभूतजीवमात्रवाचित्वाभावात् अनुषक्तपदार्थवैरूप्यायोगादिभिश्च, एवं विभागानर्हभूतसूक्ष्मविशिष्टस्य लयानुपपत्त्या प्रयोजनाभावाव्यक्तादिसृष्टय-वचनाभ्यां च सम्पत्तिः संयोगः, नित्यान्तरवस्थितेऽपि परमात्मनि तदानीं संसर्गविशेषः शास्त्रैकसमधिगम्यः।

परे त्विदमधिकरणद्वयं परविद्यानिष्ठविषयं व्याचक्षते, तत्र 'गताः कलाः पञ्चदश प्रतिष्ठाः' इति प्रतिष्ठाशब्दवाच्यस्वकारणेषु कलानां लयं पूर्वपक्षीकृत्य 'षोडशकलाः पुरुषं प्राप्यास्तं गच्छन्ति' इति श्रुत्या ब्रह्मणि लयः, इयं विद्वद्दृष्टिः, स्वकारणेषु लयोक्तिस्त्वविद्वद्दृष्ट्या स्यात्, स्वकारणेषु लयेऽपि तैः पृथिव्यादिभिः सह ब्रह्मणि लयश्चोपपन्नः इति सिद्धान्तयन्ति प्रथमे, स च ब्रह्मविदः परमात्मनि कलाप्रलयः सावशेषः— उत्क्रान्त्यादावित्रिवेति पूर्वपक्षं कृत्वा 'भिद्येते चासां नामरूपे पुरुषे' इति वचनादविद्या-कल्पितानां विद्यानिमित्तप्रलये सावशेषत्वानुपपत्तेश्च निरवशेषः प्रलय इति द्वितीये सिद्धान्तयन्ति, तत्राद्ये ब्रह्मण्येव लयसमर्थनं प्रत्यक्ष-

* भावप्रकाशिका *

भूतानि पञ्चेति षोडशकलास्सन्ति, तत्र घ्राणस्य पृथिवीविकारत्वान्मनसोपि 'अन्नमयं सोम्य मन' इति पृथिवीविकारत्वात् द्वयोरप्येकीकरणेन पञ्चदश-त्वोक्तिरप्युपपद्यते, प्रतिष्ठाः स्वस्वोपादानानि इति अवयवेषु वा अज्ञाने वा लयो-क्तिवदसङ्गतेयमुक्तिः, किञ्च परैरेवमनुक्तश्च, अतो नायम्पाठ इति चोदयन्ति, तान्प्रतिवदामः, अन्तःकरणादिना जीवाविद्यामात्रकार्यत्वपक्षे तत्त्वज्ञानेन जीवा-विद्याया उन्मूलिततया स्वकारणेषु लयासम्भवेपि ईश्वराश्रितमायापरिणाम-महाभूतोपसृष्टजीवाविद्याकार्यत्वपक्षे तत्त्वज्ञानेन जीवांशस्य नाशेपि उपष्टम्भी-भूतमहाभूतांशस्य सत्त्वेन तत्रान्तःकरणादिकलैकदेशस्य लयसम्भवात्, तन्तु-द्वयारब्धपटस्य एकतन्तुनाशे तन्त्वन्तरे लयदृष्टेः परग्रन्थेषु तथा समर्थित-त्वाच न यथानुवादः, नच उत्तराधिकरणे कलाप्रलयस्य निरवशेषत्वसमर्थ-नात् तद्विरोधः स्यादिति वाच्यम्, जीवाविद्याकार्यांश एव निरवशेषलय-प्रतिपादनपरत्वेन विरोधाभावात्, ( प्रथम इति ) अधिकरणे इतिशेषः ( भिद्येते चासां नामरूपे इति ) आसां कलानां नामरूपे शक्त्यात्मके अपि

* श्रुतप्रकाशिका *

विरुद्धं श्रुतिविरुद्धं च, यस्माद्यवस्थो हि देहः पृथिव्यादिषु लीयमानो दृष्टः, 'पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्त' इति च श्रुतिः, नायमविद्वद्दृष्ट्या लय उच्यते, 'इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते' इत्यादिनोक्तस्य सेन्द्रियाणां तन्मात्रादीनां भूतादिप्रभृतिषु लयस्याविद्वद्दृष्ट्याऽप्यनवगतत्वात्, सांख्यदृष्टिरियमिति चेत्—ततः किं, यतः श्रुत्यविरोधः, तत्र सांख्यदृष्टेः श्रुतिमूलत्वान्न निराकरणीयता, 'तद्धैक आहुः—कुतस्तु खलु सोम्यैवं स्यात्' इतिवत् परमतत्वेनोपन्यस्य श्रुत्यैव निराकृतत्वाभावाच्च नोपेक्ष्यता, पराशराद्युपबृंहणानुगृहीता चेयं श्रुतिः, सर्वस्य तज्जत्वश्रुतिविरोधात् परमतत्वमिति चेन्न, सर्वस्य तज्जत्वश्रुतिविरोधेन आकाशाद्वायुरित्याद्युक्तसर्गस्यापि परमतत्वप्रसङ्गात्, तत्तदवस्थब्रह्मणः कारणत्वादविरोधश्चेत् लयेऽपि तुल्यम्, अत एव 'पुरुषं प्राप्यास्तं गच्छन्ति' इति चोपपन्नम्, एवमद्वारकलयस्य श्रुतिप्रत्यक्षविरोधात् सद्वारकलयस्य सर्वसाधारणतया श्रुतिप्रत्यक्षसिद्धतया ब्रह्मविदो विशेषाभावाच्चाद्याधिकरणवर्णनमयुक्तम्, इतरत्र च; निरवशेषलयो नाम किं निरवयवविनाशः ? उत पृथिवीत्वादिप्रहाणम् ? उत मुक्तस्य पुनर्देहारम्भायोग्यत्वम् ? उत चेतनान्तरयुक्तस्यापि देहारम्भायोग्यत्वम्, न प्रथमः 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत्' इति नित्यत्ववचनात् । नापि द्वितीयः— ब्रह्मविद्देहस्यापि भस्मीभावादिदशायां पृथिवीत्वानुवृत्तिदर्शनात् पृथिवीत्वादिप्रहाणस्य समष्टितत्त्वलयदशाभावित्वात्, तस्य च प्राकृतप्रलयभावित्वात्, नैमित्तिकादिप्रलयेषु पृथिवीत्वादिप्रहाणस्य प्रमाणाभावात् 'भिद्येते चासां नामरूपे' इति श्रुतेर्देवमनुष्यादिनामरूपविषयतया वा प्राकृतप्रलयविषयतया वार्थवत्त्वाच्च ।

* भावप्रकाशिका *

भिद्येते— विदीर्येते इत्यर्थः (अविद्वद्दृष्ट्याप्यनवगतत्वादिति) तेषामदृश्यत्वेन श्रुत्येकसमधिगम्यस्याऽर्थस्य विदुषा उत्प्रेक्षितुमशक्यत्वादिति भावः (प्राकृतप्रलयविषयतया वार्थवत्त्वादिति) यद्यप्यात्मज्ञानेन कलाप्रलयं प्रति-

* श्रुतप्रकाशिका *

न तृतीयः— मुक्तस्यापुनरावृत्तेर्वक्ष्यमाणतया तं प्रति देहारम्भकत्वशङ्काया असम्भवेनाविचार्यत्वात् । न चतुर्थः— नियामकाभावात्, न हि देवदत्तस्यांगुलीयतया परिणतः कनकांशो यज्ञदत्तं प्रति न तथा परिणमतीति नियन्तुं शक्यम्, अतोऽनुपपन्नम् ।—अपरे तु 'तानि परे' इति सूत्रं न पृथगधिकरणयन्ति, तैश्च सूत्रार्थः परैरिव वर्णितः, तत्रानुपपत्तिश्च पूर्ववत्, अविभागसूत्रनिर्वाहोऽपि पूर्वोक्तयैव दिशा निरस्तः ।— अन्ये तु वागादिलयस्यामुख्यत्वादस्वयोनौ लयसम्भवेऽपीह लयस्य मुख्यत्वात्तेजःप्रभृतिभूतानां स्वयोनिष्विति पूर्वपक्षं कृत्वा तन्त्वादीनां भस्माद्यवस्थानामस्वयोनौ विनाशदर्शनानुगृहीतात्तेजः परस्यामिति वचनात् हृदिस्थे परमात्मनि लय इत्याद्ये सिद्धान्तयन्ति । अनन्तरे च स एव मरणे भूतलयः किं स्थूलभेदे स्थिते वस्त्वन्तरसंश्लेषमात्रम् ? उत जीवानामिव स्थूलभेदनिवृत्त्या सूक्ष्मशक्तिभेदयोगेनैव नीरक्षीरन्यायादविभागप्राप्तिलक्षण इति संशय्य पूर्ववाक्यत्रयानुषक्तस्य सम्पत्तिशब्दस्यात्रानुवृत्त्या संश्लेषमात्रमिति पूर्वपक्षं कृत्वा—मरणे 'भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति जीवविनाशदर्शनात्तद्वदविभागापत्तिरिति सिद्धान्तयन्ति, भूतानां कारणानां च महाप्रलये सूक्ष्मशक्तिभेदोऽपि नावशिष्यते, मरणे तु सोऽवशिष्यते, शरीरान्तरार्थं तेषां गमनोपपत्तेरिति चाहुः । तत्र तावद्धृदयस्थः परदेवताप्राज्ञात्मशब्दवाच्यः परमात्मा नामेश्वर एव, तत्र लयो मुख्य इत्यनुपपन्नम्, ईश्वरांशस्य निमित्तकारणत्वात्, अस्वयोनावपि लयो दृष्ट इति चेत्—न, भस्माद्यवस्थतन्त्वादीन्प्रति सा-

* भावप्रकाशिका *

प्राद्य हि 'भिद्येते चासां नामरूपे पुरुषे' इत्येवं प्रोच्यते 'स एषोऽकलोऽमृतो भवती'ति श्रुतस्य न सर्वसाधारणप्राकृतप्रलयपरत्वं सम्भवति, तथापि देवमनुष्यादिनामरूपविषयतयार्थवत्तया पूर्वदूषण एव तात्पर्यमिति द्रष्टव्यम् ( ईश्वरांशस्य निमित्तकारणत्वादिति ) तन्मत इति शेषः॥ * ॥

इति अविभागाधिकरणम् ।

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्या सामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दा-नुगृहीतः शताधिकया ॥ १६ ॥**

८ अधिकरणम्

एवं गत्युपक्रमावधि विद्वदविदुषोः समानाकार उत्क्रान्तिप्रकार उक्तः, इदानीं विदुषो

* श्रुतप्रकाशिका *

त्वादनुपादानत्वेऽपि प्राणाद्योपादानत्वात् पृथिव्यास्तत्र लय उपपन्नः, ईश्वरः प्राणाद्यपि न भूतकरणग्रामोपादानमिति न तत्र मुख्यलय-संभवः । सन्मात्रे लय इति चेन्न, तस्य परदेवताप्राज्ञात्मशब्दवाच्यत्वा-भावादंशत्रयव्यतिरेकेण सन्मात्रस्य कस्यचित् घटशरावाद्यवस्थमृद्द्रवस्था-नानभ्युपगमाच्च, तस्मिंल्लय इति सिद्धान्तः—तस्य च मुख्यत्वेऽभ्युपगते सत्यस्वयोनौ परमात्मनि लय इत्यप्यनुपपन्नम्, वचनन्तु वाङ्मनसी-तिवदन्यथासिद्धत्वादस्वयोनौ लये प्रमाणं न स्यात्, अनन्तरे चाधिकरणे स्थूलभेदनिवृत्त्या जीववदविभाग इति यत् तन्निरूपणीयम्, भूतकरणानां महा-प्रलयवद्विनाशस्तावदनभ्युपगतः लोकान्तरगमनश्रवणात् । सूक्ष्मशक्तिभेदविशेष-निवृत्तिर्नाम किं मनुष्यादिसन्निवेशप्रहाणम् ? उत पृथिवीत्वादिप्रहाणम्, न प्रथमः—संस्थानापगमस्य प्रत्यक्षतया निरूपणीयत्वाभावात्, न द्वितीयः लोकान्तरगमनानुपपत्तेः; यदि निवृत्तस्थूलाकाराणां परमात्मनि सम्पत्तिर्निरूप्या सा तु 'तानि परे' इत्यत्र निरूपितेति निरूपणीयाभावादविभागाधिकरणानारम्भ एव स्यात् ॥ १५ ॥

अविभागाधिकरणं समाप्तम् ।

---

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १६ ॥ अवान्तरसङ्गतिमाह (एवमिति) उत्क्रान्तौ ब्रह्मणि सम्पत्तेर्विद्वदविदुषोस्तुल्यत्वात् 'समाना चं' इत्यादिसूत्रगत

विशेष उच्यते। तत्रेदमाम्नायते- [1]"शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति। अनया नाडीनां शताधिकया मूर्द्धन्यनाड्या विदुषो गमनमन्याभिरेव चाविदुषो गमनमित्ययं नियम उपपद्यते, नेति संशयः। किं युक्तम्? नियमो नोपपद्यत इति। कुतः? नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात्। "तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमिति—

एवं प्राप्ते प्रचक्ष्महे-शताधिकया-इति। विद्वान् शताधिकया मूर्द्धन्ययैव नाड्योत्क्रामति। न चास्या विदुषो दुर्विवेचत्वं, विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्यात् विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति। ततश्च तदोकः-तस्य जीवस्य स्थानं हृदयम्, अग्रज्वलनं भवति,- अग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम्। परम-

* श्रुतप्रकाशिका *

वक्तव्यम्, तथा न कृतं, तत्र हेतुर्विदुषो ब्रह्मसम्पत्तावविवादः, (तत्रेत्यादि) किं विदुषो मूर्धन्यनाड्यैव गमननियमः सम्भवति? नेति, किं 'तयोर्ध्वमाय'न्निति यादृच्छिकगमनानुवादः? उत नाडीविशेषेण गमननियमविधिः? किं नाड्यो दुर्विवेचाः? उत सुविवेचाः, दुर्विवेचत्वे यादृच्छिकगत्यनुवाद-

1. कठ० २-६-१६॥

पुरुषप्रसादात्प्रकाशितद्वारो विद्वांस्तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते ॥ १६ ॥

तदोकोऽधिकरणं समाप्तम् ।



## रश्म्यनुसारी ॥ १७ ॥

९ अधिकरणम्

विदुषो हृदयाच्छताधिकया मूर्धन्यनाड्या निर्गतस्यादित्यरश्मीननुसृत्यादित्यमण्डलगतिः श्रूयते । १"अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति । तत्र रश्म्यनुसारेणैवेत्ययं गतिनियमः सम्भवति, नेति चिन्तायां–निशि मृतस्य विदुषो रश्म्यनुसारासम्भवादनियमः । वचनं तु पक्षप्राप्तविषयम्—

* श्रुतप्रकाशिका *

पक्षस्य न्याय्यत्वान्नियमासम्भवः, सुविवेचत्वे नियमविधिपरत्वोपपत्तेर्गतिनियमसम्भवः ।

परे तु अपरविद्याविषयमिमं विचारमाहुः, तत्पूर्ववदयुक्तम्, 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति' इतीदं वाक्यमत्रापेक्षितं पूर्वत्रोपात्तत्वान्नात्रोदाहृतम् ॥ १६ ॥

तदोकोऽधिकरणं समाप्तम् ।



रश्म्यनुसारी ॥ १७ ॥ अवान्तरसङ्गतिः स्फुटा, किं रश्म्यनुसारेण गमननियमो विदुषः सम्भवति, नेति, किं रश्मिभिरूर्ध्वमाक्रमत इति वाक्यं पाक्षिकगमनानुवादकम्? उत नियमविधिपरं? किं निशि प्रेतस्य रश्म्यनुसारेण गमनं सम्भवति, नेति, किं निशि रश्मयस्सम्भवन्ति, नेति, न

१. छा० ८-६-५ ॥

इति प्राप्ते उच्यते- रश्म्यनुसारी-इति। रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति। कुतः? "अथैतैरेव रश्मिभिः" इत्यवधारणात्; पाक्षिकत्वे ह्येवकारोऽनर्थकः स्यात्। यदुक्तं निशि मृतस्य रश्म्यसम्भवात् रश्मीननुसृत्य गमनं नोपपद्यत इति, तन्न, निश्यपि सूर्यरश्म्युनुसारः सम्भवति, लक्ष्यते हि निश्यपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः, हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः, श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः, "तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं च एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुञ्च अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इति। तस्मान्निश्यपि रश्मिसम्भवान्निशि मृतानामपि विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिरस्त्येव ॥ १७ ॥

रश्म्यनुसाराधिकरणं समाप्तम्।



* श्रुतप्रकाशिका *

चेन्निशि रश्म्यनुसारासम्भवाच्छ्रुतेः पाक्षिकगत्यनुवादकतया नियमसम्भवः, सन्ति चेत्, निशि रश्म्यनुसारसम्भवाच्छ्रुतेर्नियमविधिपरतया रश्मिभिरेव गतिनियमसम्भवः।

पूर्वपक्षमुक्त्वा राद्धान्तमाह (उच्यत इति) ऊष्मोपलम्भयोग्यरश्मिस-

निशि नेति चेन्न सम्बन्धस्य याव-
द्देहभावित्वाद्दर्शयति च ॥ १८ ॥

१० अधिकरणम्

इदमिदानीं चिन्त्यते— विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, नेति। यद्यपि निशायां सूर्यरश्मिसम्भवाद्रश्म्यनुसारेण गतिर्निशायामपि सम्भवति, तथाऽपि निशामरणस्य शास्त्रेषु गर्हितत्वात् परमपुरुषार्थलक्षणब्रह्मप्राप्तिर्निशामृतस्य न

* श्रुतप्रकाशिका *

द्भावे सत्यप्यन्धकारस्थितिरुपपद्यते रश्मीनामल्पत्वात्, यथोद्धृताग्नौ प्रदेशे सूक्ष्माग्न्यवयवसम्पर्कादौष्ण्योपलब्धावपि सूक्ष्माग्न्यवयवैर्न तिमिरं निरस्यते तद्वदिति। नाडीषु सृताः— सम्बद्धा इत्यर्थः ॥ १७ ॥

रश्म्यनुसाराधिकरणं समाप्तम् ।

निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १८ ॥ सङ्गतिः स्फुटा, किं निशि मृतस्य विदुषो ब्रह्मप्राप्तिः सम्भवति, नेति, किं निशामरणस्याधोगतिहेतुत्वं निशि मृतस्य ब्रह्मप्राप्त्यभावं ज्ञापयति, नेति, निशामरणनिन्दावचनं किं विद्वदविद्वत्साधारणम् उताविद्विषयमिति, साधारणत्वे निशि मरणस्याधोगतिहेतुत्वेन ब्रह्मप्राप्त्यभावावगमात् निशि

७ भावप्रकाशिका ७

( उद्धृताग्नौ प्रदेश इति ) उद्धृतोऽग्निर्यस्मात्प्रदेशादिति बहुव्रीहिः, भाष्ये— अमुष्मादादित्यादिति, प्रतायन्ते— सन्तता भवन्ति, आदित्यान्निसृता नाडीषु सम्बद्धाः नाडीभ्यो निसृताः सन्तानभूताः सत्यः आदित्ये सम्बद्धा इति वाक्यार्थः ॥ ७ ॥

इति रश्म्यनुसाराधिकरणम् ।

सम्भवति । शास्त्रेषु दिवामरणं प्रशस्तं, विपरीतं निशामरणं, "दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति । दिवामरणनिशामरणयोः प्रशस्तत्वविपरीतत्वे चोत्तमाधमगतिहेतुत्वेन स्याताम् । अतो निशि मरणमधोगतिहेतुत्वान्न ब्रह्मप्राप्तिहेतुरिति चेत्—तन्न विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वात् । एतदुक्तं भवति—अनारब्धकार्याणामधोगतिहेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशादुत्तरेषां चाश्लेषात्प्रारब्धकार्यस्य च चरमदेहावधित्वाद्बन्धहेत्वभावाद्विदुषो निशा मृतस्यापि ब्रह्मप्राप्तिः सिद्धैव । दर्शयति च श्रुतिः "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति । "दिवा च शुक्लपक्षश्च" इत्यादिवचनमविद्वद्विषयम् ॥ १८ ॥

निशाधिकरणं समाप्तम् ।



* श्रुतप्रकाशिका *

मृतस्य न ब्रह्मप्राप्तिः, अविद्वद्विषयत्वे निशामरणस्याधोगतिहेतुतया ब्रह्मप्राप्त्यभावानवगमान्निशि मृतस्यापि ब्रह्मप्राप्तिः स्यात् ।

पूर्वपक्षमुक्त्वा राद्धान्तमाह (तन्नेति) प्रारब्धकर्मणोऽनेकदेहहेतुत्वसम्भवात् कथं कर्मसम्बन्धस्य यावद्देहभावित्वं, प्रारब्धसमाप्तिरस्तु अभुक्तपूर्वाण्यपि कर्माणि सन्ति, कर्मणो यावद्देहभावित्वेन कथं निशामरणस्याधोगतिहेतुत्वं परिहृतं, तथा च सति निशामरणनिन्दावचनस्य का गतिरित्यत्राह (एतदुक्तं भवतीति) दिवानिशाविभागनिरपेक्षं प्रारब्धकर्मावसाने

* श्रुतप्रकाशिका *

मोक्षश्रवणात् 'तस्य तावदेव चिर' मिति वाक्यमुपात्तं, नन्वप्रशस्तकाले निशि मृतं शरीरं न चरमं स्यात्, चारम्ये सिद्धे हि ब्रह्मप्राप्तिसिद्धिः, नैवम् 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा' इत्यारभ्य 'तस्माद्ब्रह्मणो महिमानमाप्नोति' इति दक्षिणायनाद्यप्रशस्तकालमृतस्यापि ब्रह्मप्राप्तिश्रवणात् अप्रशस्तकालमरणेन हेतुना चरमदेहत्वं न बाध्यम्, अतो यथोक्त एवार्थ इति ।

इतरे त्रयोऽपीदं सूत्रद्वयमपि रश्म्यनुसारविषयमेकमधिकरणमाहुः, निशि रविरश्मयो न सन्तीति चेत्-न, नाडीरविरश्मिसम्बन्धस्य यावद्देहभावित्वात्, तथा 'अमुष्मादादित्यात्प्रतायन्ते' इति श्रुतिर्दर्शयतीति योजयन्ति, न यदि निशि रविरश्मयः स्युः, तर्हि निशि मृतस्य ब्रह्मप्राप्तिर्न स्यात्, तस्य रविरश्म्यनपेक्षत्वे दिवाऽपि तैर्विना गमनसंभवाद्रश्म्यनुसारशास्त्रवैयर्थ्यं, रात्रौ मृतस्य ब्रह्मप्राप्तिर्वा न स्यात्, माभूदिति न वाच्यं, विद्यायाः पाक्षिकफलतया तत्र प्रवृत्त्यनुपपत्तेः, यावदुदयं प्रतीक्षणकल्पनमप्ययुक्तं, 'स यावत् क्षिपेन्मनस्तावदादित्यं गच्छे' दिति शैघ्र्यावगमादित्युपपादयन्ति, निशि मृतस्य ब्रह्मप्राप्तिर्न स्यादिति प्रसङ्गो, निशामरणनिन्दावचनमवलम्बमानानां नानिष्टः स्यात्, विद्यायाः पाक्षिकफलत्वं च निशामरणस्य विद्यानिष्पत्त्यभावनिबन्धनत्वाश्रयणेन परिहृतं स्यात्, अतोऽपेक्षितं

* भावप्रकाशिका *

( तर्हि निशि मृतस्येति ) रश्म्यनुसारेणेति शेषः, इष्टापत्तिमाशङ्क्याह ( तस्य रविरश्म्यनपेक्षत्व इति ) निशि ब्रह्मगमनस्य रविरश्म्यनपेक्षत्वइत्यर्थः ( विद्यानिष्पत्त्यभावनिबन्धनत्वाश्रयणेनेति ). अयम्भावः— विद्याया निशि मृतविषये न सर्वदा फलाजनकत्वं पूर्वपक्षिणोऽभिमतं येन विद्यायाः पाक्षिकफलत्वं प्रसजेत् , किन्तु निशामरणनिन्दाबलात् निशि मृतस्य देहस्य चरमदेहत्वं नास्ति, अप्रारब्धकर्मभिर्वा प्रारब्धकर्मभिरेव वा शरीरान्तरव्यवधानेनेति हि पूर्वपक्ष्यभिप्रायः, अतो न पाक्षिकफलत्वप्रसङ्ग इति, नन्वेवं चरमत्वमेव नास्तीति पूर्वपक्षे सिद्धान्तभाष्ये प्रारब्धकार्यस्य कर्मणः चरमदेहावधित्वादिति देहस्य चारम्यं सिद्धवत्कृत्य परिहारो न सङ्गच्छे-

## अतश्चायनेऽपि दक्षिणे ॥ १९ ॥

११ अधिकरणम्

निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तः, तत एव हेतोर्दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिः सिद्धा । अधिकाशङ्का तु [1]"अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति" इति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणाच्चन्द्रमसं प्राप्तानां च [2]"तेषां यदा

---

* श्रुतप्रकाशिका *

निशि मृतस्य मोक्षसमर्थनमिति तदर्थमधिकरणभेदो न्याय्यः, नाडीरविरश्मिसम्बन्धनियमाभिधानमपेक्षितमिति चेत्, सत्यं, तस्य तु प्रतिज्ञायामपेक्षितत्वादाभिप्रायिकत्ववर्णनमुचितम्, अन्यथाऽपेक्षितार्थान्तरप्रतिज्ञाया उपपत्तेश्चानभिहितत्वप्रसङ्गात्, प्रतिज्ञाहेत्वोरुभयोरप्याभिप्रायिकत्वकल्पनादपि पूर्वप्रतिज्ञोपपत्तिमात्रस्याभिप्रायिकत्वकल्पनं न्याय्यमिति ॥१८॥

निशाधिकरणं समाप्तम् ।

अतश्चायनेऽपि दक्षिणे ॥ १९ ॥ अवान्तरसङ्गतिः स्फुटा, किं दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिः सम्भवति, नेति, किं 'अथ यो दक्षिणे' इति दक्षिणायनमृतस्य चन्द्रप्राप्तिवचनं ब्रह्मप्राप्त्यभावं गमयति, नेति,

ः भावप्रकाशिका ः

नेति चेत्—चरमदेहावधित्वादिति भाष्यस्याऽयमर्थः—फलभूतदेहावधित्वादस्य कर्मणः, इयन्ति शरीराणि फलभूतानीति नियमसत्त्वेन तावद्देहाधिकदेहनिष्पादनासामर्थ्यादिति, अयमेव यावद्देहभावित्वादिति सूत्रखण्डाभिप्रेतार्थ इति द्रष्टव्यम् । (तस्य तु प्रतिज्ञायामिति) रश्म्यनुसारीति प्रतिज्ञायामित्यर्थः । (अन्यथा अपेक्षितार्थान्तरप्रतिज्ञाया इति) निशि मृतस्य मुक्तिस्सम्भवतीत्यर्थान्तरप्रतिज्ञाया यावद्देहभावित्वादिति हेतोश्चेत्यर्थः ॥ ः ॥

इति निशाधिकरणम् ।

---

१. तै. ना. ५२-अनु ॥ २. छा. ५-१०-५ ॥

तत्पर्यवैत्यथैतमेवाध्वानं पुनर्निवर्तन्ते" इति पुनरावृत्तिश्रवणात्, भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरायणप्रतीक्षादर्शनात् दक्षिणायने मृतस्य ब्रह्मप्राप्तिः न सम्भवति—इति ।

परिहारस्तु—अविदुषां पितृयाणेन पथा चन्द्रमसं प्राप्तानामेव पुनरावृत्तिः, विदुषस्तु चन्द्रं प्राप्तस्यापि, "तस्माद्ब्रह्मणो महिमानमाप्नोति" इति वाक्यशेषात्तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिः ब्रह्म प्रपित्सतो विश्रामहेतुमात्रमिति गम्यते । वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्धहेत्वभावाद्विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या । भीष्मादीनां योगप्रभावात्स्वच्छन्दमरणानां धर्मप्रवर्तनायोत्तरायणप्राशस्त्यप्रदर्शनार्थ-

---

* श्रुतप्रकाशिका *

चन्द्रप्राप्तानामावृत्तिवचनं किं विद्वदविद्वत्साधारणम् ? उताविद्वद्विषयमिति, किं भीष्मादीनां कालप्रतीक्षाकालविधानस्मरणसहकृतसामान्यश्रुत्यनुरोधेन साधारणत्वसमाश्रयणं न्याय्यम् ? उत 'ब्रह्मणो महिमान' मिति वाक्यशेषानुरोधेनाविद्वद्विषयत्वसमाश्रयणं न्याय्यमिति, साधारण्याश्रयणे न्याय्ये सत्यावृत्तिवचनस्य साधारण्येन ब्रह्मप्राप्त्यभावावगमकतया न ब्रह्मप्राप्तिः, अविद्वद्विषयत्वाश्रयणे न्याय्ये सत्यावृत्तिवचनस्याविद्वद्विषयतया 'अथ यो दक्षिणे' इति वाक्यस्य ब्रह्मप्राप्त्यभावानवगमकत्वाद्दक्षिणायनमृतस्य विदुषोऽपि ब्रह्मप्राप्तिः स्यात् । (दक्षिणायनमृतस्येति) 'उदगयने प्रमीयते' 'दक्षिणे प्रमीयते' इत्यत्र धूमादिमार्गलिङ्गाभावात् ब्रह्मप्राप्तिवचनाच्चार्चिरादिगतस्यैव

* भावप्रकाशिका *

(धूमादिमार्गलिङ्गाभावादिति) दक्षिणायनमृतानां अनन्यथासिद्धधूमादिप्रापकप्रमाणाभावादित्यर्थः, भाष्ये—यदा तत्पर्यवैतीति, यदा—यस्मिन्काले, तत्

स्तथाविधाचारः ॥ १९ ॥

ननु च विदुषो मुमुर्षून्प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते [1]"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते । शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः" इति तत्राह—

योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ २० ॥

नात्र मुमुर्षून्प्रति मरणकालविशेषोपादानं स्मर्यते; अपि तु योगिनः—योगनिष्ठान्प्रति, स्मार्ते—

* श्रुतप्रकाशिका *

मरणकालविशेषेण मार्गे सम्मानविशेष उच्यत इत्यर्थः ॥ १९ ॥

उत्तरसूत्रशङ्कामाह ( नन्विति ) ।

योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ २० ॥ स्मार्ते—इति सौत्रं पदम् तद्व्याचष्टे ( स्मृतीति ) योगयुक्तो भव—मार्गानुसन्धानरूपयोगयुक्तो भवेत्यर्थः । अन्यथा सङ्गत्यभावप्रसङ्गात्, ( यत्र काले त्विति ) मध्ये उपसंहारे च मार्गविधानपरत्वदर्शनान्महावाक्यस्वारस्येनोपक्रमो बाध्यत

७ भावप्रकाशिका ७

सोमलोकप्रापकं पुण्यं, पर्यवैति परिक्षीयत इत्यर्थः पैर्ववर्णितः ॥ ७ ॥

ननु 'नैते सृती पार्थ ! जानन्' इति उपसंहारानुसारेण 'यत्र काले त्वनावृत्तिम्, इत्युपक्रमो बाध्यते— इत्येतावति वक्तव्ये मध्ये 'अग्निर्ज्योतिः'

1. गी. ८-२३, २४, २५, २६, २७॥

स्मृतिविषयभूते स्मर्तव्ये देवयानपितृयाणाख्ये गती स्मर्येते योगाङ्गतया अनुदिनं स्मर्तुम् । तथा उप-संहारः "नैते सृती पार्थ जानन्न योगी मुह्यति कश्चन । तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन" इति । "अग्निर्ज्योतिः" "धूमो रात्रिः" इति च देवयानपितृ-याणे प्रत्यभिज्ञायेते । उपक्रमे च 'यत्र काले'त्विति कालशब्दः कालाभिमानिदेवतातिवाहिकपरः,—अ-ग्न्यादेः कालत्वासम्भवात् । अतः "तेऽर्चिषमभिसम्भ-वन्ति" इति विहितदेवयानानुस्मृतिरत्र विद्यानिष्ठान्प्रति विधीयते, न मुमुर्षून्प्रति मरणकालविशेषः ॥ २० ॥

दक्षिणायनाधिकरणं समाप्तम् ।

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥



---

* श्रुतप्रकाशिका *

इत्यभिप्रायेण 'अग्निर्ज्योति' रित्यादिवचनमुक्तम्, योगिन इति सौत्रयोगि-शब्दश्चतुर्विधभगवदुपासकसाधारणः, भक्तियोगस्य तेषां साधारणत्वात्, तत्र मुमुक्षोर्देवयानानुसंधानम्, ऐश्वर्यार्थियोगिनः पितृयाणानुसन्धानमिति विधीयत इति, श्रुतौ गतिद्वयं विहितं; तदनुसन्धानमत्र विधीयत इत्यर्थः । ( न मुमूर्षून्प्रति मरणकालविशेष इति ) विधीयत इत्यन्वयः ।

* भावप्रकाशिका *

इत्यादिवचनं भाष्ये अयुक्तमित्याशङ्क्य उपक्रमस्य उपसंहारमात्रेण अन्यथा-नयनासम्भवात् महावाक्यस्वारस्येन बाध्यत्वं वक्तुं मध्यमवाक्यस्यापि उप-क्रमविरोधं दर्शयतीत्याह ( यत्र काले त्वितीति ) य उपक्रमः स बाध्यत इत्यभिप्रायेणेत्यन्वयः, ननु तत्प्रतीकग्रहणमिति मन्तव्यम् ( चतुर्विधेति ) 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' इत्युक्तचतुर्विधेति द्रष्टव्यम्,

* श्रुतप्रकाशिका *

अत्र परे चापरे च 'योगिनः प्रति' इति सूत्रमेवं व्याचक्षते, योगिनः प्रति स्मार्तोपासनार्थोऽयं स्मार्तः कालविनियोगः प्रत्यासन्नत्वात्, अतः श्रौतेषूपासनेषु नावतरति, यदि तत्रापि कालवाचिशब्दः कालाभिमानिदेवतापरः, तदा न श्रुतिविरोध इति, अग्न्यादिशब्दानां कालवाचित्वाभावेन 'नैते सृती' इति निगमनाच्च कालविधिपरत्वायोगात् विषयव्यवस्थया निर्वाहो भाष्येऽनादृतः।—अन्ये त्विदं सूत्रमेवं व्याचक्षते—योगिनः—प्राणायामेन वायुविजयपराः, योगिनः प्रति एतौ अयनरूपकालौ स्मर्येते, ते हि शक्नुवन्त्येव स्वच्छन्देन मर्तुममर्तुं चेति, तदयुक्तं, प्रशस्तकाले मर्तव्यमिति विधिश्चेदग्न्यादिकीर्तनस्य विकलत्वात् 'नैते सृती' इत्युक्तत्वाच्छ्रुतिसिद्धमार्गप्रत्यभिज्ञाभङ्गप्रसङ्गाच्च ॥

दक्षिणायनाधिकरणं समाप्तम्।

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां चतुर्थ-
स्याध्यायस्य द्वितीयः पादः ॥

---

* भावप्रकाशिका *

ततश्च 'यत्र काले त्वनावृत्तिमावृत्तिञ्चैव योगिनः' इत्यावृत्तिप्रतिपादकवचनमुपपद्यत इति भावः, यत्र काले त्वनावृत्तिमित्यस्य यैरातिवाहिकैर्नीयमानस्याऽऽवृत्तिरितिफलितोर्थः ॥ ७ ॥

इति दक्षिणायनाधिकरणम्।

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुज-
मुनिभिर्विरचितायां श्रुतप्रकाशिका-
व्याख्यायां भावप्रकाशिका-
यां चतुर्थस्याध्यायस्य
द्वितीयः पादः ॥

---

समाप्तश्चाध्यायः।

समुदिताधिकरणसङ्ख्या–१४१–समुदितसूत्रसङ्ख्या–५०७।



श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## चतुर्थेऽध्याये तृतीयः पादः ।

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥

(१ अधिकरणम्) विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद्गत्युपक्रम उक्तः । तस्य गच्छतो मार्ग इदानीं निर्णीयते । तत्र श्रुतिषु मार्गप्रकारा बहुधा आम्नायन्ते; छान्दोग्ये तावत् [१]"यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते [२]"अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसम्भ-

---

* श्रुतप्रकाशिका *

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ पादसङ्गतिमाह ( विदुष इति ) ब्रह्मविदो मार्ग इति दर्शयितुं 'यथा पुष्करपलाश आपो न श्लिष्यन्ते' इत्याद्युदाहृतं, शव्यं—शवयोग्यं संस्कारं, यत्—यदि । शवसंस्कारं यदि कुर्वन्ति

* भावप्रकाशिका *

( शव्यं शवयोग्यमिति ) साध्वर्थे यत्, तस्मै स तत्र परिजिहीत—इति स्वावयवान् विगमय्य छिद्रं करोति, यथा रथचक्रस्य छिद्रमित्यर्थः । नीरन्ध्र-

---

१. छा० ४-१४-३ ॥ २. छा० ४-१५-५, ६ ॥

वन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षा-द्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाव-र्तन्ते" इति । तथाऽत्रैवाष्टमे [1]"अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति । कौषीतकिनश्च देवयान-मार्गमन्यथाऽधीयते [2]"स एतं देवयानं पन्थानमाप-द्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इति । तथा बृहदारण्यके [3]"य एव-मेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिष-मभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमा-पूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासा-न्मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गम-यति" इति । तत्रैव पुनरन्यथा [4]"यदा वै पुरुषो-

* श्रुतप्रकाशिका *

यदि वा न कुर्वन्ति, अर्चिषमेव तेऽभिसम्भवन्ति—प्राप्नुवन्तीत्यर्थः । उदङ्-आदित्य इत्यध्याहार्यं, छान्दोग्ये अर्चिरादिका गतिः श्रूयते,

* भावप्रकाशिका *

तया मार्गमावृत्य स्थितो वायुः स्वावयवप्रहाणे रथचक्रप्रमाणं छिद्ररूपं मार्गं

१. छा० ८-६-५ ॥ २. कौ० १-अ० ३ ॥
३. बृ० ८-२-१५ ॥ ४. बृ० ७-१०-१ ॥

ऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते, यथा आडम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम्" इत्यादि। तत्र संशयः— किमर्चिरादिरेक एव मार्ग आभिः श्रुतिभिः प्रतिपाद्यत इति तेनैव ब्रह्म गच्छति विद्वान् ? उत तस्मादन्येऽन्यत्र मार्गा इति तैर्वाऽनेन वेत्यनियमः— इति। किं युक्तम्? अनियम इति। कुतः? अनेकरूपत्वान्नैरपेक्ष्याच्चेति॥

एवं प्राप्तेऽभिधीयते— अर्चिरादिनेति। अर्चिरादिरेक एव मार्गः सर्वत्र प्रतिपाद्यते, अतोऽर्चिरा-

---

* श्रुतप्रकाशिका *

कौषीतकीवाक्य अग्निलोकादिका, बृहदारण्यकेऽप्यर्चिरादिका, तत्रैव वाय्वादिका च, आडम्बरं—वाद्यविशेषः, (अन्यत्र) विद्यान्तरे। किं विद्वानर्चिरादिनैव मार्गेण गच्छति ? उत ततो मार्गान्तरेण वेत्यनियमः, किं सर्वविद्यास्वेको मार्ग आम्नायते ? उत नानामार्गा इति, किं क्रमान्तराम्नानात् नानामार्गसमाश्रयणं न्याय्यम् ? उतादित्यादिप्रत्यभिज्ञानेन मार्गैकत्वाश्रयणं न्याय्यमिति, नानामार्गाश्रयणस्य न्याय्यत्वे नानाविद्यासु नानामार्गाम्नानादनियमः, मार्गैकत्वाश्रयणे न्याय्ये सर्वविद्यासु मार्गैकत्वाम्नानादर्चिरादिनैवेति नियमः, अनेकरूपत्वादित्यनेन क्रमभेदः क्रमिभेदश्च विवक्षितः।

(एवं प्राप्त इति) क्रमक्रमिभेदात्कथं मार्गैक्यमित्यत्राह—

* भावप्रकाशिका *

ददातीत्यर्थः। अन्यत्रेति व्याख्येयं पदम्, (क्रमिभेदश्चेति) क्रमाश्रयपदार्थानां

दिनैव गच्छति। कुतः ? तत्प्रथितेः— तस्यैव सर्वत्र प्रथितेः। प्रथितिः— प्रसिद्धिः, तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः। प्रत्यभिज्ञानात्स एव मार्गः सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवदन्यत्र उक्तानामन्यत्रोपसंहारः क्रियते। छान्दोग्ये तावदुपकोसलविद्यायां पञ्चाग्निविद्यायां चैकरूप एवाम्नायते; वाजसनेयके च पञ्चाग्निविद्यायां तथैवार्चिरादिरल्पान्तर आम्नायते, अतस्तत्रापि स एवेति प्रतीयते। अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥ १ ॥

अर्चिराद्यधिकरणं समाप्तम्।



* श्रुतप्रकाशिका *

( सर्वत्रेति ) प्रत्यभिज्ञानं दर्शयति ( छान्दोग्ये तावदिति ) ( अल्पान्तर इति ) संवत्सरशब्दस्थाने देवलोकशब्द इति भावः। ( सर्वत्र ) बहुषु प्रदेशेष्वित्यर्थः। परविद्यासु ब्रह्मप्रत्यभिज्ञानेऽपि गुणानन्त्यादुपसंहारो न शक्यत इति विद्यैक्यासम्भवः, मार्गान्वयिनां पदार्थानां द्वादशसंख्याऽन्तर्भूतत्वात् चिन्तायोग्यतयाऽग्न्यादिप्रत्यभिज्ञानुगुण्येन मार्गैक्यमिति भिदा।

अत्र परे तु भिन्नविद्याशेषत्वाच्च भिन्नत्वम्। 'अथैतैरेव रश्मिभिः' इत्यवधारणात् 'यावत् क्षिपेन्मनस्तावदादित्यङ्गच्छेत' इति शैघ्र्यवचनाच्चेति पूर्वपक्षयुक्तीराहुः। भिन्नविद्याशेषत्वेऽपि सुकृतदुष्कृतप्रहाणे भिन्नत्वादर्शनान्मन्दतया तदुपेक्षा। रश्मिभिरेवेत्ययोगव्यवच्छेदे एवकारमात्रस्य

* भावप्रकाशिका *

देवलोकवायुलोकादीनां प्रतिशाखम् भेदेनाऽऽम्नानादिति भावः ( गुणानन्त्यादुपसंहारो न शक्यत इतीति ) इदमुपलक्षणम्, भेदकाकारस्यापि

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

२ अधिकरणम्

अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम्, तत्रार्चिरादिके मार्गे छन्दोगा मासादित्ययोरन्तराले संवत्सरमधीयते [1]"मासेभ्यः संवत्सरं संवत्सरादादित्यम्" इति । वाजसनेयिनस्तु तयो-

* श्रुतप्रकाशिका *

प्रमाणसिद्धबाधकत्वायोगात् अर्चिरादीनां देवतात्वेन मार्गदैर्घ्यहेतुत्वाभावेन शैघ्र्याविरोध इति तदनास्था ।—अन्ये तु ये चत्वारः पथयो देवयाना इति मन्त्रवर्णाद्बहुत्वावगमाच्च पूर्वपक्षमाहुः । अर्चिरादिका, वाय्वादिका, सूर्यद्वारेणेति सूर्यादिका रश्मिमती, देवलोकवती वरुणादिलोकादिमती चेति चतुष्टयाधिक्यादमुमुक्षुविषयत्वाच्च तदनुपन्यासः । मन्त्रवर्णस्तु चातुराश्रम्याभिप्रायो वा ऐष्टिकपाशुकसौमिकदार्विहौमिकगत्यभिप्रायो वा ॥ १ ॥ अर्चिराद्यधिकरणं समाप्तम् ।

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ सङ्गतिः स्फुटा, संवत्सरादित्ययोर्मध्यप्राप्तौ वायुदेवलोकौ किमनियतक्रमेण निवेशयितव्यौ ? उत नेति, किं वायुदेवलोकशब्दावर्थान्तरपरौ ? उत नेति, किं देवलोकशब्दस्य देवावासपरत्वं न्याय्यम्, उत वायोर्देवगृहत्वश्रवणानुरोधेन वायुपरत्वं न्याय्यं ? देवावासपरत्वे न्याय्ये तयोः शब्दयोरर्थान्तरपरत्वादनियतक्रमेण निवेशः, वायुपरत्वे सत्यर्थान्तरत्वाभावादनियतक्रमेण निवेशाभावः स्यात् । ( अर्चिरादिनैवेत्यादि ) संशयं वक्तुं विषयं शोधयति ( तत्रेत्यादिना )

छ भावप्रकाशिका छ

'सम्बन्धादेवमन्यत्रापि' इत्येवमादिषु दर्शितत्वादित्यपि द्रष्टव्यम् , ( दार्विहौमिक इति ) दर्विहोम इति कर्मविशेषाणां नाम ॥ छ ॥

इति अर्चिराद्यधिकरणम् ।

1. छा. ४-१५-५ ।

रेवान्तराले देवलोकम् [1]"मासेभ्यो देवलोकं देवलोकादादित्यम्" इति । उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ । तत्र मासादूर्ध्वमभिहितयोः संवत्सरदेवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि "अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङेति मासांस्तान्" इत्यधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात् संवत्सरस्यैव मासादनन्तरं बुद्धौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते । अन्यत्र वाजसनेयिनः "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यादित्यात्पूर्वं वायुमधीयते । कौषीतकिनस्तु "स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्"

---

* श्रुतप्रकाशिका *

श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डाः क्रमप्रमाणानि, तत्र प्रातिपदिकाभिहितो

छ भावप्रकाशिका छ

( श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डाः क्रमप्रमाणानीति ) 'वेदं कृत्वा वेदिं करोति' इति श्रौतक्रमः, 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यादौ अर्थलक्षणप्रयोजनवशात्क्रमः, 'समिधो यजति तनूनपातं यजति' इत्यादौ पाठक्रमेण क्रमः, 'प्राजापत्येषु पशुगणेषु नियोजनोपकरणादिषु पूर्वपूर्वक्रमेण उत्तरोत्तरप्रवृत्तिक्रमः', 'सारस्वतौ भवतः' इति विहितयोः

---

1. बृ० ८-२-१५ ॥

इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधीयते। तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिनां "तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात्पूर्वं प्रवेशो निश्चीयते। अत आदित्यात्पूर्वं संवत्सरादूर्ध्वं देवलोको वायुश्च प्राप्तौ। तत्रेदं चिन्त्यते—किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वानभिगच्छेत ? उतानर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेदिति। किं युक्तं, भिन्नार्थत्वं, प्रसिद्धेः। भिन्नार्थत्वे

* श्रुतप्रकाशिका *

विभक्त्यभिहितश्च श्रौत एवेत्यत्र पञ्चम्यभिहितं संवत्सरदेवलोकयोर्मासादूर्ध्वत्वमविशिष्टं, तत्र संवत्सरस्य मासादूर्ध्वभावित्वे अधिककालानां न्यूनकालोत्तरनिवेशरूपार्थस्वभावोऽधिकहेतुरस्ति, अतो मासानन्तरं संवत्सरप्राप्तिः, तत ऊर्ध्वमादित्यात् पूर्वं देवलोक इति स्थितं, बृहदारण्यके

* भावप्रकाशिका *

सरस्वतीदैवत्यसरस्वद्दैवत्ययोः मुख्ययोः क्रमानुरोधेन तदङ्गभूतानां निर्वापादीनां क्रमः, काण्डक्रमो हि स्थानक्रमः, यथा साद्यस्के 'सह पशूनालभते, इति सहकर्तव्यत्वेन चोदितानामग्नीषोमीयसवनीयानूबन्ध्यानां मध्ये सवनीयस्य स्थानभ्रंशाभावेन तस्यैव पूर्वभावित्वमिति द्रष्टव्यम् ( पञ्चम्यभिहितं संवत्सरदेवलोकयोर्मासादूर्ध्वत्वमिति ) 'मासेभ्यस्संवत्सरं मासेभ्यो देवलोक' मिति पञ्चम्योरध्याहृतोर्ध्वशब्दरूपदिक्छब्दयोगनिमित्तत्वात् पञ्चमीनिमित्तदिक्छब्द एव पञ्चमीशब्देनोपचरित इति द्रष्टव्यम् । ननु नेयं पञ्चमी उर्ध्वादिति दिक्छब्दयोगनिमित्ता, अपि तु 'तेऽर्चिषमभिसम्भवन्ति' इति अनुषक्ताभिसम्भवनक्रियापादानत्वप्रयुक्ता,

**चोर्ध्वशब्देन पञ्चम्या चोभयोः संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वाद्विशेषाभावाच्च यथेष्टम्—**

* श्रुतप्रकाशिका *

अन्यत्रादित्यात्पूर्वं वायुः श्रुतः, कौषितकीवाक्येऽग्नेः परत्वेन वरुणात् पूर्वत्वेन वायुः पाठक्रमसिद्धः, तत्र पाठक्रमात् बलीयसा वाजसनेयकोक्तश्रौतक्रमेण पाठक्रमप्राप्तस्याग्न्यनन्तरत्वस्य बाधितत्वादादित्यात् पूर्व एव वायुः प्राप्तः देवलोकश्च प्राप्तः—तत्र संशय इत्यर्थः। 'मासेभ्यो

छ भावप्रकाशिका छ

अतो नाध्याहृतोर्ध्वशब्दमादायोर्ध्वत्वस्य श्रुतत्वनिर्वाहः। किञ्च क्त्वाश्रुत्यादेः क्रियापौर्वापर्यलक्षणक्रमार्थकत्वात् पञ्चम्या उर्ध्वाधरक्रमे पौर्वापर्यक्रमे वा नानुशासनमस्ति, येनोर्ध्वत्वस्य श्रौतत्वं स्यादिति चेन्न, अभिसम्भवनक्रियाया अपादाननिरपेक्षत्वेन 'तेनोर्ध्वमाक्रमते' इति श्रुत्यन्तरानुसारेण च उर्ध्वशब्दस्यैव अध्याहर्तव्यतया उर्ध्वत्वस्य श्रौतत्वसम्भवादिति तात्पर्यात्। यद्यपि च 'मासेभ्यो देवलोक' मित्यादावभिसम्भवनक्रियापेक्षया अपादानपञ्चमी, तथापि देवलोकाद्यभिसम्भवनक्रियां प्रति नियतपूर्वसत्वरूपकारकविशेषत्वलक्षणापादानत्वस्य पञ्चम्याऽभिधाने क्रियाकारकलक्षणपौर्वापर्यरूपः क्रमोऽभिहितो भवति, ततश्च मासापादानकाभिसम्भवनक्रियाकर्मत्वे संवत्सरदेवलोकयोः कथ्यमाने मासादूर्ध्वत्वं संवत्सरदेवलोकयोरर्थात्सिध्यतीत्यभिप्रेत्य ऊर्ध्वत्वस्य श्रौतत्वमभिहितमिति द्रष्टव्यम्, एवमुत्तरत्रापि द्रष्टव्यम्। यद्वा आतिवाहिकत्वात्तेषां हेतुपञ्चमीत्वपक्षे तेषां पूर्वसत्त्वरूपं हेतुत्वं श्रुत्युक्तमिति द्रष्टव्यम्। हेतौ कथमर्चिरादौ पञ्चमी प्राप्नोति 'विभाषागुणेऽस्त्रियाम्' इति पञ्चमी गुणे हेतावस्त्रीलिङ्गे विहिता, यथा जाड्येन जाड्याद्वा बद्ध इतीति चेत्, अत्र केचित् समादधते, नात्र 'सत्त्वे निविशतेऽपैति' इति लक्षितस्य पारिभाषिकस्य गुणस्य ग्रहणम्, अपितु पराश्रितमात्रस्य ग्रहणम्, तेनार्चिष इत्यादौ हेतौ पञ्चमी सिद्धेति तदतिमन्दम्, यद्यपि परतंत्रस्य गुणस्य ग्रहणम्, तथापि नात्र पञ्चमी प्राप्नोति, अर्चिरादीनां विशेष्यतया स्वतन्त्रत्वेन पराश्रितत्वाभावात्

* श्रुतप्रकाशिका *

देवलोकं देवलोकादादित्य' मिति देवलोकस्यादित्यात् पूर्वत्वं पञ्चम्यभिहितं 'स ऊर्ध्वमाक्रमते' इति वायोरादित्यात्पूर्वत्वं प्रातिपदिकाभिहितं ( विशेषाभावाच्चेति ) यथा—पूर्वं संवत्सरस्य मासानन्तरत्वे पञ्चमीमात्रादधिकोऽधि-

७ भावप्रकाशिका ७

गुणत्वाभावात्, यस्य गुणस्य हि भावादित्यत्र गुणशब्देन यावान् पराश्रयविशेषणभूतो द्रव्यादन्यो जात्यादिरर्थोऽस्ति, स सर्वोऽपि गृह्यत इत्युक्तप्रकाराश्रयणेऽपि अर्चिरादीनां विपरीतत्वेन गुणत्वाप्रसक्तेः, सत्यपि च गुणत्वे अर्चिष इत्यत्र पञ्चमी नानेन प्राप्नोति 'अस्त्रिया'मिति प्रतिषेधात्, अर्चिश्शब्दस्य "इसुसन्तः । अर्चिः स्त्रियां च" इति सूत्रेण स्त्रीनपुंसकयोरनुशासनात् पुल्लिंगता नास्त्येव, अत्रत्यार्चिश्शब्द स्त्रीलिङ्ग एव 'तेऽर्चिषमभिसम्भवन्ति' इति पूर्वत्र निर्देशात्, नपुंसकलिङ्गे तु अर्चिरित्येव द्वितीयैकवचने रूपं स्यात्, अतः स्त्रीलिङ्गः एवार्चिश्शब्द इति 'अस्त्रिया'मिति प्रतिषेधः स्यादेव, नहि परतन्त्रमात्रस्य गुणस्य ग्रहणम्, अपि तु पारिभाषिकस्यैव तदनुरूपत्वेन वृत्यादावुदाहरण-प्रत्युदाहरणयोर्दर्शितत्वात्, यद्यपि यस्य गुणस्य हि भावादित्यत्र पराश्रितस्य भेदकजात्यादेः गुणशब्देन ग्रहणमिति स्थितम्, लोके उपसर्जनं गुण उच्यते, शुक्लादौ च प्रसिद्धतरो गुणशब्दः, वैशेषिकास्तु रूपरसादयश्चतुर्विंशतिर्गुणा इति प्रतिपन्नाः, तथापि इह शास्त्रे 'सत्त्वे निविशते' इत्यादिपरिभाषितस्य गुणस्य ग्रहणम्, यथा वा 'वोतो गुणवचनात्' इत्यत्र कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय इति न्यायात्, तस्मादेवमत्र परिहारः 'विभाषा गुणेऽस्त्रिया' मित्यत्र विभाषेति योगविभागात् गुणवचनादपि हेतोः स्त्रियामपि क्वचित्पञ्चमी भवति, तेन नास्तीह घटः, अनुपलब्धेः, वह्निमान् धूमात्—इत्यादयः प्रयोगा अप्युपपन्ना इत्यलमतिक्षोदेन, ( अन्यत्रेति ) बृहदारण्यक एव प्रदेशान्तर इत्यर्थः ( वायोरादित्यात्पूर्वत्वं प्रातिपदिकाभिहितमिति ) इदमुपलक्षणम्, तेन 'स उर्ध्वमाक्रमते स आदित्यमागच्छति' इति वायुदत्तमार्गस्याप्राप्तौ तृतीयया करणत्वश्रवणात्, नचोर्ध्वदेशाक्रमणमात्रे

इति प्राप्त उच्यते—वायुमब्दात्—इति । वायुं संवत्सरादूर्ध्वमभिगच्छेत् । कुतः ? अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात् । देवलोकशब्दो ह्यविशेषेण सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभिधत्ते । "स वायुमागच्छति तस्मै स तत्र" इति वायुशब्दो विशेषेण वायुमभिधत्ते । अतो देवलोकवायुशब्दाभ्यामविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत् । कौषीतकिनां वायुलोकशब्दश्चाग्निलोकशब्दवत् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते । वायुश्च देवाना-

---

* श्रुतप्रकाशिका *

ककालानां न्यूनकालोत्तरनिवेशो हेतुरुक्तः, तथाऽत्र श्रुतिप्रमाणादधिकं प्रमाणं नास्तीत्यर्थः ।

सिद्धान्तमाह ( वायुमिति ) अविशेषविशेषाभ्यां—सामान्यविशेषाभ्यां, देवलोकशब्दः सामान्यशब्दः, वायुशब्दो विशेषः । लोकपरत्वव्युदासार्थमाह ( वायुश्चासाविति ) उक्तस्यावयवार्थस्य प्रामाणिकत्वं दर्शयति ( वायुश्च देवानामिति ) ननु 'संवत्सरः खलु वै देवानां पूः' इति श्रुत्यनुरोधेन देवलोकशब्दस्य संवत्सरविषयत्वं किं न स्यात्, नैवं– संवत्सरस्य देवपरत्वोक्तेः स्तुतिमात्रत्वात्, वायोर्देवगृहत्वस्य वास्तवत्वादवास्तवप्रहाणेन वास्तवस्वीकारस्य न्याय्यत्वाच्च । ज्योतिर्मयकृत्स्नवैमानिकदेवतागणस्य वायुपाशधृतत्वात् वायोर्देवगृहत्वं हि यथार्थः ।

परे चापरे चाहुः—मासानन्तरमर्थक्रमात् संवत्सरस्तदनन्तरं देवलोकः

* भावप्रकाशिका *

वायुदत्तमार्गस्य करणत्वं श्रुतं, नत्वादित्यमण्डलाक्रमण इति वाच्यम्, उर्ध्वदेशस्य विशेषाकांक्षायाम् आदित्यमण्डलरूपविशेषपर्यवसानादिति

मावासभूत इत्यन्यत्र श्रूयते "योऽयं पवत एष देवानां गृहा" इति ॥ २ ॥

वाय्वधिकरणं समाप्तम् ।

* श्रुतप्रकाशिका *

तदनन्तरं वायुरिति 'वायुगब्दा' दिति सूत्रनिर्देशः छान्दोग्यश्रुत्यपेक्षः, तत्र संवत्सरस्य पठितत्वादिति, तदयुक्तं, देवलोकवायुशब्दयोः सामान्यविशेषरूपेणैकार्थत्वे सम्भवत्यर्थभेदकल्पनानुपपत्तेः, देवलोकादूर्ध्वं वायोर्निवेशे सति 'देवलोकादादित्य' मिति श्रौतक्रमभङ्गश्च देवलोकस्य सूत्रेणानिरूपितत्वं च स्यात्, वायोरब्दादूर्ध्वं निवेशपरत्वादस्य सूत्रान्तराणावाच्च, संदिग्धेऽर्थे न्यायश्च वक्तव्य एव 'स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' 'देवलोकादादित्य' मिति श्रौतक्रमसाम्यात् भवति च संशयः, वायुदेवलोकयोरेकत्वे च न संशयसम्भवः, अत एव 'अविशेषविशेषाभ्या' मिति सौत्रपदस्य वायोरग्न्यानन्तर्ये शाब्दक्रमविशेषाभावादादित्यात् पूर्वत्वे ऊर्ध्वशब्देन विशेषावगमाच्चेति व्याख्यानमप्ययुक्तम्, अतो यथाभाष्यमेव सूत्रार्थः ।—अन्यैस्तु वायुः किमग्नेरुपरि निवेशयितव्यः ? उत संवत्सरस्योपरि ? उतादित्यस्याधस्तादिति संशय उक्तः । तदचतुरम्, अग्नेरानन्तर्यपक्षस्तावन्मन्दः, तस्य पाठक्रमप्रतिपन्नस्य श्रौतक्रमेण स्फुटबाधात्, संशयशिरोन्तरद्वयन्तु वायुदेवलोकयोरेकत्वेऽनुत्थितं स्यात्, अतः पृथक्त्वैकत्वे संशयितव्ये, एकत्वे नियमेन वायुप्राप्तिः, पृथक्त्वे विकल्पेन प्राप्तिश्च फलम्, अतः सहेतुकः सफलः संशयो

* भावप्रकाशिका *

द्रष्टव्यम्, ( अनन्तरं वायुरितीति ) 'देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोक' मिति पाठक्रमात् अर्चिरनन्तरमेव वायोर्निवेश इति पूर्वः पक्षः, 'स वायुमागच्छति तस्मै स तत्र परिजिहीते' इति वायुप्रत्तेन मार्गेण आदित्यगमनश्रवणात् कौषीतकिपाठक्रमं बाधित्वा आदित्यात्पूर्वं वायोर्निवेश इति सिद्धान्तः, सूत्रमप्यादित्यात्पूर्वं वायोर्निवेशपरम्,

## तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

३ अधिकरणम् कौषीतकिनां [1]"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इत्यत्राग्निलोकशब्दस्यार्चिः-पर्यायत्वेन प्राथम्यमविगीतम् । वायोश्च संवत्सरा-

---

* श्रुतप्रकाशिका *

भाष्योक्त एव ज्यायान् ॥ २ ॥

वाय्वधिकरणं समाप्तम् ।



तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ किं वरुणादयो यथापाठं निवेशयितव्याः ? किं विद्युतोऽधीति, किं वरुणस्य विद्युत्सम्बन्धानुरोध उपपन्नो नेति, अनुपपत्तौ यथापाठं निवेशः, उपपत्तौ विद्युतोऽधिनिवेशः, कौषीतकिनामित्यादिना वक्ष्यमाणार्थवैशद्याय पूर्वोक्तार्थं द्रढयति, तत्रार्चिषः प्राथम्ये वायोः संवत्सरात् पूर्वत्वे आदित्यस्य वायोरूर्ध्वत्वे च कौषी-

* भावप्रकाशिका *

नत्वब्दानन्तर्यपरमिति वदन्तीति भावः ॥ ७ ॥

इति वाय्वधिकरणम् ।



भाष्ये—अग्निलोकशब्दस्यार्चिःपर्यायत्वेनेति, अर्चिश्शब्देन ज्वालावाचिना तदात्मकोऽग्निरुच्यते उपचारादिनेति भावः, नन्वत्र 'इसुसोस्सामर्थ्ये नित्यं समासेऽनुत्तरपदस्थस्य' इति षत्वप्राप्त्या अर्चिष्पर्यायत्वेनेति भवितव्यम्, यथा– सर्पिष्कुण्डिका शोचिष्केशः–इत्यादि, 'अर्चिशुचिविस्त्विच्छादिभ्य इसिः' इति शोचिरादिवत् अर्चिश्शब्दोपि इसिप्रत्ययान्तो व्युत्पादित इति चेत्, अत्राभिधीयते— 'अतः कृकमिकंसे'त्युत्तरसूत्रे कंसग्रहणेन उणादिषु

---

1. कौ० १-अ० ३ ॥

दूर्ध्वं निवेश उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन "देवलोकादादित्यमादित्याच्चन्द्रमसम्" इति वाजसनेयकोक्तश्रुतिक्रमाद्देवलोकशब्दाभिहिताद्वायोरुपरि निवेशः सिद्धः । इदानीं वरुणेन्द्रादिषु चिन्ता ।

* श्रुतप्रकाशिका *

तद्विवाक्याविगानं विगीतविषये तस्य दौर्बल्यं चाह निरूपितांशनिरूपणीयांशप्रदर्शनार्थेन कौषीतकिनामित्यादिना, ( आदित्यस्यापीति ) अत्र– कौषी-

* भावप्रकाशिका *

क्वचिद्व्युत्पत्तिकार्यं न भवतीति ज्ञापनेन इसिप्रत्ययान्तत्वाभावादिति वा कस्कादिषु सर्पिष्कुण्डिकेत्यादिपाठेन इदं षत्वमनित्यमिति ज्ञापनेन वा अर्चिश्शब्दस्याऽत्र शब्दस्वरूपपरतया अमुख्यत्वाद्गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति वा महत्पूर्वश्शूद्र इत्यादावात्वादिवत् षत्वं न भवतीति, एवमुत्तरत्रापि अर्चिःप्रभृतिष्वित्यादौ द्रष्टव्यम् । तृतीयस्तु परिहार उत्तरत्र न सम्भवति, अर्थपरत्वेन तत्र मुख्यत्वादिति अर्चिष्प्रभृतिष्वित्येव बहुषु कोशेषु पाठो दृश्यते तत्र न किञ्चिद्यत्नसाध्यं 'अर्चिश्शब्दस्य गौणत्वादिसश्चाप्रत्ययत्वतः । अनित्यत्वाच्च मूर्धन्यो न कृतोऽर्चिःपदेऽमुना ' इति च संग्रहश्लोकः। भाष्ये—आदित्यस्याप्यत्रेत्यादि, अयमर्थः— पाठात्प्राप्तक्रमः पाठक्रमः, 'अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोक'मिति पाठवशेन वायोर्वरुणस्य यः क्रमः प्राप्तः, तद्बाधेन विद्युत उपरि तेषां निवेशसमर्थनेन वाजसनेयश्रुत्यनुसारादादित्यस्य वायोरुपरि निवेशोऽस्मिन्नधिकरणे सिषाधयिषित इत्यर्थः। आशंसायां क्तः, देवलोकशब्दाभिहितात् वायोरुपरि निवेशस्सिद्ध इति क्वचित्पाठः, तत्र उपरिशब्दयोगे 'षष्ठ्यतसर्थप्रत्ययेन' इति प्राप्ता षष्ठी— ततः पश्चाद् व्रजतीति महाभाष्यप्रयोगेणानित्यत्वज्ञापनात् क्वचिन्न सम्भवतीति न कृतेति द्रष्टव्यम् । वायुमपेक्ष्येत्यर्थविवक्षया ल्यब्लोपे पञ्चमीति वा द्रष्टव्यम् , एवमुत्तरत्रापि– भाष्ये इदानीं वरुणेन्द्रादिष्विति, तदर्थमिति

किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः? आहोस्विद्विद्युतोऽधीति विशये, अर्चिः–प्रभृतिषु सर्वेषु "अर्चिषोऽहः" इत्यादि श्रुतिक्रमोपरोधाद्विद्युतः परस्ताच्च "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ चोपदेशावैयर्थ्यायावश्यं कस्यचिद्बाध्यत्वे पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः। वाय्वादित्ययोः क्रमस्य बाधितत्वेन इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्यौ–

इति प्राप्ते उच्यते–तडितोऽधिवरुणः–इति। वरुणस्तावद्विद्युत उपरिष्टान्निवेशयितव्यः? कुतः सम्बन्धात्– मेघोदरवर्तित्वाद्विद्युतो वरुणेन सम्ब-

* श्रुतप्रकाशिका *

तक्किवाक्ये (उपदेशावैयर्थ्यायेति) क्रमिबाधादपि क्रमबाधो न्याय्य इति भावः। (इन्द्रप्रजापती अपि ह्यत्रैव निवेशयितव्याविति) वरुणे वाय्वनन्तरे सति इन्द्रप्रजापत्योरन्यत्र निवेशे क्रमद्वयभङ्गः स्यात्, तस्मादेकक्रमभङ्गेन तयोरपि क्रमिणोः सावकाशत्वं युक्तमिति भावः।

(वरुणस्तावदित्यादि) विद्युच्च वरुणाभिमानविषयं जलं च मेघोदरस्थं तत्र विद्युतः स्फुटतरदृश्यत्वात् सलिलस्य तथा दृश्यत्वाभावाच्च सलिलस्य विद्युन उपरि स्थितिर्गम्यते, एवमभिमानविषययोः सम्बन्धानुरूपमभिमानिदेवतयोरपि

ॐ भावप्रकाशिका ॐ

शेषः (क्रमद्वयभङ्गः स्यादिति) आदित्यचन्द्रयोरन्तराले चन्द्रविद्युतोरन्तराले वा निवेशे आदित्याच्चन्द्रमसं चन्द्रमसो वा विद्युतम्, इतिश्रौतक्रमस्य च 'वरुणलोकं स इन्द्रलोकं स प्रजापतिलोक'मिति पाठक्रम-

न्धो लोकवेदयोः प्रसिद्धः । एतदुक्तं भवति—वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधिवरुणो निवेशयितव्यः । ततश्चामानवस्य गमयितृत्वं व्यवधान-

* श्रुतप्रकाशिका *

सम्बन्धो न्यास्य इति तडिदभिमानिन ऊर्ध्वं जलाभिमानी वरुण इति भावः । किञ्च द्युपर्जन्यपृथिवीक्रमेण पर्जन्यः स्वर्गादनन्तरस्थः तडिच्चतोऽप्यधस्तात्, तडित्पुरुषस्योपरि वरुणो मेघोदरे । तडित्सम्बन्धोऽस्तु तेन पाठक्रमं बाधित्वा कथं तडिदुपरि वरुणनिवेशः कथं वेन्द्रप्रजापत्योस्तत्रावकाश इत्यत्राह ( एतदुक्तमिति ) अर्थक्रमस्य पाठक्रमात् बलीयस्त्वेन वरुणस्य तडिदुपरि निवेशः कौषीतकिपाठक्रमानुरोधात् आगन्तूनामन्ते निवेशयितव्यत्वरूपान्मीमांसासिद्धन्यायाच्चेन्द्रप्रजापत्योर्वरुणोपरि निवेशः । तडितो गमयितृत्वा-

* भावप्रकाशिका *

प्राप्तस्य वरुणेन्द्रप्रजापतीनामानन्तर्यस्य च भङ्गप्रसङ्गादित्यर्थः । तडिच्चतोप्यधस्तादिति पञ्चमी पूर्ववत् द्रष्टव्या । ( कथं तडिदुपरि वरुणनिवेश इति ) ननु कथमत्र समासः, अन्यारादिति दिग्योगलक्षणपञ्चम्याः 'षष्ठ्यतसर्थप्रत्ययेने' ति षष्ठ्या बाधात् अबाधेपि पञ्चम्यन्तस्य समासप्राप्त्यभावात् षष्ठीपक्षे पूरणगुणेत्यव्ययेन षष्ठ्यन्तस्य समासनिषेधात्, उच्यते—षष्ठीसमास एवायम्, पूरणगुणेति निषेधस्तु सत्तव्याभ्यां कृद्भ्यां साहचर्यात् कृदन्तेनाव्ययेनैव, नान्येन, यथा कटस्य कर्तुं कटस्य कृत्वेत्यादि, तथैव वृत्त्यादावुदाहृतत्वात्, अकृदन्ताव्यययोगे तु समासोऽस्त्येव, अत एव भगवान् पाणिनिः निरदिशत् 'अनुर्यत्समया' इति, व्याख्यातं च वृत्तिकारादिभिः यस्य समया यत्समयेति, उपायान्तरमप्यस्तीति तद्व्याख्यातृभिरन्यथा परिहृतः, अनित्यश्चायं समासप्रतिषेध इति पूर्वमसकृदुपपादितम् "शिष्टप्रयोगबाहुल्यात् कृदन्ताव्ययसंग्रहात् । अनित्यत्वाच्च तस्यैव निर्देशास्साधवो मताः'। ( अर्थक्रमस्य पाठक्रमादिति ) मेघोदरवर्तित्वलक्षणसामर्थ्यरूपार्थक्रमस्येत्यर्थः ( तडितो गमयितृत्वाव्यवधानायेति ) ततश्चन्द्रमसो विद्युतमिति श्रौतक्रमभङ्गोऽपि

सहमित्यवगम्यते। तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्यनिवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वादागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति ॥ ३ ॥

वरुणाधिकरणं समाप्तम्।

---

* श्रुतप्रकाशिका *

व्यवधानाय वरुणस्तडितः पूर्वं निवेश्यः, तथा सति मेघोदरसम्बन्धरूपार्थक्रमोऽपि स्यादिति चेन्न, तथा सतीन्द्रप्रजापत्योर्यथापाठं वरुणतडिन्मध्यनिवेशेऽर्थक्रमभङ्गात् तडिदानन्तर्ये वरुणेन्द्रप्रजापतीनां पाठक्रमभङ्गप्रसङ्गः, तस्मा-

* भावप्रकाशिका *

सोढव्य इति भावः (तथासतीन्द्रप्रजापत्योर्यथापाठमिति) 'स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति पाठानुसारेण त्रयाणामव्यवधानसिद्ध्यर्थं तडितः पूर्वं त्रयाणां निर्देशेऽङ्गीक्रियमाणे मेघोदरवर्तित्वरूपार्थक्रमभङ्गप्रसङ्गादित्यर्थः। (तडिदानन्तर्य इति) वरुणानन्तरं तडित् तत इन्द्रप्रजापती इत्यभ्युपगम्यमाने कौषीतकिपाठसिद्धस्य वरुणेन्द्रप्रजापतीनां क्रमस्य भङ्गप्रसङ्गादित्यर्थः। अतः क्वचित्कोशेषु 'स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति वरुणेन्द्रलोकयोर्मध्ये आदित्यलोकपाठो दृश्यते, स तु न प्रामाणिकः, केषुचित्कोशेषु तथा अनुदाहृतत्वात्, अस्यैव श्रुतप्रकाशिकाग्रन्थस्य साक्षित्वाच्च, तथाहि पाठे सति एतदधिकरणपूर्वपक्षसिद्धान्तयोः असङ्गतिप्रसङ्गाच्च, तथाहि यदि वरुणलोकानन्तरमादित्यः पठितः स्यात्, तर्हि वरुणेन्द्रप्रजापतीनां त्रयाणामप्यादित्यात् पूर्वत्वमिति पूर्वपक्षस्य कथमुत्थितिः, अत्रहि वायुलोकं वरुणलोकमिति पाठक्रममवलम्ब्य वायुलोकानन्तर्यं वरुणलोकस्य वदन् पूर्वपक्षी कथं तुरगारूढस्य तुरगविस्मरणन्यायेन वायुलोकादित्यलोकयोः पाठप्राप्तं क्रममादित्यलोकेन्द्रलोकयोः पाठप्राप्तं क्रमं चानादृत्य त्रयाणामादित्यात्पूर्वं निवेश इत्याक्षिपेत्, नच वाय्वादित्ययोरानन्तर्यस्य बाधितत्वात् तत्रैव निवेशनीयानां निवेश इति वाच्यम्, 'आदित्याच्चन्द्रमस'